श्रीमन्महाराजाधिराजश्रीप्रतापसिंहसाहप्रणीतः

# पुरश्चर्यार्णवः

## (द्वितीयो भागः)

कुलपतेः प्रो. बिन्दाप्रसादमिश्रमहोदयस्य प्रस्तावनया विभूषितः



सम्पादकः
डॉ. राजनाथत्रिपाठी

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वाराणसी

YOGATANTRA - GRANTHAMĀLĀ
[ Vol . 34 ]

# PURAŚCARYĀRṆAVAḤ

OF

ŚRĪ PRATĀPA SINGH SĀHA
[ PART TWO ]

*FOREWORD BY*

**PROF. BINDA PRASAD MISHRA**
VICE - CHANCELLOR

*EDITED BY*

**DR. RĀJANĀTHA TRIPĀṬHĪ**
**Ex-Reader, Sāṅkhya-Yoga-Tantrāgama Department**
Sampurnaṇand Sanskrit Vishvavidyalaya
Varanasi




VARANASI
2013

*Research publication Supervisor--*
**Director, Research Institute**
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi.

**ISBN : 81-7270-250-7 (Set)**
**ISBN : 81-7270-252-3(Vol.2)**



*Published by----*
**DR. PADMAKAR MISHRA**
***Director, Institute of Academic, Research & Publication***
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi- 221002



*Available at--*
**Sales Department,**
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi- 221002.



**First Edition :** 500 Copies
**Price :** Rs. 366.00



*Printed by--*
**Ashirvad Printing Press**
Meerapur Bashahi, Varanasi

योगतन्त्र-ग्रन्थमाला

[ ३४ ]

श्रीमन्महाराजाधिराजश्रीप्रतापसिंहसाहप्रणीतः

# पुरश्चर्यार्णवः

[द्वितीयो भागः]

कुलपतेः प्रो. बिन्दाप्रसादमिश्रमहोदयस्य प्रस्तावनया विभूषितः

सम्पादकः
**डॉ. राजनाथत्रिपाठी**
उपाचार्यचरः, सांख्ययोगतन्त्रागमविभागस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये, वाराणस्याम्




वाराणस्याम्

२०७० तमे वैक्रमाब्दे १९३५ तमे शकाब्दे २०१३ तमे खैस्ताब्दे

*अनुसन्धान-प्रकाशन-पर्यवेक्षकः—*
**निदेशकः, अनुसन्धान-संस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी ।

**ISBN : 81-7270-250-7 (Set)**
**ISBN : 81-7270-252-3(Vol.2)**

❑

*प्रकाशकः—*
**डॉ० पद्माकरमिश्रः**
***निदेशकः, शिक्षण-शोध-प्रकाशन-संस्थानस्य***
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी- २२१००२

❑

*प्राप्ति-स्थानम्—*
**विक्रय-विभागः,**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी-२२१००२

❑

**प्रथमं संस्करणम् :** ५०० प्रतिरूपाणि
**मूल्यम् :** ३६६.००रूप्यकाणि ।

❑

*मुद्रकः—*
**आशीर्वाद प्रिंटिंग प्रेस**
मीरापुर बसहीं, वाराणसी ।

# प्रस्तावना

पिनाकफणिबालेन्दुभस्ममन्दाकिनीयुता।
पवर्गरचिता मूर्तिरपवर्गप्रदास्तु नः।।
अदृष्टविग्रहाच्छान्ताच्छिवात्परमकारणात् ।
ज्ञानरूपं विनिष्क्रान्तमनवच्छदनं महत् ।।
अदृष्टविग्रहाच्छान्ताच्छिवात्परमकारणात् ।
ध्वनिरूपं विनिष्क्रान्तं शास्त्रं परमदुर्लभम् ।।
अमूर्ताद् गगनाद्यावन्निर्घातो जायते महान् ।
शान्तात् संविन्मयत्वाच्च शास्त्रं शब्दाख्यमुच्यते।।
सर्वे वर्णात्मका मन्त्रास्ते च शक्त्यात्मकाः प्रिये।
शक्तिस्तु मातृका ज्ञेया सा च ज्ञेया शिवात्मिका।।

इत्यादिशास्त्रवचनैः मन्त्रस्वरूपस्य ज्ञानोत्पत्तौ हेतुत्वं चीयते। परापश्यन्तीमध्यमा-वैखरीध्वन्युपाधिनोपहितः शब्दः, शब्दार्थसम्बन्धस्वरूपा शक्तिः, समस्तोऽपि व्यवहारात्मकोऽर्थः शिव एव।

शब्दजातमशेषं तु धत्ते शङ्करवल्लभा।
अर्थस्वरूपमखिलं धत्ते मुग्धेन्दुशेखरः।। इति।

आभ्यां शक्तिशिवाभ्यां प्रवृत्तो नानाव्यवहारात्मको लोकः प्रकाशविमर्शाख्य-शक्त्या शक्तिमान् भूत्वा चितेः प्रकाशमभिधाय शास्त्रस्वरूपतां धत्ते। एतदनु-सारिसाधनानुष्ठानद्वारा परमात्मसाक्षात्कारेणानावृतपरिपूर्णानन्दानुभवस्थैर्यम् । अत्र चितावेव साधनधना योगिनः, तत्त्वज्ञा मनीषिणः, जगन्मान्या आप्तपुरुषा मान्या मानवतायाः।

निगमागमप्रामाण्योपजीवकान्येव वचांसि श्रोतव्यानि मन्तव्यानि निदिध्या-सितव्यानि च भवन्ति। तदुक्तं शास्त्रे—

आगमो ज्ञानमित्युक्तं ह्यनन्ताः शास्त्रकोटयः।।

यतश्च तन्त्रागमसाधनरूपज्ञानस्य साक्षाच्छिव एव प्रयोजकः कर्ता, शक्तिश्च प्रयोज्यकर्त्री, उभयसमन्वितमेव तन्त्रागमशास्त्रं सर्वविध-लोक-परलोक-कल्याणाय सुगमो युगानुरूपः पन्थाः। तदुक्तमिह शास्त्रे—

**यत्रास्ति योगो नहि तत्र भोगो यत्रास्ति भोगो न हि तत्र योगः।**
**श्रीसुन्दरीसाधनतत्पराणां योगश्च भोगश्च करस्थ एव।।**

किञ्च 'विना ह्यागममार्गेण कलौ नास्ति गतिः प्रिये'।। अतोऽद्य अश्वमेध-दर्श-पूर्णमासादिवैदिकानुष्ठानानां दुर्लभतां गते तन्त्रागमानुष्ठानमेव सर्वत्राद्रियते अनुष्ठीयते च। नाद्य क्वचित् तन्त्रागमवर्त्मोपदिष्टानुष्ठानसाधनविरहितोपायः। वैदिकतान्त्रिकमन्त्रैरनुष्ठीयमानो देवोऽनुष्ठानफलदाने सदा समर्थः, शक्तश्च जायते। फलेच्छारहितमनुष्ठातारं शिवशक्तिः स्वामोघकृपाप्रसादेनानुगृह्णाति। फलाकांक्षिण इह नानाविधधान्यैश्वर्यस्वास्थ्यादिप्रसादसुखमुपभुज्य मुक्तिरूपं परत्र फलमप्यश्नुवन्ति—'इह लोके सुखं भुक्त्वा चान्ते सत्यपुरं ययौ', 'भुक्तिं मुक्तिं च विन्दति' इति वचनेन। ततो दुर्गासप्तशत्याम् -

**सर्वस्य बुद्धिरूपेण जनस्य हृदि संस्थिते।**
**स्वर्गापवर्गदे देवि नारायणि नमोऽस्तु ते ।।**

इत्यनेन तथा सुरथसुमेधयोश्च स्वेष्टवरप्रदानेन तन्त्रागममार्ग एवाद्य निर्विघ्नः सामग्रीबाहुल्यरहितः आशुसिद्धिकरः पन्थाः।

पुरश्चरणं नाम मन्त्रदेवतयोः अनुकूलो व्यापारः। मन्त्रकर्तृकत्राणकर्मको हि व्यापारस्तदनुष्ठानम्। 'मन्त्रमूला हि देवता', 'शब्दमात्रं हि देवता' इत्यादिशास्त्र-प्रामाण्येन वैदिके तान्त्रिके हि मार्गे क्रियाविशेषः अनुष्ठानम्। तदुक्तं शास्त्रे—

**जपो होमस्तर्पणं च सेको ब्राह्मणभोजनम्।**
**पञ्चाङ्गोपासनं लोके पुरश्चरणमिष्यते।।**

तथा च—

**पञ्चाङ्गोपासनं लोके शाक्तवैष्णवभेदतः।**
**पुरश्चरणमित्युक्तं शिवेन परमात्मना।।** इत्यादि।

स्वानुकूलमन्त्रस्य दीक्षां विधाय गुरोराज्ञया निश्चिते स्थाने मण्डपे वा पुरश्चरणमनुष्ठेयम्। पुरश्चरणं विना मन्त्रदेवतयोः सिद्धिः (प्राप्तिः) असम्भवा, तस्मादुक्तं गुरुभिः—

**जीवहीनो यथा देही सर्वकर्मसु न क्षमः।**
**पुरश्चरणहीनोऽपि तथा मन्त्रः प्रकीर्तितः।।**

पुरश्चर्यार्णवस्य द्वितीये भागे पुरश्चरणस्यादौ कर्तृत्वं प्रदर्शितं तदनु विविधा

न्यासा:, पीठस्थापनम्, आवरणपूजनम् , शुभाशुभस्वप्नदर्शनम्, अशुभस्वप्नानां शान्तेरुपाया:, वर्णमयी दीक्षा, कलावती दीक्षा, वेधमयी दीक्षा, पञ्चायतनी दीक्षा अन्याश्च विविधा दीक्षा: निगदिता:।

उक्तञ्च रुद्रयामले तन्त्रे वेदमारभ्य तन्त्रागमसमन्विता मन्त्रा: सत्यानुष्ठानेन सिद्ध्यन्ति। अन्यच्च भगवत: शिवस्य वाहनं नन्दी । आनन्दयतीति नन्दी वृषभ:। वृषभो वर्षणात्, शिवमन्दिरेषु शिवाभिमुखो वृषभ: शिवाभिमुखस्य जीवस्य प्रतीक:। तत्कण्ठे निबद्धा घण्टिका शिवं वहता यदा कण्ठं प्रचाल्यते तदा अव्यक्तो ध्वनिरुत्पद्यते। स एव ध्वनि: शाबरमन्त्र इति। किञ्च—

'मन्त्राख्यं तु महाज्ञानमीशानात्तु प्रकाशितम्' ।। इति स्वच्छन्दतन्त्रवचनेन सर्वा हि मन्त्रराशि: शिवादेव स्फुल्लिङ्गवत् उच्छ्रिता जायते इत्यत्र नास्ति शङ्कापङ्काकलङ्क:। अत उक्तं पुरश्चर्यार्णवे—

**वेदादिशाबरान्तानां मन्त्राणां सिद्धिहेतवे।**
**पुरश्चरणीयत्वात् पुरश्चरणमुच्यते।।** इति।

इह पुरश्चर्यार्णवस्य सप्तमतरङ्गे पुरश्चरणसिद्धे: किं लक्षणमिति जिज्ञास्यमाने उक्तम्—

**अथात: संप्रवक्ष्यामि मन्त्रसिद्धेस्तु लक्षणम् ।**
**मनोरथानामक्लेशे सिद्धेरुत्तमलक्षणम् ।।**
**मृत्यूनां हरणं तद्वद्देवतादर्शनं तथा।**
**प्रयोगानामक्लेशसिद्धि: सिद्धेस्तु लक्षणं तथा।।** इत्यादि।

एवं बहुविधप्रीतिप्रमोदप्रसादसिद्धये मन्त्रपुरश्चरणं कारणत्वेनाभिमन्यते। मन्त्रपुरश्चरणानुष्ठानेन लौकिकसिद्धिरेव न भवति। अनेनैव पथा परमपदाख्यमोक्षोऽपि प्राप्यते। तदुक्तम् —

**तस्मात्सिद्धिर्दृढीकृत्य भजेन्नृहरिपादुकाम् ।**
**अखण्डैकरसानन्दं तत: प्राप्नोति नान्यथा।।** इति।

एवं नानापुरश्चरणभेदा:, सिद्धेरुपाया:, जपप्रकार:, वर्णौषधीनां प्रयोगा: प्रतिपादिता:, मन्त्रभेदेन पुरश्चरणभेदोऽपि प्रदर्शित:।

द्वितीयभागस्यावसानिकेऽष्टमतरङ्गे गणेशादिमन्त्रपुरश्चरणान्युक्तानि। भगवत: विष्णोस्तदवताराणाञ्च साधनानि क्रमशो निरूपितानि। राम-कृष्ण-शिवादीनां

मन्त्रपुरश्चरणं प्रतिपाद्य चतुस्तरङ्गान्तोऽयं भागः पुटीकृतः।

एतत्तन्त्रागमीयोपासनाविधौ नेपालदेशीया नैके विद्वांसोऽद्यापि प्रवृत्ताः सन्ति। काश्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य विद्वद्भ्योऽधीत्य अन्यत्र देशेषु अध्यापयन्ति। परम्परामिमां प्रचारयन्ति।

पूर्वमयं ग्रन्थो भागत्रयात्मकस्तत्कालीननेपालनरेशाज्ञया केनचित् मुरलीधर-झाविदुषा प्रकाश्यतां नीतः। स चेदानीमत्र विश्वविद्यालये सांख्ययोगतन्त्रागम-विभागे पूर्वोपाचार्येण **डॉ. राजनाथत्रिपाठिशर्मणा** पाठभेदटिप्पणीभिर्मण्डितोऽयं ग्रन्थः प्रकाश्यतां नीयते। त्रिपाठिवर्यान् साधुवादैः सभाजयामि।

शिक्षण-शोध-प्रकाशन-संस्थान-निदेशकः **डॉ. पद्माकरमिश्र**स्तदनुयायिनश्च सततप्रकाशनपराः नूनं धन्यवादार्हाः। अतः सर्वेभ्यः साधुवादान् प्रदाय विरमामीति शम् ।

**वाराणस्याम्**
श्रावण-पूर्णिमायाम्,
२०७० तमे वैक्रमाब्दे

**(प्रो॰ बिन्दाप्रसादमिश्रः)**
कुलपतिः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

# उपोद्‌घातः

इह पुरश्चर्यार्णवे किल प्रथमभाग इव द्वतीयभागेऽपि वर्तन्ते पञ्चम-षष्ठ-सप्तम-अष्टमतरङ्गा इति दीक्षा-पुरश्चरण-मन्त्रसिद्धिलक्षणपुरश्चरणभेदजुष्टाः। 'दीक्ष-भावे-' स्त्रिलिङ्गे दीक्षते इति दीक्ष। अत्रायं शब्दो नियमे, उपनयनसंस्कारे, तदुपदेशे, यागाङ्गे, द्वादशसंरव्यायाममितार्थे च प्रयुज्यते। तन्त्रागमे तु दीक्षा- शब्दः अभीष्टदेवतामन्त्रग्रहणे प्रयुज्यते। तदुक्तन्तन्त्रे—

**दीयते विमलंज्ञानं क्षीयते कर्मवासना।**
**तेन दीक्षेति सा प्रोक्ता मुनिभिस्तन्त्रवेदिभिः।।**

वेदे कात्यायनश्रौतसूत्रे चाह[१]—'द्वादशदीक्षा' 'अत्राग्नियोगे भवति'' इति कर्काऽऽचार्योऽपि वक्ति। आपस्तम्बश्च 'अपरिमिता वा' द्वादशसंख्यातोऽतिशयेनाधिक-संख्या वा दीक्षाः भवन्ति। परिशिष्टकारस्तु 'अपरिमितप्रमाणाद्वा भूय' इति व्युत्पादयति। अतश्चत्वारो दीक्षापक्षाः भवन्तीति। शास्त्रान्तरेषु च 'दशाहमपरार्ध्यं दीक्षितो भवति 'मासं सम्वत्सरमित्यादि' कर्काचार्येणोक्तम् । एवं मलगासे— क्षयमासे चापि दीक्षा न देया। उक्तञ्चागस्त्यसंहितायाम्—

**यदा ददाति सन्तुष्टः प्रसन्नवदनो मनुम् ।**
**अयमेव तथा चैवमिति कर्तव्यताक्रमः।।**
**विशुद्धदेशकालेषु शुद्धात्मा नियतो गुरुः।**
**संकल्पोक्तञ्च कर्तव्यमङ्कुराऽऽरोपणं मुने ।।** इत्याद्युकत्वाऽग्रे—

दीक्षामासाः—

मधुमासे भवेद्दुःखं माधवे रक्तसञ्चयम् ।
मरणं भवति ज्येष्ठे आषाढ़े बन्धुनाशनम् ।।
समृद्धिः श्रावणे नूनं भवेद् भाद्रपदे क्षयः।
प्रजानामाशिविने मासे सर्वतः शुभमेव हि।।
ज्ञानं स्यात्कार्तिके सौख्यं मार्गशीर्षे भवत्यपि।
पौषे ज्ञानक्षयो माघे भवेन्मेधादिवर्द्धनम् ।।
फाल्गुने च विवृद्धिः स्यान्मलमासं विवर्जयेत् ।। इति।

**दिनानि–** रवौ गुरौ दिने शुक्रे कर्तव्यं बुधसोमयोः।।
**नक्षत्राणि–** अश्विनी भरणी स्वाती विशाखाहस्तभेषु च ।

---

१. कात्यायन श्रौतसूत्रे— ७/१/२९

इत्थं शास्त्रान्तरेषु, ग्रन्थेषु, परम्परासु च दीक्षाविधानं प्रोक्तम् , इह पुरश्चर्यार्णव—ग्रन्थे द्वितीयभागस्य पञ्चमतरङ्गे हि दीक्षा कथं केन कदा वा कार्या, तस्याः को नियम इति पद्धतिरूपेण गुरुणा वा दीक्षा देया शिष्येण ग्राह्या च इति विस्तरेण प्रतिपादितम् । किञ्च नानोपचारभेदां, सुस्पष्टां सूक्ष्मां च दीक्षा तद् विधानं च वर्णयित्वा मन्त्राहुतीन् विज्ञापितम् । एवमुपास्यदेवताया अधिवासनं विधाय अध्वशोधनं, देवताक्षमापनं, शिष्यैर्गुरोः प्ररस्परं प्रणामाशीर्वादः, अभिषेकादिकं च निर्वर्तनीयमिति प्रतिपाद्य सामान्य- दीक्षाविधिः सम्पद्यते। अतः परं वर्णमयीदीक्षा, कलावती-दीक्षा, वेधमयीदीक्षा, पञ्चायतनीदीक्षा, आणवी—शाक्तेयीदीक्षाभेदान् निरूप्य स्मार्ती- मानसी-यौगी-, दृगदीक्षाः, स्पर्शदीक्षा-वाचिकीदीक्षा, मान्त्री-होत्री- अभिषेचिकी शाम्भवी- उपदेशदीक्षा-क्रमदीक्षा-पूर्णाभिषेकदीक्षा- प्रभृतयो दीक्षाभेदाः पञ्चमतरङ्गे निगदिताः।

षष्ठतरङ्गे हि दीक्षानन्तरं पुरश्चरणमुक्तम् । पुरश्चरणस्वरूपं, पुरश्चरणकालः, पुरश्चरणस्थानानि, भक्ष्यादिनियमाः, आसनानि, माला-मालाभेदाश्च, रुद्राक्षभेदाः, मालाग्रथनप्रकारः— संस्कारश्च-करमालाभेदाश्च मुद्रास्तद्भेदाः, पुरश्चरणे नियमाः, पुरश्चरणे वर्ज्यानि, प्रायश्चित्तानि, भूमिपरिग्रहः, क्षेत्रपालाः, कूर्मादिचक्राणि, पीठस्थापनम्, प्रातः कृत्यं— अजपाविधिः, दन्तधावनम् , स्नानं, विभूतिधारणं, सन्ध्या, तर्पणं, नित्यपूजा, नित्यहोमः, पुरश्चरणसंकल्पः, पूजापात्राणि, यन्त्रप्रतिष्ठापनं, यन्त्रलेखनं, मन्त्रः, मन्त्राणां चैतन्यं, कुल्लुकादिभेदाः, निर्वापणं, जिह्वाशोधनं, मन्त्रावयवः, जपः, तर्पणादयो विषयाः सम्भारेण ग्रन्थे निरूपिताः।

अत्र षष्ठतरङ्गे दीक्षाविधानं प्रायशो विस्तरेणोक्तम्, मध्ये-मध्ये तत्र-तत्र संक्षेपेणापि निर्दिष्टं विद्यते। एवं प्रायशः पुरश्चरणानि मन्त्रमहार्णाव-मन्त्रमहोदधि-शाक्तानन्दतिरङ्गिणी-प्राणतोषिणी प्रभृति ग्रन्थेभ्यः स्पष्टं सर्वमुक्तमिति पुरश्चर्यार्णवे विशेषेणेत्यवधेयम् ।

किञ्च मन्त्रसिद्धिलक्षणं नामकसप्तमतरङ्गे पुरश्चरणभेदास्ततो मन्त्रसिद्धिलक्षण-मित्यादिविषया सूक्ष्म-विस्तरभेदेन वा विवारिताः। एवं द्वितीयभागस्य चतुष्तरङ्गेषु दीक्षा— पुरश्चरणे गुरोश्चयनं -मन्त्रचयनं- मन्त्रग्रहणविधानञ्च विस्तरेण वर्णितम् । दीक्षिते हि मन्त्रे पुरश्चरणे सिद्धिर्भविता न वेति संशयभेदग्रस्तो जनो मन्त्री वा सुस्वप्नैः सिद्धिं वेत्ति। तस्मै मन्त्रग्रहणान्तरं स्वप्नज्ञानमावश्यकम् । यतो ह्येतेन

इष्टो देवो देवि वा सिद्धिं वेदयति। एवमत्र प्रकरणे सुस्वप्नःस्वप्नभेदाश्च निगदिताः।
उक्तश्च फेत्कारिणी तन्त्रे—

**कर्मणा प्रबलेनैव प्रतिबन्धाविरोधिना।**
**यदि सिद्धिन्न लभते द्विस्त्रिर्वा पुनश्चरेत् ।।**[१] इति।

एवं पुरश्चरणसिद्धये विविधोपायाः कर्तव्याः उक्तश्च मेरुतन्त्रे—

**असिद्धत्वाद्गुरोर्दैवात् शिष्ये सिद्धिर्नजायते।**
**ततोपायं प्रकुर्याद्धि यद्गोप्यमधुनोच्यते।।**
**अनुलोम-विलोमेन बिन्दवन्मातृकाक्षरैः।**
**जपेत्तु संपुटितं मन्त्रं प्रत्यहं शतसंख्यया।।** इत्यादि

यदि एवं कृतेप्युपाये न सिद्ध्यति मन्त्रस्तदोपायान्तरं कुर्यात्—

**कुलदैवतमन्त्रं तु भूतलिप्या गुटीकुरु।**
**क्रमोत्क्रमाच्छातावृत्तिं कुर्यात् सिद्धिस्तु मासतः।।** इति।

एवं क्रमेण बहपोपाया अत्रानुष्ठेयाः। एवं पौनःपुन्येनासिद्धौ मन्त्रे शिवेन सप्तोपाया आतिरिक्त्येन निर्देशिताः एवमुपायान्तरं विधाय मन्त्रसिद्धिं कुर्यात् । इत्थं विविधपुरश्चरणभेदा- विविध- तन्त्रग्रन्थैर्वचनानि च समुपस्थापितानि। विशेषतश्च सूर्य-चन्द्रग्रहेऽवस्यं मन्त्रपुरश्चरणमनुष्ठेयम् । एवं पुनरपि मेरुतन्त्रवचनमुदिश्य पुरश्चरणसिद्धौ सिद्धगुरोराश्रयणमावश्यकम् । क्रमेणात्र वर्णौषिधिभ्यः पुरश्चरणं वर्णितम् । मन्त्रासिद्धौ कारणञ्चोक्तम्—

**अयोग्यगुरुतो लब्ध्वा वार्यादिस्थानमाश्रितः।**
**दुर्देशत्वात् पुरश्चर्यां कर्तुं चेच्छक्यते नहि।**
**राज्ञो भाग्यमतो वापि सुकुमारस्यास्य वा यथा।**
**सिद्धिर्भवेत्तथा वक्ष्ये वर्णौषधिपुरस्क्रियाम् ।।** इत्याद्युक्तम् ।

इत्थं क्रमेण वर्णौषधिसप्तभेदाः वीरपुरश्चरणं, पूजाप्रकारः, दूतीयागः, शाबरमन्त्र-पुरश्चरणमुक्तम् ।

साम्प्रतं कामरूपपीठेऽनुष्ठिताः शाबरमन्त्राः सिद्ध्यन्ति । कामरूपपीठः कामशैले विराजते यत्र स्थिता कामाख्यादेवी। तत्र पीठे शाबरमन्त्रा वंशोपरि अष्टगन्धैः-रक्तचन्दनादिभिर्विलिख्य गुरोरुपदेशानुसारं साधनीयाः। पुरश्चर्यार्णवकारस्तु सर्वत्र प्रथमपुरश्चरणे दशसहस्रजप-हवन-तर्पण-मार्जन-ब्राह्मणभोजन-कुमारी-पूजन-दक्षिणादानमावश्यकं मन्यते। कामशैलाद् दक्षिणदिशि योगिनीशैले योगाम्बायाः

१. पुर०— २/७/६१

सन्निधौ मन्त्रानुष्ठानं विधेयम् । एवमेव हिङ्गुलादिपीठेष्वपि अनुष्ठानानि आचरणीयानि। कामरूपपीठ एव वंशोपरिशाबरमन्त्राः अन्यत्र शक्तिपीठेषु भूर्जपत्रे वा मन्त्रा लेख्याः। स्त्रीसमीपे हि मन्त्रजपः प्रशस्यः। तद्धि—

**मुख्यतः, स्त्रीसमीपे हि कामपीठे मनुग्रहः।**'[१] इति।

यद्यपि सर्वे मन्त्राः शिवशक्तिप्रोक्तास्ताप्यागमगम्यः शिवो यदा नन्दी पीठे स्थितः सन् तदागम्यमाणनन्दीकण्ठे निबद्धाभिर्घण्टिकाभिरव्यक्तो एव शाबरमन्त्रः सिद्धः। स हि कोल्ल-भीलादिभिरनुष्ठीयते। सर्प-वृश्चिकादिभिर्द्रष्टो जन एतैरेव मन्त्रैः स्वास्थ्यं लभन्ते । क्वचित्तु ग्रहणमात्रेणैव शाबरमन्त्राः सिद्धाःइति ग्रन्थे उक्तम् । एवं वीर- साधनायामुक्तम्—

**शश्वत्सिद्धिप्रदं देवि सर्वेषामालयं महत् ।**
**नान्यतः सिद्धिप्रदं देवि वीरसाधनवर्जितम् ।।**
**महाबलो महावीरो महासाहसिकः शुचिः।**
**महास्वच्छो दयावाँश्च सर्वभूतहिते रतः।।**[२] इति

इत्यन्तेन वीरसाधनान्तो द्वितीयो भागः संपन्नतामेति। किञ्च वीरसाधना प्रायशः वाममार्गश्रिता। एवं गणेशमन्त्रमारभ्य वीरसाधनान्तं प्रकरणमिदं सम्पाद्य मोदमावहामि ।

सम्प्रति प्रकाशननिदेशकपदे कार्यकारिनिर्देशकाः प्रो. रामकिशोरत्रिपाठिमहाभागाः काश्यामग्रगम्यविद्वत्सु लब्धप्रतिष्ठाकाः वेदान्तविभीगीयाचार्याः दर्शनसंकायस्यायक्षा वेदान्त-व्याकरण-साहित्यादिशास्त्राणां नदीष्णाः विद्वान्सः सन्तः सततं छात्राध्यापननिरता शोधमार्गनिर्देशकाः ग्रन्थ-प्रबन्ध-शोधनिबन्धप्रबन्धनपरा अपि स्वकार्ये नितान्तं निपुणाः, तच्छाहाय्येनेदं प्रकाशनं सम्पद्यते। एवं प्रकाशनकर्मणि अतीव पटवः **डॉ. हरिवंश पाण्डेय- अशोककुमारशुक्ल-भाटियामहोदयैः** सह **कन्हई कुशवाहाभ्यः** कार्तज्ञं ज्ञापयामि। विविधप्रकाशनानुष्ठानैः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य गौरवो वर्द्धन्ते।

पुनश्चात्रैव **आशीर्वाद प्रिंटर्सप्रकाशनस्याधिष्ठातारो देवनारायण महोदयस्त** त्पुत्राः **श्री रमेश कुमार- संजयकुमाराश्च** साधुवादैर्युज्यन्ते। एषां समेषां साहाय्येनैव पुरश्चार्यार्णवस्यायं द्वितीयो भाग अन्तरायैरुध्यमानोऽपि प्रकाशतामेति, शिवम् ।

●

*विदुषामनुचरः*
**राजनाथ त्रिपाठी**

---

१. पुर०— २/७/२९६-२९७
२. तत्रैव।

# विषयानुक्रमणिका

## पञ्चमस्तरङ्गः

षष्ठस्तरङ्गः

सप्तमस्तरङ्गः

## अष्टस्तरङ्गः

# अथ पुरश्चर्यार्णवस्य पञ्चमस्तरङ्गः

## दीक्षाप्रयोगः प्रकाश्यते

तत्रादौ भक्तियुक्तः शिष्यः प्रथमदिने क्षौरादिकं विधाय शरीरशुद्ध्यर्थं तीर्थादौ स्नात्वा गायत्रीसहस्रं प्रजप्य हविष्यं सकृद्भुक्त्व द्वितीयदिने कृतोपवासस्तृतीय-दिवसे कृतनित्यक्रियो वस्त्रालङ्कारादिभिर्देहमलङ्कृत्वा विघ्ननिवारणार्थं स्वगृहे गणेशमभ्यर्च्य पुण्याहं वाचयित्वा नान्दीश्राद्धं च विधाय यथोक्तवरणसम्भारानादाय पञ्चवाद्यपुरःसरं गुरुगृहं गच्छेत्। तत्र च हस्तौ पादौ प्रक्षाल्य कृताञ्जलिर्भक्तिनम्रः—

**भगवन् परमात्मरूपिन् परमकरुणिक श्रीगुरोसकलपुरुषार्थसाधन-महामन्त्रप्रदानेन मामनुगृह्णीष्व इति**

इत्युक्त्वा गुरुं साष्टाङ्गं प्रणम्य तदाज्ञया प्राङ्मुख उदङ्मुखो वाऽऽसने उपविश्य कुशत्रयतिलजलान्यादाय स्वस्तिवाचनपूर्वकं संकल्पं कुर्यात्। तद्यथा—

**ॐ विष्णुर्विष्णुः। ॐ अद्येत्यादि-अमुकगोत्रोत्पन्नोऽमुकदेवशर्मा धमार्थकाममोक्षप्राप्तिकामः श्रीमदमुकदेवताया अमुकमन्त्रदीक्षामहं करिष्ये—** इति संकल्प्य गुरुं वृणुयात्। तद्यथा—

**ॐ साधु भवानास्तात् —इति शिष्यो वदेत्।**

**ॐ साध्वहमासे—इति गुरुः।**

**ॐ अर्चयिष्यामो भवन्तम्— इति शिष्यः।**

**ॐ अर्चय—इति गुरुः।**

ततः शिष्यः—

**श्रीगुरवे नमः**—इति मन्त्रेण गुरवे आसनं दत्वा तेनैव मन्त्रेण पाद्या-दिभिर्गन्धपुष्पधूपदीपवस्त्रालङ्करणाभिश्च गुरुमभ्यर्च्य दक्षिणजानुं भूमौ धृत्वा पठेत्—

**ॐ अद्येत्यादि—अमुकगोत्रोत्पन्नोऽमुकदेवशर्मा धर्मार्थकाममोक्ष-प्राप्तिकामः श्रीमदमुकदेवताया अमुकमन्त्रग्रहणायामुकगोत्रममुकप्रवरममुकवेदा-ध्यायिनममुकदेवशर्माणमेभिः पाद्यादिभिरर्चितं भवन्तं गुरुत्वेनाहं वृणे।**

**ॐ वृतोऽस्मि**—इति प्रतिवचनम्।

पुनर्वद्धाञ्जलिना—

**ॐ अद्येत्यादि-अमुकमन्त्रदीक्षाकर्मणि त्वमाचार्यो भव।**

**ॐ भवामि**—इति प्रतिवचनम् ।

**भगवन् श्रीगुरो यथाविहितं कर्म कुरु**—इति शिष्यो वदेत् ।

**यथाज्ञानतः करवाणि** —इति प्रतिवचनम् ।

ततः शिष्यो गुरवे नमस्कारं कुर्यात् । तथा ततोऽवशिष्टां वरणसामग्रीं गुरवे निवेद्य तच्चरणौ प्रणम्य तदाज्ञया ऋत्विजो वृणुयात् । तद्यथोक्तोपचारैरुक्त-प्रकारेण च तान् प्रत्येकमभ्यर्च्य पठेत्—

**ॐ अद्येत्यादि-अमुकगोत्रोत्पन्नोऽमुकदेवशर्मा चतुर्वर्गफलप्राप्तिकामः श्रीमदमुकदेवताया मत्कर्तृकामुकमन्त्रदीक्षाकर्मण्यमुकगोत्रममुकप्रवरम-मुकवेदाध्यायिनममुकशर्माणमेभिः पाद्यादिभिरर्चितं भवन्तमृक्त्त्विृत्वेनाहं वृणे ।**

**ॐ वृतोऽस्मि**—इति प्रविवचनम् ।

**यथाविहितं कर्म कुरु**—इति शिष्यः।

**यथाज्ञानतः करवाणि**—इति प्रतिवचनम् ।

एवमष्टौ ऋत्विजः प्रत्येकं वृणुयात् । ततः कर्मोपयुक्तसामग्रीं तेभ्यो दत्वा तान् प्रणमेत् ।

ततो गुरुः शिष्येण ऋत्विग्भिश्च सहितो यागमण्डपं गत्वा तद्द्वारि उपवि-

श्य दन्तकाष्ठपरीक्षा कर्तव्या पायसभोजनान्तरमेव दन्तकाष्ठपरीक्षा कर्त्तव्या।

([1]कर्त्तव्या-इति एषां मतैस्तु तस्मिन्नैव काले कर्त्तव्या ।)

सा यथा—अश्वत्थोदुम्बरवटप्लक्षादिक्षीरवृक्षसम्भवं द्वादशाङ्गुलप्रमाणं दन्तकाष्ठं देवमूलमन्त्रेणाभिमन्त्र्य गुरुः शिष्याय दद्यात्—

शिष्योऽपि हस्तौ पादौ प्रक्षाल्याचम्य गुरुं नत्वा तद्दन्तकाष्ठमादाय दन्तान् विशोध्य वालुकाद्रिनिर्मिते हस्तमात्रे चतुरस्रस्थण्डिले दन्तकाष्ठं त्यक्त्वा शुद्धजलेन गण्डूषपूर्वकमाचमनं कुर्यात् । ततो गुरुः पूर्वादिदिक्पति तद्दन्तकाष्ठाग्रमालोक्य शुभाशुभफलानि विचारयेत्।

यथा—

दन्तकाष्ठाग्रे पूर्वदिक्पतिते ऐश्वर्यलाभः। आग्नेयदिक्पतिते हृदयसन्तापः। दक्षिणदिक्पतिते बन्धुनाशः। रक्षोदिक्पतिते मरणम् । पश्चिमदिक्पतिते शोकः ।

१. कोष्ठकान्तर्गतं प्रक्षिप्तमिवाभाति ।

वायवीयदिक्पतिते व्यग्रता । उत्तरदिक्पतिते सौख्यम् । ईशानदिक्पतिते च ज्ञानलाभ इति फलं विचार्य अशुभदिक्पतिते तु तज्जन्यदोषनिवारणार्थम्—

**फट् अमुकदोषं जहि जहि फट् स्वाहा**— इति मन्त्रेणाष्टोत्तरसहस्रसंख्या-कमष्टोत्तरशतसंख्याकं वा होममाज्यने कुर्यात् । ततो गुरुर्मण्डपद्वारदेशे आसने उपविश्य आचमनप्राणायामौ विधाय सामान्यार्घस्थापनं कुर्यात् ।

ततः—

अस्त्रजलेन भूमिं संप्रोक्ष्य त्रिकोणवृत्तचतुरस्त्रमण्डलं विलिख्य—

**ॐ आधारशक्तये नमः**- इति मण्डलं संपूज्य तदुपरि आधारं संस्थाप्य-

**रँ वह्निमण्डलाय दशकलात्मने नमः**—इत्याधारं संपूज्य **फट्**—इति मन्त्रेणार्घपात्रं प्रक्षाल्याधारोपरि संस्थाप्य—**नमः**—इति जलेनापूर्य—

**सँ सोममण्डलाय षोडशकलात्मने नमः**—इति जलं संपूज्य तस्मिन् जले—

**ॐ गङ्गे च यमुने चैव गोदावरि सरस्वति ।**
**नर्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु ।।१।।**

इत्यङ्कुशमुद्रया सूर्यमण्डलात् तीर्थमावाह्य प्रणवेन गन्धपुष्पं निधाय तेनैव संपूज्य तेनैवाष्टधा दशधा वाऽभिमन्त्र्य धेनुमुद्रां प्रदर्शयेत् । ततस्तज्जलेन **फट्**—इति द्वारमभ्युक्ष्य द्वारपूजां कुर्यात् । तद्यथा—

**ॐ विघ्नेशाय नमः**—इति द्वारस्योर्ध्वोदुम्बरे ।

**मँ महालक्ष्म्यै नमः**— इति तद्दक्षिणे ।

**सँ सरस्वत्यै नमः**—इति तद्वामे ।

**द्वारश्रियै नमः**—इति मध्ये ।

द्वारस्य दक्षिणशाखायां वामशाखायां चोर्ध्वभागादारभ्य तलपर्यन्तमेता द्वारदेवताः पूजयेत् । तद्यथा—

**गँ गणपतये नमः**—इति दक्षिणे ।

**क्षँ क्षेत्रपालाय नमः**— इति वामे ।

**शँ वसुन्धरायुक्ताय शङ्खनिधये नमः**— इति पुनर्दक्षिणे ।

**पँ वसुमतियुक्ताय पद्मनिधये नमः**—इति वामे ।

**मँ मायाशक्तये नमः**— इति दक्षिणे ।

**चँ चिच्छक्तये नमः**— इति वामे ।

**गँ गङ्गायै नमः**—इति दक्षिणे।

**यँ यमुनायै नमः**— इति वामे।

**धँ धात्रे नमः**— इति दक्षिणे।

**वँ विधात्रे नमः**— इति वामे।

**दँ देहल्यै नमः, अँ अस्त्राय नमः**—इति वा देहल्याम्। एवं पश्चिमद्वारमारभ्य प्रतिद्वारं संपूज्य द्वारपालान् पूजयेत्। तत्र विशेषः शिवपूजायाम्—

**नन्दिमहाकालगणेशवृषभृङ्गिस्कन्दभवानीचण्डेश्वरान्**—पश्चिमद्वारमारभ्य प्रतिद्वारं क्रमेण द्वौ द्वौ पूजयेत्। एषां पूजने मन्त्रस्तु—

**नँ नन्दिने नमः**—इत्यादि।

विष्णुपूजायाम्—

**नन्दसुनन्दचण्डप्रचण्डबलप्रबलभद्रसुभद्राख्यान्**—द्वारपालन् पूजयेत्।

गणेशपूजायाम्—

**वक्रतुण्डैकदंष्ट्रमहोदरगजाननलम्बोदरविकटविराजधूम्रवर्णान्**— पूजयेत्

सूर्यपूजायां देवीपूजायां च—

**ब्राह्मीमाहेश्वरीकौमारीवैष्णवीवाराहीन्द्राणीचामुण्डामहालक्ष्मीः**—पूजयेत्।

त्रिपुरादिपूजायां तु—

**गणेशक्षेत्रपालवटुकयोगिनीगङ्गायमुनालक्ष्मीसरस्वतीः**—पूजयेदिति। ततो देयमन्त्रेण दिव्यदृष्ट्यावलोकनात् दिव्यान् विघ्नानुत्सार्य—**अस्त्राय फट्**—इति जलक्षेपेणान्तरिक्षगान् विघ्नानुत्सार्य तेनैव मन्त्रेण त्रिभिर्वामपार्ष्णिघातैर्भौमान् विघ्नानुत्सारयेत्। ततो दक्षिणाङ्गं किञ्चित् संकोच्य द्वारस्य वामशाखां स्पृशन्नुत्सारितभूतानां निर्गमनार्थं दक्षिणमार्गं ददद्दक्षिणपादपुरःसरं मण्डपान्तः प्रविशेत्। वाममार्गे तु शक्तिवामपादपुरःसरं मण्डपान्तःप्रवेशः। तथैव स्त्रीकर्तृकदीक्षायामपि। ततो नैर्ऋत्यां दिशि—

**ॐ वास्तुपुरुषाय वास्त्वधीशाय ब्रह्मणे नमः**—

इति पुष्पाक्षतैः संपूज्य प्रणम्य पञ्चगव्यसामान्यर्घतोयाभ्यां मण्डपाभ्यन्तरं संप्रोक्ष्य संस्कारचतुष्टयं कुर्यात्। तद्यथा—

**मूलमन्त्रं**— समुच्चरन् मण्डपाभ्यन्तरं पश्येत्। **फट्**—इति सामान्यार्घजलेन तत्प्रोक्षणं कुर्यात्। तेनैव मन्त्रेण दर्भैस्ताडयेत्। **हुँ**—इति मन्त्रेण सिञ्चेत्।

ततः श्रीखण्डागुरुकर्पूरादिधूपेन मण्डपाभ्यन्तरं प्रधूप्य लाजाचन्दनसिद्धार्थ-

भस्मदूर्वाकुशाक्षतानिति सप्त विकिरानेकीकृत्य— **फट्**—इत्यस्त्रमन्त्रेण सप्तधाऽभिमन्त्र्य—

**ॐ अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।**
**ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया ।।**

इति त्रिधा विकिरेत् ।

ततस्तान् विकिरानस्त्रमन्त्रमुच्चरन् दर्भमुष्टिना सम्मार्ज्य वर्धन्यासनार्थ-मीशानकोणे पुञ्जीकृत्य स्थापयेत् । ततः पुण्याहं वाचयित्वा विप्रान् सन्तोष्य—

**ॐ दीपनाथभैरवाय नमः**—इति तन्नामकं भैरवं संपूज्य बद्धाञ्जलिः प्रार्थयेत् ।

**तस्मिन् क्षेत्रे दीपनाथ निर्विघ्नसिद्धिहेतवे ।**
**दीक्षायागसमृद्ध्यर्थमनुज्ञां दातुमर्हसि ।।**
**अतितीक्ष्ण महाकाय कल्पान्तदहनोपम ।**
**भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ।।**

इत्यनुज्ञामादाय—**फट्**—इति मन्त्रमुच्चरन् वेदिकोपरि गत्वा वेदिकायां मृदा चतुरस्त्रं स्थण्डिलं निर्माय तदुपरि सर्वतोभद्रमण्डलं विलिख्य पूजोपरकणानि यथास्थानं निवेश्यासनमास्तीर्य वामभागस्य जलपात्रमादाय जलशोधनं कुर्यात् । तद्यथा—

**यँ**—इति वायुबीजेन संशोध्य—**रँ**—इत्यग्निबीजेन संदह्य—**वँ**—इति वरुणबीजेनाप्लाव्य—**ॐ आत्मतत्त्वाय स्वाहा, ॐ विद्यातत्त्वाय स्वाहा, ॐ शिवतत्त्वाय स्वाहा**—इति त्रिराचम्य—

**अस्त्राय फट्**—इत्यासनं संप्रोक्ष्य तदुपरि अष्टदलकमलं विलिख्य—

**पृथिव्या मेरुपृष्ठ ऋषिः सुतलं छन्दः कूर्मो देवता आसनपरिग्रहे विनियोगः ।**

इत्याअसनं धृत्वा—

**ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।**
**त्वं च धारय मां नित्यं पवित्रं कुरु चासनम् ।।५।।**—इति पठित्वा—

**ह्रीँ आधारशक्तिकमलासनाय नमः**—इत्यासनं संपूज्य तदुपरि आत्ममन्त्रमुच्चन् स्वस्तिकपद्मासनादिक्रमेणोपविश्य संकल्पं कुर्यात् । यथा—

**ॐ अद्येत्यादि अमुकदेवशर्माऽमुकगोत्रोऽमुकशर्मकर्त्तृकामुकदेवताया**

**अमुकमन्त्रदीक्षाकर्मणि यथासम्भवोपचारैरमुकदेवतायाः पूजामहं करिष्ये**— इति संकल्पः ।

**ॐ ह्रां ह्रीँ सः सग्रहराशिनक्षत्रयोगकरणपरिवृतासनस्थितश्रीसूर्याय एष तेऽर्घः स्वाहा**— इति सूर्यार्घं दत्वा पूजाद्रव्याणि संस्कुर्यात् । तद्यथा—नाराचमुद्रां वद्ध्वा— **ह्रां हुं फट्**— इति मन्त्रमुच्चरन् गन्धपुष्पनैवेद्यादीनि समदृष्ट्या विलोकयेत्।

**रँ**— इति मन्त्रेण दीपशिखां स्पृशेत् । ततः—

**औँ** बीजमुच्चरन् देवतीर्थेन जलं संस्पृश्य जलपात्रं वामहस्तेन धृत्वा—

**जँ जलाधारपात्राय नमः**—इति मन्त्रं पठेत् । ततः शिरस्यञ्जलिमाधाय वामे—

**ॐ गुरुभ्यो नमः, ॐ परमगुरुभ्यो नमः, ॐ परापरगुरुभ्यो नमः**— इति गुरुत्रयं नत्वा दक्षिणे—**गँ गणपतये नमः**—मध्ये—**अमुकदेवतायै नमः**— इति प्रणम्य—

**अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।**
**तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ।।६।।**

इति गुरुं पुनर्नत्वा करशुद्धिं कुर्यात् । यथा— **ह्सौँः**—इति मन्त्रेण चन्दनाक्तं पुष्पमादाय—**फट्**— इति मन्त्रेण कराभ्यां समर्द्य तत् पुष्पं वामहस्तेनादाय शिरसि परिभ्राम्य प्रणवं जपन्नाघ्राय—

**हौँ ॐ ते सर्वे विलयं यान्तु ये मां हिंसन्ति हिंसकाः ।**
**मृत्युरोगभयक्लेशाः पतन्तु रिपुमस्तके ।।७।।**

इति पठित्वा— **फट्**—इति मन्त्रेण नाराचमुद्रया ईशाने त्यजेत् ।

ततोऽस्त्रमन्त्रेण ऊर्ध्वोर्ध्वक्रमेण तालत्रयपुरःसरं छोटिकाभिर्दशदिग्बन्धनं विधाय तज्जनिततेजो वह्निप्राकारमुद्रया संरक्ष्य मूलेन तद्बीजेन प्रणवेन वा प्राणायामत्रयं कृत्वा भूतशुद्धिं कुर्यात् । यथा—स्वाङ्के उत्तानौ करौ कृत्वा—**सोऽहम्**—इति जीवात्मानं प्रदीपकलिकाकारं हृत्पद्मासनमूलाधारस्थितकुण्डलिन्या सह सुषुम्णावर्त्मना मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञाख्यं षट्चक्राणि भित्त्वा शिरोऽवस्थिताधोमुखसहस्रदलकमलकर्णिकान्तर्गतपरमात्मनि संयोज्य तत्र पृथिव्यप्तेजोवाय्वाकाशगन्धरसरूपस्पर्शशब्दनासिकाजिह्वाचक्षुस्त्वक्श्रोत्रवाक्पाणिपादपा-

यूपस्थप्रकृतिमनोबुध्यहङ्कराख्यानि चतुर्विंशतितत्त्वानि उक्तक्रमेण लीनानि विभाव्य— **यँ**—इति वायुबीजं धूम्रवर्णं वामनासापुटे विचिन्त्य तस्य षोडशवारजपेन वायुना देहमापूर्य नासापुटौ धृत्वा पञ्चाशद्वारजपेन चतुःषष्टिवारजपेन वा कुम्भकं कृत्वा वामकुक्षिस्थकृष्णवर्णपापपुरुषेण सह देहं संशोध्य पञ्चाशद्वारजपेन द्वात्रिंशद्वारजपेन वा दक्षनासया वायुं रेचयेत् । एवमग्रेऽपि संख्याविकल्पो बोध्यः।

ततो दक्षनासापुटे—**रँ**—इति वह्निबीजं रक्तवर्णं ध्यात्वा तस्य षोडशवारजपेन देहमापूर्य नासापुटौ धृत्वा चतुःषष्टिवारजपेन कुम्भकं कृत्वा पापेन सह दग्ध्वा तस्य द्वात्रिशंद्वारजपेन वामनासया भस्मना सह वायुं रेचयेत् । **ठँ**—इति चन्द्रबीजं शुक्लवर्णं वामनासिकायां धृत्वा तस्य षोडशवारजपेन ललाटे चन्द्रं नीत्वा सहस्रदलकमलकर्णिकान्तं परमात्मानं चन्द्ररूपं विभाव्य—**वँ**—इति वरुणबीजस्य चतुःषष्टिवारजपेन तस्माल्ललाटचन्द्राद्गलितमुद्रया- मातृकावर्णात्मिकया समस्त-हेहमाप्लाव्य—**लँ**—इति पृथ्वीबीजस्य द्वात्रिंशद्वारजपेन देहं सुदृढं विचिन्त्य दक्षिणेन वायुं रेचयेत् । ततः परमात्मनि लीनानि पञ्चभूतान्युक्तक्रमेण यथास्थानं निवेश्य देवताराधनयोग्यं तेजोरूपं देहमुत्पन्नं विभाव्य—**हँसः**—इति जीवात्मानं परमात्मनः समाकृष्य हृत्पद्मे स्थापयित्वा देवता रूपमात्मानं विचिन्तयेत् । इति भृतशुद्धिं विधाय—

**आँ सोऽहं मम प्राणा इह प्राणा इह स्थिताः, आँ सोऽहं मम जीव इह जीव इह स्थितः, आँ सोऽहं मम सर्वेन्द्रियाणि वाङ्मनश्चक्षुः श्रोत्रजिह्वाघ्राणानि इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा ।**

इति स्वहृदि प्राणस्थानं कृत्वा मातृकान्यासं कुर्यात् । यथा—

**अस्य श्रीमातृकासरस्वतीमन्त्रस्य ब्रह्मा ऋषिर्गायत्री छन्दो मातृका-सरस्वती देवता हलो बीजानि स्वराः शक्तयो व्यक्तयः कीलकानि शरीर-शुद्धिपुरःसरमभीष्टसिद्ध्यर्थे लिपिन्यासे विनियोगः ।**

शिरसि—**ब्रह्मणे ऋषये नमः**।मुखे—**गायत्र्यै छन्दसे नमः** । हृदि—**मातृकासरस्वत्यै देवतायै नमः** ।गुह्ये—**हल्भ्यो बीजेभ्यो नमः** । पादयोः—**स्वरेभ्यः शक्तिभ्यो नमः** । सर्वाङ्गेषु-**व्यक्तिभ्यः कीलकेभ्यो नमः** । **लिपिन्यासे विनियोगः**—इति बद्धाञ्जलिः ।

**ततः कराङ्गन्यासौ–**

**अँ कँ खँ गँ घँ ङँ आँ अङ्गुष्ठाभ्यां नमः । इँ चँ छँ जँ झँ ञँ ईँ**

**तर्जनीभ्यां स्वाहा । उँ टँ ठँ डँ ढँ णँ ऊँ मध्यमाभ्यां वषट् ओँ पँ फँ बँ भँ मँ औँ कनिष्ठिकाभ्यां वौषट् । अँ यँ रँ लँ वँ शँ षँ सँ हँ लँ क्षँ अः करतलकर-पृष्ठाभ्यां अस्त्राय फट् ।**

एवं हृदयादिषु—

**अँ कँ खँ गँ घँ ङँ आँ हृदयाय नमः**—इत्यादि न्यसेत् ।

ततो ध्यानम् । यथा—

**पञ्चाशल्लिपिभिर्विभक्तमुखदोष्पन्मध्यवक्षःस्थलीं**
**भास्वन्मौलिनिबद्धचन्द्रशकलामापीनतुङ्गस्तनीम् ।**
**मुद्रामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजै-**
**र्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये ।।८।।**

एवं ध्यात्वा केवलान् सविसर्गान् वा अकारादिक्षकारान्तान् वर्णान् ललाटादिस्थानेषु न्यसेत् । तद्यथा—

**अः नमः**—ललाटे ।
**आःनमः**—मुखवृत्ते ।
**इः नमः**—दक्षनेत्रे ।
**ईः नमः**—वामनेत्रे ।
**उः नमः**—दक्षकर्णे ।
**ऊः नमः**—वामकर्णे ।
**ऋः नमः**—दक्षनासापुटे ।
**ॠः नमः**- वामनासापुटे
**ऌ नमः**—दक्षगण्डे ।
**ॡः नमः**—वामगण्डे ।
**एः नमः**— ओष्ठे ।
**ऐः नमः**—अधरे ।
**ओः नमः**—ऊर्ध्वदन्ते ।
**औः नमः**—अधोदन्ते ।
**अंः नमः**— ब्रह्मरन्ध्रे ।
**अः नमः**—मुखे ।
**कः नमः**—दक्षवाहुमूले ।
**खः नमः**—दक्षकूर्परे ।
**गः नमः**—दक्षमणिबन्धे ।
**घः नमः**—दक्षाङ्गुलिमूलेषु ।
**ङः नमः**—दक्षाङ्गुल्याग्रेषु ।
**चः नमः**—वामवाहुमूले ।
**जः नमः**—वाममणिबन्धे ।
**झः नमः**—वामाङ्गुलिमूलेषु ।
**ञः नमः**—वामाङ्गुल्यग्रेषु ।
**टः नमः**— दक्षपादमूले ।
**ठः नमः**—दक्षजानुनि ।
**डः नमः** —दक्षगुल्फे ।
**ढःनमः**—दक्षपादाङ्गुलिमूलेषु ।
**णः नमः**—दक्षपदाङ्गुल्यग्रेषु ।
**तः नमः**— वामपादमूले ।
**थः नमः**— वामजानुनि ।

***

**दः नमः**— वामगुल्फे ।
**धः नमः**—वामपादाङ्गुलिमूलेषु ।
**नः नमः**—वामपादाङ्गुल्यग्रेषु ।
**पः नमः**—दक्षपार्श्वे ।
**फः नमः**— वामपार्श्वे ।
**बः नमः**— पृष्ठे ।
**मः नमः**—उदरे ।
**यः नमः**—हृदये ।
**रः नमः**—दक्षांशे ।
**लः नमः**— ककुदि ।
**वः नमः**— वामांशे ।
**शः नमः**—हृदयादिदक्षिणकरे।
**षः नमः**—हृदयादिवामकरे ।
**सः नमः**—हृदयादिदक्षिणपादे ।
**हः नमः**—हृदयादिवामपादे ।
**लः नमः**—हृदयाद्युदरे ।
**क्षः नमः**—हृदयादिमुखे व्यापकम्।

इति सृष्टिक्रमः ।

**अथ स्थितिक्रमः-**

तत्र ऋष्यादिकराङ्गन्यासान्तं पूर्ववद्विधाय ध्यायेत् । यथा—

**सिन्दूरकान्तिममिताभरणां त्रिनेत्रां**
**विद्याक्षसूत्रमृगपोतवरान् दधानाम् ।**
**पार्श्वे स्थितां भगवतीमपि काञ्चनाभां**
**ध्यायेत् कराब्जधृतपुस्तकवर्णमालाम् ।।९।।**

एवं ध्यात्वा—

**ॐ नमः**—दक्षगुल्फे इत्यादि। **क्षँ नमः**—हृदादिमुखे इत्यन्तं विन्यस्य पुनः- **अंः नमः**—ललाटे इत्यादि । **ठँ नमः**— दक्षजानुनि इत्यन्तं विसर्गानुस्वारयुक्तान् डादिठान्तान् वर्णान् न्यसेत् ।

इति स्थितिक्रमः ।

**अथ संहारक्रमः-**

अत्रापि ऋषिन्यासादिकं पूर्ववद्विधाय ध्यानम् । यथा—

**अक्षस्रजं हरिणपोतमुदग्रटङ्क-**
**विद्यां करैरविरतं दधतीं त्रिनेत्राम् ।**
**अर्धेन्दुमौलिमरुणामरविन्दभासां**
**वर्णेश्वरीं प्रणमत स्तनभारनम्राम् ।।१०।।**

एवं ध्यात्वा—

**क्षँ नमः**— हृदादिमुखे इत्यादिबिन्दुयुक्तान् क्षकाराद्यकारान्तवर्णांस्तत्तत्स्थानेषु न्यसेत् ।

इति संहारक्रमः

अत्र पूर्वं सृष्टिक्रमेण ततः स्थितिक्रमेण ततः संहारक्रमेण न्यासी यतिवान् प्रस्थादिभिः कार्यः । पूर्वं स्थितिक्रमेण ततः संहारक्रमेण ततः सृष्टिक्रमणे न्यासो ब्रह्मचारिभिः कार्यः ।

गृहस्थैस्तु प्रथमं संहारक्रमेण ततः सृष्टिक्रमणे ततः स्थितिक्रमेण न्यासः कार्यः। अयं त्रिविधोऽपि बहिर्मातृकान्यासः।

**अथान्तर्मात्रृकान्यासः–**

तत्र मूलाधारध्वनिश्रवणप्रबुद्धकुण्डलिनीसंस्पृष्टसहस्रदलकमलात् सुषुम्णा मार्गेण निर्गतानमृतमयान् मातृकावर्णान् निजदेहमभिव्याप्य स्थितान् ध्यात्वा कण्ठस्थविशुद्धाख्यषोडशदलकमलदलेषु पूर्वदलादिक्रमेण प्रणवादिनमोऽन्तान् सबिन्दून अकारादिषोडशस्वरान् मनसा विन्यसेत् । यथा—

**ॐ अँ नमः**—इत्यादि ।

ततो हृदयस्थानाहताख्यद्वादशदलकमलदलेषु तेनैव क्रमेण ककारादिठकारान्तान् वर्णान् न्यसेत् । ततो नाभिस्थमणिपूरकाख्यदशदलकमलदलेषु डकारादिफकारान्तान् दशवर्णान् न्यसेत् । ततो लिङ्गमूलस्य स्वाधिष्ठानाख्यषड्दलकमलदलेषु बकारादिलकारान्तान् वर्णान् न्यसेत् ।

ततो मूलाधाराख्यचतुर्दलकमलदलेषु वकारादिसकारान्ताँश्चतुरो वर्णान् न्यसेत्। ततो भ्रूमध्यस्थिताज्ञारव्यद्विदल कमलदलयोर्द्वौ वर्णौ हकारक्षकारौ विन्यसेत्।

इत्यन्तर्मातृकान्यासः।

ततश्च स्वस्वकल्पोक्तन्यासान्तराणि विधाय मूलमन्त्रस्य ऋष्यादिन्यासं च कृत्वा पीठन्यासं कुर्यात् । यथा—

**ॐ आधारशक्तये नमः**
**ॐ मूलप्रकृत्यै नमः**
**ॐ कूर्माय नमः**
**ॐ अनन्ताय नमः**
**ॐ वराहाय नमः**
**ॐ पृथिव्यै नमः**
**ॐ क्षीरसमुद्राय नमः**
**ॐ श्वेतद्वीपाय नमः**
**ॐ मणिमण्डपाय नमः**
**ॐ कल्पवृक्षाय नमः**
**ॐ मणिवेदिकायै नमः**
**ॐ रत्नसिंहासनाय नमः**

एतत् सर्वं हृदि ।

**ॐ धर्माय नमः**—दक्षिणस्कन्धे । **ॐ ज्ञानाय नमः**— वामस्कन्धे । **ॐ पञ्चाशद्वर्णबीजाढ्यकर्णि–काये नमः**

**ॐ वैराग्याय नमः**—वामोरौ ।
**ॐ ऐश्वर्याय नमः**—दक्षिणोरौ ।
**ॐ अधर्माय नमः**—मुखे ।
**ॐ अज्ञानाय नमः**— वामपार्श्वे ।
**ॐ अवैराग्याय नमः**—नाभौ ।
**ॐ अनैश्वर्यायनमः**—दक्षिणपार्श्वे ।
**ॐ अनन्ताय नमः**—हृदि ।
**ॐ पद्माय नमः**
**ॐ आनन्दकन्दाय नमः**
**ॐ संविन्नालाय नमः**
**ॐ सर्वतत्त्वात्मकपद्माय नमः**
**ॐ प्रकृतिमयपत्रेभ्यो नमः**
**ॐ विकारमयकेशरेभ्यो नमः**
**ॐ अँ सूर्यमण्डलाय द्वादशकलात्मने नमः**
**ॐ उँ सोममण्डलाय षोडशकलात्मने नमः**
**ॐमँ वह्निमण्डलाय दशकलात्मने नमः**
**सँ सत्त्वाय नमः**
**रँ रजसे नमः**
**तँ तमसे नमः**
**आँ आत्मने नमः**
**अँ अन्तरात्मने नमः**
**पँ परमात्मने नमः**
**ह्रीँ ज्ञानात्मने नमः**

इत्यन्तं विन्यस्य हृत्पद्मस्य पूर्वादिकेशरेषु स्वकल्पोक्तपीठशक्तिर्विन्यस्य पीठमन्त्रं पठित्वा—

**अमुकदेवतायोगपीठाय नमः**—इति पीठन्यासं विधाय देहात्मके पीठे देवतां ध्यात्वा मानसैरुपचारैः पूजयेत् । तत्रायं क्रमः— उक्तपीठन्यासक्रमेण स्वदेहे आधारशक्त्यादियोगपीठान्तं मनसैव संपूज्य तस्मिन् पीठे यथोक्तां देवतां ध्यात्वा—

**सोऽहम्**— इत्यैक्यं विभाव्य गन्धपुष्पधूपदीपनैवेद्यादीन् मानसोपचारान् समर्प्य मानसहोमं कुर्यात् ।

यथा—

अहङ्कारासत्यपैशून्यकामक्रोधलोभमोहमदमात्सर्यादिरूपं हविर्मनोरूपं स्रुवं सुषुम्णारूपां स्रुचं परिकल्प्य मूलाधारे आत्मान्तरात्मपरमात्मज्ञानात्मरूपचतुःकोणमग्निकुण्डे विचिन्त्य तत्र कुण्डलिनीरूपं प्रज्वलद्वह्निं ध्यात्वा मनसैव मूलमन्त्रमुच्चार्य तदन्ते—

**धर्माधर्महविर्दीप्ते स्वात्माग्नौ मनसा स्रुचा ।**
**सुषुम्णावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ।।११।।**

इति श्लोकं पठित्वा—

**पुण्यं जुहोमि स्वाहा**- इति प्रथमाहुतिः । पुनर्मूलान्ते तमेव श्लोकं पठित्वा—

**कृत्यं जुहोमि स्वाहा**—इति तृतीयाहुतिः ।

एवम्—

**अकृत्यं स्वाहा**—इति चतुर्थाहुतिः ।

**संकल्पं जुहोमि स्वाहा**—इति पञ्चमाहुतिः

**विकल्पं जुहोमि स्वाहा**—इति षष्ठाहुतिः ।

**धर्मं जुहोमि स्वाहा**—इति सप्तमाहुतिः ।

एवमाहुतीर्हुत्वा पूर्णाहुतिं कुर्यात् ।

यथा मूलमन्त्रान्ते—

**[1]प्रकाशामर्षहस्ताभ्यामवलम्ब्योन्मनीस्रुवम् ।**

**धर्माधर्मकलास्नेहं पूर्णवह्नौ जुहोम्यहं स्वाहा ।।१२।।**

इति पूर्णाहुतिं विधाय समस्तोपाधिविनिर्मुक्तं सच्चिदानन्दात्मकमात्मानं स्मृत्वा मूलमन्त्रमष्टोत्तरशतं प्रजप्य तं जपं देवतायै निवेदयेत् । क्वचित् तु होमात् पूर्वं उक्तजपः।

इत्यन्तर्यागविधिः ।

ततो द्वारपूजोक्तविधिना स्वदक्षिणे सामान्यार्घं संस्थाप्य कलशस्थापनं कुर्यात् ।

तद्यथा स्ववामे—

**अस्त्राय फट्**— इति सामान्यार्घजलेन भूमिं संप्रोक्ष्य तत्र बिन्दुषट्कोण-वृत्तचतुरस्रात्मकं मण्डलं विलिख्य मूलान्ते—

**अमुकदेवताकलशाधारमण्डलाय नमः**— इति संपूज्य—

**फट्**— इत्याधारं प्रक्षाल्य मूलान्ते—

**अमुकदेवताकलाशाधारं स्थापयामि नमः**—इत्याधारं संस्थाप्य मँ वह्निमण्डलाय दशकलात्मने नमः इति संपूज्य पूर्ववत् कलशं प्रक्षाल्य वस्त्र-माल्यादिभिरलङ्कृत्य मूलान्ते—

**अमुंकदेवताकलशं स्थापययामि नमः**— इति संस्थाप्य असूर्यमण्डलाय द्वादशकलात्मने नमः इति संपूज्य मूलमन्त्रमुच्चरन् शुद्धजलेन कलशं पूरयेत् । वामाचारे तु हेतुद्रव्येण पूरयेत् । श्यामारहस्यादौ तु तथा दर्शनात् । ततः—

**ॐ सोममण्डलाय षोडशकलात्मने नमः**—इति तज्जलं संपूज्य—

---

१. एतदन्तार्गतः पाठः प्रक्षिप्तमिवाभाति ।

**गङ्गे च यमुने चैव**—इत्यादिनाऽङ्कुशमुद्रया सूर्यमण्डलात् तीर्थमावाह्यास्त्रेण संरक्ष्य कवचेनावगुण्ठ्य मूलमन्त्रेण संवीक्ष्य तेनौवाभ्युक्ष्य मूलान्ते—

**अमुकदेवताकलशामृताय नमः**—इति गन्धपुष्पादिभिरभ्यर्च्य मत्स्य-मुद्रयाऽऽच्छाद्य—

**ॐ कलशस्य मुखे विष्णुः**— इत्यादि पठित्वा मूलमन्त्रमष्टधा जपित्वा कुम्भमुद्रां प्रदर्श्य कलशं देवतात्मकं भावयेत् ।

इति कलशस्थापनविधिः ।

ततः शङ्खस्थापनं कुर्यात्—

तद्यथा कलशाद्दक्षिणे स्ववामे—

**अस्त्राय फट्**—इति सामान्यार्घजलेन भूमिं संप्रोक्ष्य तत्र त्रिकोणवृत्त-चतुरस्त्रमण्डलं मत्स्यमुद्रया विलिस्य—

**ॐ अमुकदेवताशङ्खाधारमण्डलाय नमः**—इति गन्धपुष्पाभ्यां मण्डलं संपूज्य चतुरस्त्रस्याग्नेयादिषु चतुर्षु कोणेषु पुरतो दिक्षु च षडङ्गमत्रैः संपूज्य—

**फट्**— इत्याधारं जलेन प्रक्षाल्य मूलमन्त्रान्ते—

**अमुकदेवताशङ्खाधारं स्थापयामि नमः**— इत्याधारं संस्थाप्य—

**मँ रँ धर्मप्रददशकलात्मने वह्निमण्डलायामुकदेवताशङ्खाधाराय नमः**— इत्याधारं संपूज्य पूर्वादितः प्रादक्षिण्यक्रमेण वह्नेर्दशकलाः पूजयेत् । तद्यथा—

**यँ धूम्रार्चिषे नमः।** **षँ सुश्रियै नमः ।**

**रँ ऊष्मायै नमः ।** **सँ सुरूपायै नमः।**

**लँ ज्वलिन्यै नमः।** **हँ कपिलायै नमः ।**

**वँ ज्वालिन्यै नमः ।** **लँ हव्यवाहायै नमः।**

**शँ विस्फुलिङ्गिन्यै नमः ।** **क्षँ कव्यवाहायै नमः** । इति

अशक्तश्चेत्—

**वह्नेर्धूम्रार्चिरादिदशकलाभ्यो नमः**— इति पूजयेत् ।

ततः शङ्खम्—

**फट्**—इति प्रक्षाल्य मूलान्ते—

**अमुकदेवताशङ्खं स्थापयामि नमः**— इत्याधारोपरि शङ्खंसंस्थाप्य—

**अँ अर्थप्रदद्वादशकलात्मने सूर्यमण्डलायामुकदेवताशङ्खपात्राय नमः**— इति शङ्खं संपूज्य शङ्खे षट्कोणं च संभाव्य षट्कोणेषु षडङ्गमन्त्रैः संपूज्य

पूर्वादितः प्रादक्षिण्यक्रमेण सूर्यस्य तपिन्यादिद्वादशकलाः पूजयेत् । तद्यथा—

**कँ भँ तपिन्यै नमः** **घँ पँ मरीच्यै नमः**
**खँ बँ तापिन्यै नमः** **ङँ नँ ज्वालिन्यै नमः**
**गँ फँ धूम्रायै नमः** **चँ धँ रुच्यै नमः**
**छँ दँ सुषुम्णायै नमः** **ञँ णँ बोधिन्यै नमः**
**जँ थँ भोगदायै नमः** **टँ ढँ क्षमायै नमः।**
**झँ तँ विश्वायै नमः** **ठँ डँ धारिण्यै नमः**

अशक्तश्चेद्—

**सूर्यस्य तपिन्यादिद्वादशकलाभ्यो नमः**—इति पूजयेत् । ततो मूलान्ते—

**क्षँ हँ सँ षँ शँ वँ लँ रँ यँ मँ भँ बँ फँ पँ नँ धँ दँ थँ तँ णँ ढँ डँ ठँ टँ ञँ झँ जँ छँ चँ ङँ घँ गँ खँ कँ अँः अँ औँ ओँ एे ऐे लॄँ लँ ॠँ ऋँ ऊँ उँ ई इँ आँ अँ ।**

इति विलोममातृकावर्णानुच्चार्य—

**अमुकदेवताशङ्खममृतेन पूरयामि नमः**—इति विमलजलेन शङ्खमापूर्य—

**उँ सँ कामप्रदषोडशकलात्मने चन्द्रमण्डलाय नमः**—इति गन्धपुष्पादिभिः शङ्खजलं संपूज्य उक्तक्रमेण चन्द्रस्यामृतादिषोडशकलाः पूजयेत् ।

यथा—

**अँ अमृतायै नमः** **लृँ चन्द्रिकायै नमः**
**आँ मानदायै नमः** **लॄँ कान्त्यै नमः**
**इँ पूषायै नमः** **एँ ज्योत्स्नायै नमः**
**ईँ पुष्ट्यै नमः** **ऐँ श्रियै नमः**
**उँ तुष्ट्यै नमः** **ओँ प्रीत्यै नमः**
**ऊँ रत्यै नमः** **औँ अङ्गदायै नमः**
**ऋँ धृत्यै नमः** **अँ पूर्णायै नमः**
**ॠँ शशिन्यै नमः** **अँः पूर्णामृतायै नमः**—इति ।

अशक्तश्चेत्—

**चन्द्रस्यामृतादिषोडशकलाभ्यो नमः** — शक्तश्चेत् प्रत्येकमावाह्य प्राणप्रतिष्ठां कृत्वा पाद्यदिभिः पूजयेत् । ततो गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपदूर्वास्तत्र निःक्षिप्य—

**ॐ गङ्गे च यमुने चैव**— इत्यादिनाऽङ्कुशमुद्रया सूर्यमण्डलात् तीर्थमावाह्य मूलमन्त्रेण तस्मिञ्जले तीर्थं संयोज्य—**वौषट्**— इति पुष्पं निःक्षिप्य—**वषट्**— इति गालिनीमुद्रां प्रदर्श्य—**वँ**— इति धेनुमुद्रयाऽमृतीकृत्य मूलान्ते—

**अमुकदेवते इहागच्छ इह तिष्ठ**— इति हृदयाद्देवतां तत्रावाह्य वाहनादिमुद्राः प्रदर्श्य षडङ्गमन्त्रैः सकलीकृत्य दिक्षु अस्त्रेण संरक्ष्य कवचेनावगुण्ठ्य—**वौषट्**—इति संवीक्ष्य शङ्खमुद्रयाऽवष्टभ्य योनिमुद्रया प्रदीप्य मूलमन्त्रेण गन्धपुष्पादिभि-रिष्टदेवतां तत्र संपूज्य षडङ्गानि च संपूज्य मत्स्यमुद्रयाऽऽच्छाद्य मूलमन्त्रमष्टधा जपेत् ।

इति शङ्खस्थापनविधिः ।

ततः शङ्खजलं किंचित् कलशजले निःक्षिप्य सामान्यार्घस्य दक्षिणपार्श्वे पाद्यपात्रार्थं किंचित् स्थलमुत्त्वा प्रोक्षणीपात्रं स्थापयेत् । तद्यथा— सामान्यार्घोदकेन त्रिकोणवृत्तात्मकं मण्डलं कृत्वा— **नमः**— इति प्रपूज्य साधारं प्रोक्षणीपात्रम-स्त्रमन्त्रितजलेन प्रक्षाल्य तदुपरि संस्थाप्य— **ॐ गङ्गे च यमुने** — इत्यदिना जलेनापूर्य— **नमः**— इति गन्धपुष्पाभ्यां संपूज्य प्रणवेन कुशपुष्पयवादिकं प्रक्षिप्य प्रणवेनैव त्रिधाऽभिमन्त्र्य धेनमुद्रां प्रदर्श्य किचित् सामान्यार्धजलं तज्जले निःक्षिपेत् ।

इति प्रोक्षणीपात्रस्थापनविधिः

ततस्तद्वामपार्श्वे सामान्यार्घस्थापनवत् पाद्यपांत्रं संस्थाप्य उशीरगोरोच-नश्यामाकदूर्वाब्जविष्णुक्रान्तादिद्रव्याणि तज्जले निःक्षिप्य तद्वामपार्श्वस्थित—सामान्यार्घवामपार्श्वे स्वपुरतो विशेषार्घस्थापनं कुर्यात् । **तद्विधिस्तु**—शङ्खस्थापनवद्गालिन्यादिमुद्राप्रदर्शनस्थाने योन्यादिमुद्राप्रदर्शनम् । विष्णुविषये तु योनिमुद्रास्थाने धेनुमुद्राप्रदर्शनमिति तत्र विशेषः। अयं च साधारणो विधिः। श्यामादिविद्यायां तु विशेषः ।

**यथा**— सामान्यार्घजलेन बिन्दुयुक्तमीकारं तद्बहिस्त्रिकोणं तद्बहिर्वृत्तं तद्बहिःषट्कोणं तद्बहिश्चतुरस्रं विलिख्य चतुरस्रस्य चतुर्षु कोणेषु स्वाग्रादिप्रादक्षिण्येन पीठचतुष्टयं पूजयेत् ।

**हँ उड्डियानपीठाय नमः, गँ जालन्धरपीठाय नमः, ॠँ पूर्णगिरिपीठाय नमः, अँ कामरूपपीठाय नमः**—इति । ततस्तेनैव क्रमेण पट्कोणस्य षट्सु कोणेषु षडङ्गमन्त्रैः पूजयेत् । ततस्त्रिकोणस्य त्रिषु कोणेषु मूलमन्त्रस्य त्रिभिर्भागैः

पूजयेत् । यत्र च विभागासम्भवस्तत्र समस्तेन मूलमन्त्रेणैव त्रिष्वपि कोणेषु पूजयेत् । ततो मूलमन्त्रं तद्बीजमात्रं वा उच्चार्य—

**अमुकदेवताविशेषार्घाधारशक्तये नमः**— इति त्रिकोणमध्यस्थमीकारं संपूज्यास्त्रमन्त्रितजलेनाधारं प्रक्षाल्य मूलान्ते— **अमुकदेवताविशेषार्घाधारं स्थापयामि नमः**—इत्याधारं संस्थाप्य— **मँ रँ धर्मप्रददशकलात्मने वह्निमण्डलायामुकदेवता विशेषार्घाधाराय नमः**— इत्याधारं संपूज्य शङ्खस्थापनोक्तक्रमेण वह्नेर्धूम्रार्चिरादिदशकला अपि पूजयेत् । ततः पूर्ववत् पात्रं पक्षाल्य मूलान्ते—

**अमुकदेवताविशेषार्घपात्रं स्थापयामि नमः**—इति संस्थाप्य—

**अँ सूर्यमण्डलायार्थप्रदद्वादशकलात्मनेऽमुकदेवताविशेषार्घपात्राय नमः**—

इति पात्रं सम्पूज्य शङ्खस्थापनोक्तक्रमेण सूर्यस्य तपिन्यादिद्वादशकला अपि पूजयेत् ।

ततो मूलमन्त्रान्ते विलोममातृकावर्णान् पठित्वा कलशस्थजलेन विशेषार्घं पूरयेत् । वाममार्गिभिस्तु कुण्डगोलोद्भवस्वयम्भूकुसुमादिद्रव्येण तस्य स्वकल्पोक्त-कारणद्रव्येण वा विशेषार्घं पूररणीम् । ततः—

**उँ सँ कामप्रदषोदशकलात्मने चन्द्रमण्डलायामुकदेवताविशेषार्घामृताय नमः**— इति सपूज्य शङ्खस्थापनोक्तक्रमेण चन्द्रस्यामृताद्याः षोडशकलाः प्रत्येकमर्चयेत् । ततः पात्रामृते त्रिकोणवृत्तषट्कोणात्मकं यन्त्रं विलिख्य त्रिकोणस्य त्रिसृषु रेखासु अकारादिषोडशस्वरान् ककारादितकारन्तान् थकारादिसकारान्तान् वर्णान् विलिख्य मध्ये— **हँ लँ क्षँ**— इति बीजत्रयं विलिख्य मूलखण्डत्रयेण त्रिकोणमभ्यर्च्य षट्कोणे षडङ्गानि संपूज्य—

**ॐ गङ्गे च यमुने चैव**— इत्यादिनाऽङ्कुशमुद्रया सूर्यमण्डलात् तीर्थान्यावाह्य तीर्थमयं विभाव्य गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपदूर्वास्तत्र निःक्षिप्य वामाचारे तु मीनमुद्रया मांसखण्डं निःक्षिप्य कारणेन पूरितं चेत् कुम्भमुद्रया पूर्वोक्तकुलद्रव्यं संशोध्य निःक्षिपेत् । तत आनन्दभैरवीसहितमानन्दभैरवं ध्यात्वा तत्रावाह्य—

**[1]ह् स् क्ष् म् ल् व् र् यूँ आनन्दभैरवाय वषट्,**

**स् ह् क्ष् म् ल् व् र् यीँ सुधादेव्यै वौषट्** —इति मन्त्राभ्यां गन्धपुष्पादिभिस्तौ समभ्यर्च्य बालात्र्यक्षरीमुच्चार्य—

१. उच्चारणे सुकरत्वात् पृथगक्षरघटितावेव मूले न्यस्तौ वस्तुतः संमिलिताक्षरमन्त्रौ इति ।

**ब्रह्माण्डरससभूतमशेषरससंभवम् ।**
**आपूरितं महापात्रं पीयूषरसमावह ।।१३।।**
**अखण्डैकरसानन्दकरे परसुधात्मनि ।**
**स्वच्छन्दस्फुरणं मन्त्रं निधेह्यकुलरूपिणि ।।१४।।**
**अकुलस्थामृताकारे सिद्धिज्ञानकलेवरे ।**
**अमृतत्वं निधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणि ।।१५।।**
**तद्रूपेणैकरस्यं च कृत्वा तैस्तत्स्वरूपिणि ।**
**भूत्वा परामृताकारा मयि चित्स्फुरणं कुरु ।।१६।।**

एभिर्मन्त्रैरभिमन्त्र्य पञ्चरत्नानि पूजयेत् । यथा—

**ग्लूँ गगनरत्नाय नमः, स्लूँ स्वर्गरत्नाय नमः, प्लूँ पातालरत्नाय नम, म्लूँ मर्त्त्यरत्नाय नमः, न्लूँ नागरत्नाय नमः** इति स्वाग्रादिचतुर्दिक्षु मध्ये च पूजयेत् । ततो मूलमन्त्रेण हृदयादिष्टदेवतां तत्रावाह्य आवाहनादिमुद्राः प्रदर्श्य षडङ्गैः सकलीकृत्य अस्त्रेण संरक्ष्य कवचेनावगुण्ठ्य—**वँ**—इति धेनुमुद्रयाऽमृतीकृत्य योनिमुद्रां प्रदर्श्य मूलेन गन्धपुष्पादिभिः संपूज्य पुष्पाञ्जलित्रयं दत्वा धूपदीपादिनैवेद्यानि दक्षिणमार्गी दक्षिणहस्तेन वाममार्गी चेद्वामहस्तेन मत्स्यमुद्रया वाऽर्ध्यमाच्छाद्य मूलमन्त्रमष्टधा दशधा वा प्रजप्य देवतारूपमर्ध्यं विभाव्य भूतिनीधेनुयोनिगुद्राः प्रदर्शयेत् ।

इति विशेषार्घस्थापनविधिः ।

ताराश्रीविद्यादिविषयेऽप्यनेनैव विधिना विशेषार्घं स्थापयेत् । ततो विशेषार्घवामे सामान्यार्घजलेन त्रिकोणँ विलिख्य वैष्णवादौ तु वृत्तमात्रं कृत्वा सामान्यार्घवदाचमनीय-पात्रस्थापनं कृत्वा जातीलवङ्गकक्कोलादिद्रव्याणि तज्जले निःक्षिपेत् । ततस्तद्वामे पूर्ववन्मण्डलं कृत्वा मधुदधिघृतैः पूर्णं मधुपर्कपात्रं संस्थाप्य तद्वामे पुनराचमनीय-पात्रमाचमनीयपात्रवत् संस्थाप्य शुद्धजलेन पूरयेत् ।

ततः सर्वाणि पात्राणि मूलमन्त्रेण प्रत्येकमष्टधाऽभिमन्त्र्य धेन्वादिमुद्रां प्रदर्शयेत् ।

ततो दूर्वाकुर्चेन पुष्पादिना वा शङ्खामृतं विशेषार्घामृतं च किंचित् समादाय पात्रान्तरेषु निःक्षिप्य विशेषार्घामृतेनैव पूर्वोक्तमन्त्राभ्यामानन्दभैरवमानन्दभैरवीँ च तत्त्वमुद्रया शिरसि सन्तर्प्य शङ्खामृतेन स्वस्वकल्पोक्तान् दिव्यौघसिद्धौघमानवौघान् गुरून ब्रह्मरन्ध्रे तत्त्वमुद्रयैव सन्तर्प्य स्वगुरुपरमगुरुपरापरगुरुपरमेष्ठिगुरुनपि तर्पयेत् । तद्यथा—

**श्री-अमुकानन्दनाथश्रीगुरुपादुकां तर्पयामि नमः ।**

एवम्—

**परमगुरुश्रीपादुकां तर्पयामि नमः परापरगुरुश्रीपादुकां तर्पयामि नमः परमेष्ठिगुरुश्रीपादुकां तर्पयापि नमः—**

इति त्रिः सकृद् वा तर्पयेत् ।

यत्र वामाचारादौ गुरुपात्रादिकमतिरिक्तमेव स्थापितं तत्र गुरुपात्रीयद्रव्येणैव गुरुपङ्क्तिस्तर्पयेत् । ततो विशेषार्घजलेन हृदये मूलदेवतां तर्पयेत् । **मूलमन्त्र—** मुच्चार्य—

**साङ्गां सपरिवारां सायुधां सवाहनां श्री-अमुकदेवीं तर्पयामि नमः—**

इति त्रिः सकृद्वा संतर्प्य प्रोक्षणीपात्रस्थजलेनात्मानं पूजामण्डलपूजोपकरणानि च मूलमन्त्रास्त्रमन्त्राभ्यां संप्रोक्ष्य धेनुमुद्रां प्रदर्शयेत् । ततः पूर्वोक्तपीठन्यासक्रमेण स्वदेहे तत्तत्स्थानेषु गन्धपुष्पादिभिः पीठदेवताः संपूज्य हृत्पद्मकर्णिकामध्ये मणिपीठं विभाव्य तत्र देवतां ध्यात्वा देवतारूपमात्मानं विभाव्य मूलमन्त्रेण गन्धपुष्पधूपदीपैश्चतुर्भिरुपचारैर्देवतामभ्यर्च्य मस्तके हृदये मूलाधारे पादयोः सर्वाङ्गेषु चैकैकं पुष्पाञ्जलिं दत्वा मूलमन्त्रमष्टोत्तरशतं यथाशक्ति वा प्रजप्य तज्जपं देवतायै समर्प्य प्रोक्षणीपात्रस्थजलं भूमौ निःक्षिप्य जलान्तरेण पात्रमापूर्य सर्वतोभद्रमण्डलं गन्धपुष्पादिभिः पूजयेत् ।

**ॐ सर्वतोभद्रमण्डलाय नमः**—इति ।

ततः शालिभिस्तत्कर्णिकामापूर्य तदुपरि तण्डुलपुञ्जं तदुपरि दर्भानास्तीर्य तदुपरि साक्षतं यथोक्तं कूर्चं निधाय पीठपूजां कुर्यात् । यथा मण्डलस्योत्तरदिशि—

**श्रीगुरुभ्यो नमः, श्रीपरमगुरुभ्यो नमः, श्रीपरापरगुरुभ्यो नमः, श्रीपरमेष्ठिगुरुभ्यो नमः**— इति संपूज्य दक्षिणस्यां दिशि—

**गँ महागणपतये नमः**— इति पूजयेत् । ततो भावनया मण्डलस्याधस्तात्—

**ॐ अतलादिसप्तपातालेभ्यो नमः।** **ॐ कूर्माय नमः**

**ॐ मण्डुकाय नमः** **ॐ अनन्ताय नमः**

**ॐ कालाग्निरुद्रायनमः**

ऊर्ध्वोर्ध्वक्रमेण— **ॐवराहाय नमः**

**ॐ आधारशक्तेय नमः** **ॐपृथिव्यै नमः**

**ॐ मूलप्रकृतये नमः** **ॐअमृतार्णवाय नमः**

**ॐ रत्नद्वीपाय नमः**

**ॐ मणिमण्डपाय नमः**— इति संपूज्य मण्डलस्य चतुर्दिक्षु मध्ये च-

**ॐ कल्पवृक्षेभ्यो नमः**— भावनया तेषामधस्तात् —

**ॐ मणिवेदिकायै नमः**— तदुपरि—

**ॐ रत्नसिंहासनाय नमः**— आग्नेयादिषु चतुर्षु कोणेषु—

**ॐ धर्माय नमः** **ॐ वैराग्याय नमः**

**ॐ ज्ञानाय नमः** **ॐ ऐश्वर्याय नमः**

दिक्षु पूर्वादिक्रमेण—

**ॐ अधर्माय नमः** **ॐ अवैराग्याय नमः**

**ॐ अज्ञानाय नमः** **ॐ अनैश्वर्याय नमः**

मध्ये ऊर्ध्वोर्ध्वक्रमेण— **ॐ सोममण्डलाय षोडशकलात्मने नमः**

**ॐ आनन्दकन्दाय नमः**

**ॐ सविन्नालाय नमः**

**ॐ सर्वतत्त्वात्मकपद्माय नमः**

**ॐ प्रकृतिमयपत्रेभ्यो नमः**

**ॐ विकारमयकेशरेभ्यो नमः**

**ॐ पञ्चाशद्वर्णबीजाढ्यकर्णि कायै नमः**—कर्णिकायाम् ।

**अँ सूर्यमण्डलाय द्वादशकलात्मने नमः**

**मँ वह्निमण्डलाय दशकलात्मने नमः**

**सँ सत्वाय नमः**

**रँ रजसे नमः**

**तँ तमसे नमः**

**आँ अन्तरात्मने नमः**

**अँ आत्मने नमः**

**पँ परमात्मने नमः**

**ह्रीँ ज्ञानात्मने नमः**

इति संपूज्य पद्मस्य केशरेषु मध्ये च पूर्वादिक्रमेण तत्तत्कल्पोक्तपीठशक्तिः पूजयेत् । ततः पीठमन्त्रं पठित्वा—

**अमुकदेवतायोगपीठाय नमः**— इति मध्ये पूजयेत् ।

ततो मूलमन्त्रमुच्चार्य—

**अमुकदेवताप्रीत्यर्थं मूर्तिं कल्पयामि नमः**— इति पीठमध्ये गन्धपुष्पादिकं निःक्षिपेत् । ततस्तस्मिन् मण्डले पूर्वादितः प्रादक्षिण्येन वह्नेर्दशकला गन्धपुष्पादिभिः प्रत्येकं पूजयेत् । ततः स्वर्णादिरचितं यथोक्तं कुम्भमादाय— **फट्**— इति

शुद्धजलेन संप्रोक्ष्य चन्दनेनोपलिप्य— **हुँ**— इति कवचमन्त्रमुच्चरन्नभित-स्त्रिगुणात्मकसूत्रेण संवेष्ट्य चन्द्रनागुरुकर्पूरैः प्रधूप्य गन्धपुष्पादिभिरभ्यर्च्य नवरत्नान्युदरे निःक्षिप्य दूर्वाचन्दनाक्षतयुक्तं कूर्चमुपरि विन्यस्य— **प्रणवम्** —उच्चरन् पीठे कुम्भं स्थापयेत् ।

ततः कुम्भे पूर्वादिप्रादक्षिण्यक्रमेण सूर्यस्य तपिन्यादिद्वादशकलाः संपूज्य कुम्भपीठयोन्यात्मकुम्भयोश्चैक्यं विभाव्य मातृकावर्णान् प्रातिलोम्येन पठित्वा तदन्ते मूलमन्त्रमुच्चार्य[1] पञ्चाशदौषधीक्वाथेन क्षीरिद्रुमकषायेण पलाभत्वग्भवेन गन्धपुष्पसुवासिततीर्थजलेन वा देवताबुद्ध्या कुम्भं पूरयेत् । ततः कुम्भजले पूर्वादितः प्रादक्षिण्येन चन्द्रस्यामृतादिषोडशकलाः संपूज्यौषधीक्वाथेन गन्धपुष्प-सुवासिततीर्थोदकेन वा शङ्खान्तरमापूर्य तज्ज्ले गन्धाष्टकं विलोड्य बह्नेर्धूम्रार्चिरादिदशकलास्तत्रावाह्य—

**आँ ह्रीँ काँ यँ रँ लँ वँ शँ षँ सँ हँ लँ क्षँ हंसः सोऽहं वह्नेर्धूम्रार्चिरादिदशकलानां प्राणा इह इह स्थितः** । एवम्— **जीव इह इह स्थितः**, —एवम्— **सर्वेन्द्रियाणि**— इत्यादिप्राणप्रातिष्ठां कृत्वा—**वह्नेर्धूम्रार्चिरादि-दशकलाभ्यो गन्धं नमः**—इत्यादिपञ्चोपचारैः संपूज्य शङ्खस्थापनोक्तक्रमेण— **यँ धूम्रार्चिषे नमः**— इत्यादि प्रत्येकं गन्धपुष्पादिभिः संपूज्य अनेनैव प्रकारेण सूर्यस्य तपिन्यादिद्वा-दशकलाश्चन्द्रस्यामृतादिषोडशकलाश्चावाह्याभ्यर्च्य पञ्चाशत् कलाः पूजयेत् । तद्यथा—

[2]**हओंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दूरोणसत् । नृषद्व-रसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत** इति वैदिकमन्त्रेण सृष्ट्यादिदशकला आवाह्य **ॐ सृष्ट्यादिदशकलाभ्यो नमः**—इति पञ्चोपचारैः संपूज्य गन्धपुष्पादिभिः प्रत्येकं पूजयेत् । यथा—

| | |
|---|---|
| **कँ सृष्ट्यै नमः** | **चँ लक्ष्म्यै नमः** |
| **खँ ऋद्ध्यै नमः** | **छँ धृत्यै नमः** |
| **गँ स्मृत्यै नमः** | **जँ स्थिरायै नमः** |
| **घँ मेधायै नमः** | **झँ स्थित्यै नमः** |

---

१. एतदर्थं द्रष्टव्यमस्यैव ग्रन्थस्य प्रथम भागे

२. वाजसनेयिसंहितायाः १० अ. २४ मन्त्रः ।

**ङँ कान्त्यै नमः** **ञँ सिद्ध्यै नमः** इति संपूज्य—

[1]**ॐ प्रतद्विष्णुः स्तवते वीर्य्येण मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षिपन्ति भुवनानि विश्वाः**— इति मन्त्रेण जरादिदशकला आवाह्य प्राणप्रतिष्ठादिकं कृत्वा—

**ॐ जरादिदशकलाभ्यो नमः**—इति पञ्चोपचारै[1]: संपूज्य प्रत्येकं पूजयेत्। यथा—

| | |
|---|---|
| **टँ जरायै नमः** | **तँ कामिकायै नमः** |
| **ठँ पालिन्यै नमः** | **थँ वरदायै नमः** |
| **डँ क्षान्त्यै नमः** | **दँ ह्लादिन्यै नमः** |
| **ढँ ईश्वर्यै नमः** | **धँ प्रीत्यै नमः** |
| **णँ रत्यै नमः** | **नँ दीर्घायै नमः** इति संपूज्य— |

[2]**त्रियम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिवबन्धनान्मृत्यो-र्मुक्षीयमामृतात्** —इति मन्त्रेण तीक्ष्णादिदशकला आवाह्य—

ॐ तीक्ष्णादिदशकलाभ्यो नमः इति पञ्चोपचारैः संपूज्य प्रत्येकं पूजयेत् । यथा—

| | |
|---|---|
| **पँ तीक्ष्णायै नमः** | **यँ क्षुधायै नमः** |
| **फँ रौद्र्यैः नमः** | **रँ क्रोधिन्यै नमः** |
| **बँ भवायै[3] नमः** | **लँ क्रियायै नमः** |
| **भँ निद्रायै नमः** | **वँ उत्कारिण्यै नमः** |
| **मँ तन्द्रायै नमः** | **शँ मृत्यवे नमः** इति संपूज्य— |

**ॐ तद्विष्णोः परमं पदंसदा पश्यन्ति सूरयः दिवीव चक्षुराततम्**— इति मन्त्रेण गायत्र्या वा पीताद्याश्चतुष्कलाः पूर्ववदावाह्य पूजयेत् । यथा—

| | |
|---|---|
| **षँ पीतायै नमः** | **हँ असितायै नमः** |
| **सँ दारुणायै नमः** | **क्षँ अनन्तायै नमः** । इति संपूज्य— |

---

१.वाजसनेयिसंहितायाः ५ अ० २० मन्त्रः ।

२. वाजसनेयिसंहितायाः ३ अ० ६० मन्त्रः ।

३. बँ मयायै नमः—इत्यपि ३ पु० पा० ।

**[१]ॐ तद्विप्रासो विपन्यवो जागृवांसः समिधन्ते । विष्णोर्यत् परमं पदम् ।**

**विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंषतु ।**
**आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ।।**
**गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।**
**गर्भं ते अश्विनौ देवावधत्तां पुष्करस्रजौ ।।**

इति मन्त्रेण निवृत्त्यादिषोडशस्वरकला आवाह्य प्राणप्रतिष्ठादिकं कृत्वा पञ्चोपचारैः संपूज्य प्रत्येकं पूजयेत् । यथा—

| | |
|---|---|
| **अँ निवृत्त्यै नमः** | **लृँ परायै नमः** |
| **आँ प्रतिष्ठायै नमः** | **लॄँ सूक्ष्मायै नमः** |
| **इँ विद्यायै नमः** | **एँ सूक्ष्मामृतायै नमः** |
| **ईँ शान्त्यै नमः** | **ऐँ ज्ञानामृतायै नमः** |
| **उँ इन्धिकायै नमः** | **ओँ आप्यायिन्यै नमः** |
| **ऊँ दीपिकायै नमः** | **औँ व्यापिन्यै नमः** |
| **ऋँ रेचिकायै नमः** | **अँ व्योमरूपायै नमः** |
| **ॠँ मोचिकायै नमः** | **अँ अनन्तायै नमः** |

इति संपूज्य कलात्मकं तच्छङ्खस्थं जलं कुम्भे निःक्षिपेत् ।

ततोऽश्वत्थपनसचूतादिपल्लवैरिन्द्रवल्लीवेष्टितैः कल्पवृक्षधिया कुम्भवक्त्रं पिधाय तस्मिन् कुम्भमुखे सफलाक्षतं चषकं कल्पवृक्षफलधिया स्थापयेत् । ततः क्षौमवस्त्रयुग्मेन कुम्भं संवेष्टय वेदिकाया अधस्तान् पूर्वादिचतुर्दिक्षु द्वारसमीपेऽष्ट-दलमण्डलानि कृत्वा तेषु शालिपुञ्जानि निधाय तदुपरि पूर्णकलशान् संस्थाप्य तेषु पूर्वादिक्रमेण—

**ध्रुवधरावागीशविघ्नेशान्**— आवह्य पञ्चोपचारैः संपूज्य तेनैव प्रकारेणाग्नेयादिकोणेषु कलशान् संथाप्य तेषु—**अमृतदुर्जयसिद्धार्थमङ्गलान्**— आवाह्य पूजयेत् ।

पुनः पूर्वादिष्वष्टदिक्षु कलशान्तराणि संस्थाप्य तेषु—

**इन्द्रादिलोकपालान्**– अभ्यर्च्य तत्पुरतः—

---

१. वाजसनेयिसंहितायाः ६ अ० ५ मन्त्रः ।

**ऐरावतपुण्डरीकवामनकुमुदोञ्जनपुष्पदन्तसार्वभौमसुप्रतीकाख्यान्**–अष्टदिग्गजानपि पूजयेत् । ततः प्रधानकलशे मूलदेवतार्चनं कुर्यात् ।

तत्रादौ मूलमन्त्रमुच्चार्य—

**अमुकदेवताया मूर्तिं कल्पयामि नमः**—इति गन्धपुष्पादिभिर्मूर्तिं परिकल्प्यावाहनं कुर्यात् । तद्यथा—त्रिखण्डामुद्रान्तः पुष्पं निधाय देवतां ध्यात्वा त्रिः सकृद्वा मूलमन्त्रमुच्चार्य—

**भगवत्यमुकदेवते इहागच्छागच्छ**—इत्युक्त्वा सुषुम्णामार्गेण हृदयाम्भोजात् पुष्पाञ्जलौ देवतामानीय मूलमन्त्रमुच्चार्य आवाहनमुद्रया मूर्त्तौ स्थापयेत् । ततः संस्थापनमुद्रया मूलान्ते—

**अमुकदेवते इह तिष्ठ तिष्ठे**—त्युक्त्वा—

**देवेश भक्तिसुलभ सर्वावरणसंयुतम् ।**

**यावत् त्वां पूजयिष्यामि तावत् त्वं सुस्थिरो भव ।।१७।।**

इति संप्रार्थ्य पुनर्मूलमुच्चार्य सन्निधापनमुद्रया—

**अमुकदेवते इह सन्निधेहीह सन्निधेहि**–इति सन्निधापनं कृत्वा पूर्ववन्मूलमन्त्रमुच्चार्य— **अमुकदेवते इह सन्निरुद्धा भव भव**–इति सन्निरोधनमुद्रां प्रदर्श्य संमुखीकरणमुद्रया मूलान्ते—**अमुकदेवते संमुखीकृता भव भव**–इति संमुखीकृत्य पुनर्मूलमुच्चार्य—

**अमुकदेवते अवगुण्ठिता भव भव**– इत्यवगुण्ठनमुद्रयाऽवगुण्ठ्य देवताया हृदयाद्यङ्गेषु षडङ्गमन्त्रान् विन्यस्य मूलमुच्चार्य—

**अमुकदेवते सकलीकृता भव भव**— इति सकलीकृत्यामृतीकरणं कुर्यात्।

यथा— मूलमन्त्रेण दीपिनीमन्त्रेण अकारादिक्षकारन्तैर्मातृकावर्णैश्च त्रिधा त्रिधा धेनुमुद्रयाऽर्ध्योदकेनामृतवर्षणबुद्ध्या देवतामूर्ध्नि सिञ्चेत् । इयतेव 'देवता शुद्धि' रित्युच्यते ।

दीपिनीमन्त्रश्च—

**ऐँ वद वद वाग्वादिनि ऐँ क्लीँ क्लिन्ने क्लेदिनि क्लेदय महाक्षोभं कुरु कुरु क्लीँ सौँ मोक्षं कुरु कुरु ह्रोँ स्हौँ**— इति। ततो मूलमुच्चार्य धेनमुद्रयैव—

**अमुकदेवते अमृतीकृता भव भव** — इत्यमृतीकृत्य महामुद्रां बध्वा देवतामस्तके परमामृतवर्षणधिया मूलमन्त्रमुच्चार्य— **अमुकदेवते परमीकृता भव**— इति ब्रूयात् । अशक्तश्चेत् सर्वत्र मूलमन्त्रमुच्चार्य—

**आवाहिता भव, स्थापिता भव, सन्निहिता भव, सन्निरुद्धा भव, संमुखीकृता भव, अवगुण्ठिता भव, सकलीकृता भव, अमृतीकृता भव, परमीकृता भव-** इत्यावाहनादिमुद्राः प्रदर्शयेत् । ततः प्राणशक्तिन्यासं कुर्यात् ।

**अस्य प्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुःसामानि च्छन्दांसि प्राणशक्तिर्देवता आँ बीजं ह्रीँ शक्तिः क्रोँ कीलकममुकदेवता-प्राणप्रतिष्ठायां विनियोगः । ब्रह्माविष्णुमहेश्वरेभ्य ऋषिभ्यो नमः**—शिरसि।

**ऋग्यजुःसामभ्यश्छन्दोभ्यो नमः**—मुखे ।

**प्राणशक्त्यै देवतायै नमः**–हृदि ।

**आँ बीजाय नमः**— गुह्ये ।

**ह्रीँ शक्तये नमः**— पादयोः ।

**क्रोँ कीलकाय नमः**— नाभौ ।

**अमुकदेवताप्राणप्रतिष्ठायां विनियोगः**— इति सर्वाङ्गे व्यापकम् ।

**ॐ आँ ह्रीँ क्रोँ अँ कँ खँ गँ घँ ङँ आकाशवायुतेजोजलपृथिव्यात्मने आँ अङ्गुष्ठाभ्यां नमः ।**

**ॐ आँ ह्रीँ क्रोँ इँ चँ छँ जँ झँ ञँ शब्दस्पर्शरूपरसगन्धात्मने ईँ तर्जनीभ्यां स्वाहा ।**

**ॐ आँ ह्रीँ क्रोँ उँ टँ ठँ डँ ढँ णँ श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊँ मध्यमाभ्यां वषट् ।**

**ॐ आँ ह्रीँ क्रोँ एँ तँ थँ दँ धँ नँ वाक्पाणिपादपायूपस्थात्मने ऐँ अनामिकाभ्यां हुं ।**

**ॐ आँ ह्रीँ क्रोँ ओँ पँ फँ बँ भँ मँ वचनादानगमनविसर्गानन्दात्मने औँ कनिष्ठिकाभ्यां वौषट् ।**

**ॐ आँ ह्रीँ क्रोँ अँ यँ रँ लँ वँ शँ षँ सँ हँ लँ क्षँ मनोबुद्ध्यहङ्कारात्मने अँः करतलकरपृष्ठाभ्यां फट् ।**

एवं हृदयादिषडङ्गन्यासं विधाय—

**ओँ नमः**—नाभेरधः ।

**ह्रीँ नमः**— कण्ठादधः ।

**क्रोँ नमः**— शिरसोऽधो व्यापकं विधाय हृत्पद्मस्य पूर्वादिदलेषु कर्णिकायां च—

**लँ नमः, रँ नमः, हँ नमः, षँ नमः, वँ नमः, यँ नमः, सँ नमः, शँ नमः, क्षँ नमः**—इति क्रमेण विन्यस्य ध्यायेत् ।

ध्यानं यथा—

**रक्ताब्धिपोतारुणपद्मसंस्थां**
**पाशाङ्कुशाविक्षुशरासबाणान् ।**
**शूलं कपालं दधतीं कराब्जै**
**रक्तां त्रिनेत्रां प्रणमामि देवीम् ।।**

इति ध्यात्वा मृगमुद्रया पुष्पादिना देवताया हृदयं स्पृष्ट्वा प्राणप्रतिष्ठां कुर्यात्। तन्मन्त्रो यथा—

**ॐ आँ ह्रीँ क्रोँ यँ रँ लँ वँ शँ षँ सँ हँ सः सोहं मूलान्ते अमुकदेवतायाः प्राणा इह इह स्थिताः ।**

एवम्—

**जीव इह इह ।**

एवम्—

**सर्वेन्द्रियाणि वाङ्मनश्चक्षुः श्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा ।**

प्रणवं मूलमन्त्रं वा त्रिवारं जप्त्वा देवतामूर्त्तौ मूलमन्त्रस्य ऋष्यादि-करषडङ्गन्यासान् विधाय स्वस्वकल्पोक्तमुद्राः प्रदर्श्योपचारान् समर्पयेत् ।

तत्र प्रथमतः—

**देवेदमासनं रम्यं मया तुभ्यं प्रकल्पितम् ।**
**भवैतस्मिन्निषण्ण त्वं यावत् पूजां करोम्यहम् ।।१९।।**

इत्युक्त्वा मूलमन्त्रमुच्चार्य—

**अमुकदेवतायै इदमासनं नमः**—इति देवस्य वामभागे आसनं दद्याद् ।

ततः साङ्गां सावरणां सायुधां देवतां पूजार्थमागतां ध्यात्वा मूलान्ते—

**अमुकदेवते स्वागतम्** — इति तन्मुद्रया स्वागतं परिकीर्त्य—

**इदं श्यामाकदूर्वाब्जविष्णुक्रान्तासमन्वितम् ।**
**पाद्यं गृहाणा देवेश तीर्थतोयैः प्रकल्पितम् ।।२०।।**

इत्युक्त्वा मूलान्ते—

**अमुकदेवतायै पाद्यं नमः**— इति पाद्यपात्रस्थजलेन पादयोः पाद्यं दद्यात्।

**गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपैः ।**

**दूर्वाभिश्च समायुक्त एषोऽर्घः प्रतिगृह्यताम् ।।२१।।**— इत्युक्त्वा मूलमुच्चार्य—

**अमुकदेवतायै अर्घ्यं स्वाहा**— इति हस्तयोः शिरसि चार्घं दद्यात् ।

**जातीलवङ्गङ्कोलकर्पूरादिसुवासितम् ।**

**गृहाण देवदेवेश एतदाचनीयकम् ।।२२।।**— इत्युक्त्वा—मूलान्ते—

**अमुकदेवतायै इदमाचमनीयं स्वधा**— इति वा मुखे आचमनीयं तत्पात्रस्थजलेन दद्यात् —

**आज्येन मधुना दध्ना त्वदर्थं परिकल्पितम् ।**

**गृहाण कांस्यपात्रस्थं मधुपर्कं सुरेश्वर।।२३।।**—इति पठित्वा मूलमन्त्रमुच्चार्य—

**अमुकदेवतायै मधुपर्कं स्वधा**— इति मुखे मधुपर्कं दद्यात् ।

ततः पुनराचमनीयपात्रस्थजलेनाचमनीयवत् पुनराचमनीयं दत्वा—

**तिलतैलसमायुक्तं सुगन्धिद्रव्यनिर्मितम् ।**

**उद्वर्तनमिदं देव गृहाण त्वं प्रसीद मे ।।२४।।**—इति श्लोकान्ते मूलमन्त्रमुच्चार्य—

**अमुकदेवतायै तत्सुगन्धितैलः संयुक्तमुदवर्तनं नमः**–

**गव्यं क्षीरं दधि घृतं शर्कराक्षौद्रसंयुतम् ।**

**पञ्चामृतं यदेतच्च तेन त्वां स्नापयाम्यहम्।।२५।।**— इति पठित्वा मूलमुच्चार्य पञ्चामृतेन—

**अमुकदेवता स्नापयामि नमः**—इति पृथग्युगपदेव वा संस्नाप्य—

**अन्यानिवेदितं तोयं प्रकृतिस्थं सुशीतलम् ।**

**सुगन्धिद्रव्यसंयुक्तं स्नानार्थं प्रतिगृह्यताम्।।२६।।**-इत्युक्त्वा मूलान्ते

**अमुकदेवतायै स्नानं नमः अमुकदेवतां स्नापयामि नमः**–

इति वा शङ्खोदकेन स्नानं कारयेत् । शैवे तु शङ्खोदकनिषेधादर्घोदकेनैव स्नापनम् । ततो मूलान्ते—

**अमुकदेवतायै पुनराचमनीयं स्वधा**—इति । **वँ**—इति वा पुनराचमनीयं तत्पात्रस्थजलेन दद्यात् । तत्तत्पात्राभावे तु शङ्खादिजलेनैव पाद्यादि दद्यात् । ततः—

**इमे सुसूक्ष्मे मृदुनी कीटकोशसमुद्भवे ।**

**कृपया देवदेवेश परधित्स्व सुवाससी।।२७।।**—इति पठित्वा

मूलमुच्चार्य—

**अमुकदेवतायै वस्त्रं निवेदयामि नमः**— इति क्षौमादिवस्त्रयुग्मं निवेद्य मूलान्ते—

**अमुकदेवतायै यज्ञोपवीतं नमः**—इति यज्ञोपवीतं निवेद्य—

**सौवर्णाभरणं दिव्यं मुक्तारत्नोपशोभितम् ।**

**रमणीयमिदं देव गृहाण प्रीतिमावह ।।२८।।**— इति पठित्वा मूलमन्त्राते—

**अमुकदेवतायै स्वर्णादिघटितान्याभरणानि निवेदयामि**—इत्याभरणानि निवेद्य—

**कुरङ्गमदकर्पूररोचनादिसमन्वितम् ।**

**गृहाण मलयोत्पन्नमेतत् सुरभिचन्दनम।।२९।।**—इति पठित्वा— मूलमुच्चार्य—

**अमुकदेवतायै गन्धं नमः**— इति गन्धं निवेद्य—

**नानाविधानि चैतानि जलस्थलरुहाणि च ।**

**सुगन्धीनि सुपुष्पाणि गृहाण जगदीश्वर।।३०।।**—इत्युक्त्वा— मूलमन्त्रान्ते—

**अमुकदेवतायै पुष्पाणि वौषट्**—इति । **नमः** —इति वा पुष्पाणि निवेदयेत्। स्त्रीदैवते तु देवेत्यादौ देवीत्यादि पठनीयम् । ततः पूजां कुर्यात् । यथा—मूलमन्त्रमुच्चार्य—

**श्रीपादुकां पूजयामि नमः**—इति पुष्पाञ्जलिना त्रिवारमभ्यर्च्य मूलमन्त्रपुटितैर्मातृकावर्णैर्देवतायास्तत्तत्स्थानेषु संपूज्य परिवारार्चनार्थमाज्ञामादायावरणपूजां कुर्यात् । यथा—

**तुषारस्फटिकश्यामनीलकृष्णारुणार्चिषः ।**

**वरदाभयधारिण्यः प्रधानतनवः स्त्रियः ।।**

**अग्नीशासुरवायव्यमध्यदिक्षु क्रमात् स्थिताः ।।३१।।**

इत्यङ्गदेवतां ध्यात्वा अग्नीशासुरवायव्य कोणेष्वग्रेर्दिक्षु च क्रमेणाङ्गदेवताः पूजयेत्। ततो वायव्ये पुरत ईशाने च गुर्वोघत्रयं च संपूज्य वायव्यादीशानपर्यन्तम्—

**ॐ श्रीगुरुभ्यो नमः**        **ॐ श्रीपरापरगुरुभ्यो नमः**

**ॐ श्रीपरमगुरुभ्यो नमः**        **ॐ श्रीपरमेष्ठिगुरुभ्यो नमः**

इति गुरुपङ्क्तीः पूजयेत् ।

त्रिपुरादिविषये तु—

**ऐँ ह्रीँ श्रीगुरुभ्यो नमः। गुरुपादुकाभ्यो नमः**—इत्येवं पूजयेत्। ततः स्वकल्पोक्तपरिवारदेवताः सम्पूज्य पूर्वादिषु इन्द्रादिदशलोकपालान् पूजयेत्। यथा—

| | |
|---|---|
| **लँ इन्द्राय नमः** | **यँ वायवे नमः** |
| **रँ अग्नये नमः** | **सँ कुवेराय नमः** |
| **मँ यमाय नमः** | **हँ ईशानाय नमः** |
| **क्षँ नैर्ऋताय नमः** | **आँ ब्रह्मणे नमः**—ऊर्ध्वम्। |
| **वँ वरुणाय नमः** | **अँ अनन्ताय नमः**—अधः। |

इति संपूज्य वज्रादिदशशस्त्राणि पूजयेत्।

तद्यथा—

| | |
|---|---|
| **वँ वज्राय नमः** | **अँ अङ्कुशाय नमः** |
| **शँ शक्तये नमः** | **गँ गदायै नमः** |
| **दँ दण्डाय नमः** | **शँ शूलाय नमः** |
| **खँ खड्गाय नमः** | **पँ पद्माय नमः** —ऊर्ध्वम्। |
| **पँ पाशाय नमः** | **चँ चक्राय नमः**—अधः। |

इति गन्धपुष्पादिभिः संपूज्य पुनर्मूलमन्त्रमुच्चार्य—

**साङ्गायै सवाहनायै सालङ्कारायै सायुधायै सपरिवारायै श्री-अमुकदेवतायै श्रीपादुकां पूजयामि नमः**— इति त्रिः सकृद्वा संपूज्य मूलमन्त्रमुच्चार्य तत्त्वमुद्रया—

**अमुकदेवतां तर्पयामि नमः**— इति त्रिवारं तर्पयेत्। ततो धूपपात्राग्नौ धूपं निधायास्त्रमन्त्रेण संप्रोक्ष्य—**नमः**— इति गन्धपुष्पाक्षतैः संपूज्य मूलमन्त्रेणाभिमन्त्र्य धेनुमुद्रयाऽमृतीकृत्य—

**ॐ जयध्वनिमन्त्रमातः स्वाहा**— इति मन्त्रेणास्त्रेण वाद्यघण्टां संपूज्य वामहस्तेन तां वादयन्—

**वनस्पतिरसोद्भूतो गन्धाढ्यःसुमनोहरः।**
**आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्॥३२॥**—इति पठित्वा मूलमन्त्रान्ते—

**अमुकदेवतायै धूपं निवेदयामि**— इति नीचैर्धूपं निवेद्य देवस्य वामभागे पुरतो वा स्थापयेत्। ततो दीपपात्रे दीपं प्रज्वाल्य धूपवत् संस्कृत्य घण्टां वादयन्—

**सुप्रकाशो महादीपः सर्वत्र तिमिरापहः ।**

**सवाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम।।३३।।**—इति पठित्वा मूलान्ते—

**अमुकदेवतायै दीपं निवेदयामि**—इति दीपं निवेद्य देवस्य दृष्टिपर्यन्तमुत्तोल्य परिभ्राम्य घृतयुक्तं चेद्दक्षिणं तैलयुक्तं चेद्वामे सिता वर्त्तिश्चेद्दक्षिणे रक्ता वर्ति श्चेद्वामे दीपं स्थापयेत् । पुरतस्तु न नियमः । ततो देवतायाः पुरतः सामान्यार्धजलेन भूमिं संप्रोक्ष्य चतुरस्रमण्डलं कृत्वा तत्र स्वर्णादिनिर्मितं साधारं नैवेद्यपात्रं संस्थाप्य तस्मिन् पात्रे यथोक्तं यथासम्भवं वा नैवद्यं निधायास्त्रमन्त्रेण संप्रोक्ष्य चक्रमुद्रया संरक्ष्य—**यँ**— इति वायुबीजेन संशोध्य—**रँ**— इति वाह्नबीजेन संदह्य दक्षकराग्रेण स्पृष्ट्वा—**वँ**—इति वरुणबीजमुच्चरन् धेनुमुद्रयाऽमृतीकृत्य मूलमन्त्रेणाष्टधा कराभ्यामभिमन्त्र्य धेनुमुद्रां प्रदर्श्य—**नमः**— इति मन्त्रपुष्पादिभिरभ्यर्च्य मूलमन्त्रेण पुष्पाञ्जलित्रयं देवतायै दत्वा—

**नैवेद्यं षड्रसोपेतं चतुर्विधमिदं तव ।**
**स्थापितं पुरतो भक्त्या गृहाण तुष्टिमावह ।।३४**
**हेमपात्रस्थितं दिव्यं परमान्नं सुसंस्कृतम् ।**
**पञ्चषड्रससंयुक्तं गृहाण मम सिद्धये ।।३५।।**

इति पठित्वा नैवेद्यपात्रं कराभ्यां स्पृष्ट्वा मूलमन्त्रमुच्चार्य—

**अमुकदेवतायै इदं यथासम्भवं निवेदयामि नमः स्वाहा-** इति दक्षिणहस्तेन जलमादाय नैवेद्यं समर्पयेत् । ततो देवस्य दक्षिणहस्ते—

**ॐ अमृतोपस्तरणमसि स्वाहा**–इति जलं दत्वा वामहस्तेन विकचोत्पलनिभां ग्रासमुद्रां प्रदर्श्य दक्षिणहस्तेनोक्तमुद्राभिः—

**ॐ प्राणाय स्वाहा** **ॐ व्यानाय स्वाहा**
**ॐ अपानाय स्वाहा** **ॐ समानाय स्वाहा–**
**ॐ उदानाय स्वाहा**

इति पञ्चप्राणाहुतीर्हुत्वा पात्रान्तरे जलं निधाय धेनुमुद्रयाऽमृतीकृत्य—

**नमस्ते देवदेवेश सर्वतृप्तिकरं वरम् ।**
**अन्यानिवेदितं शुद्धं प्रकृतिस्थं सुशीतलम् ।।**
**परमानन्दसंपूर्णं गृहाण जलमुत्तमम् ।।३६।।** इत्युक्त्वा देवताया वामभागे जलपात्रं निवेश्य मूलेन पुष्पाञ्जलिं दत्वाऽस्त्रमन्त्रेण दिंग्बन्धनं विधाय देवतायाः परितो यवनिकां कृत्वा—

**अमृतात्मकनैवेद्यं नमः–** इत्युच्चार्य धेनुमुद्रां प्रदर्श्य भुञ्जानां देवतां

स्मृत्वाऽष्टोत्तरशतं दशधा वा मूलमन्त्रं प्रजप्य—

**ॐ अमृतापिधानमसि स्वाहा**–इति जलं दद्यात् ।

ततो दक्षिणे स्थण्डिलं कृत्वा वक्ष्यमाणप्रकारेणाग्निं संस्थाप्य तस्मिन्नग्नौ देवतामावाह्य पाद्यादिभिर्गन्धपुष्पादिभिश्च संपूज्य घृतयुक्तेन पायसेन वैश्वदेवाख्यं होमं कुर्यात् ।

तत्र प्रथमं सप्रणवाभिर्व्याहृतिभिर्हुत्वा मूलमन्त्रेण पञ्चविंशत्याहुतीर्दद्यात् । पुनर्व्याहृतिभिर्हुत्वा पञ्चोपचारैर्देवतां संपूज्य पीठमूर्त्तौ तां संयोज्य वह्निं विसृजेत् ।

ततः शिष्टेन पायसेन—

**ॐ अमुकदेवतायाः पार्षदेभ्य एष वलिर्नमः**–इति पार्षदभ्यो गन्धपुष्पाक्षतसहितं वलिं विसृजेत् ।

ततो यवनिकामुद्घाट्य देवेन यथेष्टं भुक्तं नैवेद्यं सम्भाव्य नैवेद्यपात्रं नैर्ऋतेर्दिशि संस्थाप्य नैवेद्यस्थानमस्त्रमन्त्रेण गोमयाद्भिः संशोध्य देवोच्छिष्टं किंचित् समादाय—

**ॐ निर्माल्यभोजिने नमः**—इत्यैशान्यां दिशि क्षिपेत् । ततो हस्तौ प्रक्षाल्य ताम्बूलमादाय पुरतः संस्थाप्य—

**एलालवङ्गखदिरचूर्णपूगादिसंयुतम् ।**
**ताम्बूलं देवदेवश गृहाण त्वं प्रसीद मे।।३७।।**—इति पठित्वा—मूलान्ते—

**अमुकदेवतायै इदं ताम्बूलं निवेदयामि स्वाहा**—इति निवेद्यं मूलेन गन्धपुष्पादिभिस्त्रिवारं पूजयेत् । ततो दर्पणं प्रदर्श्य छत्रचामरादिकं निवेद्य शक्तिविषये तु स्वकल्पोक्त-मन्त्रेण देवतायै माषभक्तादिवलिं दत्वा आग्नेयादिषु पूर्वदक्षिणोत्तर-पश्चिमभागेषु वा यथाक्रमं 'गणेशवटुकक्षेत्रपालयोगिनीभ्यो' वलिं दद्यात् । तत्र क्रमस्तु—

मण्डलानि कृत्वा वलिपात्राणि संस्थाप्य—

**गाँ गणेशाय वलिमूर्त्तये नमः**— इत्यादिमन्त्रेण वलिं संपूज्य—

**गाँ गणेशाय नमः**　　**क्षाँ क्षेत्रपालाय नमः**
**वाँ वटुकाय नमः**　　**याँ योगिनीभ्यो नमः**

इति मन्त्रैर्गन्धपुष्पादिभिस्तानभ्यर्च्य—

**गाँ गीँ गूँ गणपतेय वर वरद सर्वजनं मे वशमानय वलिं गृह्ण गृह्ण स्वाहा—एष वलिर्गणपतये नमः**—इति गणेशाय वलिं दत्वा—

**ऐह्येहि देवीपुत्र वटुकनाथ कपिलजटाभार भासुर त्रिनेत्र ज्वालामुख सर्वविघ्नान् नाशय सर्वोपचारसहितं वलिं गृह्ण गृह्ण स्वाहा-एष वलिं वटुकाय नमः**—इति वटुकाय वलिं दत्वा—

**क्षाँ क्षीँ क्षेँ क्षैँ क्षौँ क्षः क्षेत्रपालाय धूपदीपादिसहितं वलिंगृह्ण गृह्ण स्वाहा-एष वलिः क्षेत्रपालाय नमः**—इति क्षेत्रपालाय वलिं दत्वा—

**याँ योगिनीभ्यः स्वाहा**—

**ऊर्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले निष्कले वा**
**पाताले वाऽनले वा सलिलपवनयोर्यत्र तत्र स्थिता वा ।**
**क्षेत्रे पीठोपपीठादिषु च कृतपदाः पुष्पधूपादिकेन**
**प्रीता देव्यः सदा नः शुभविधि वलिना पान्तु वीरेद्रवन्द्याः ।।३८।।**

**एष वलिर्योगिनीभ्यो नमः**–इति योगिनीभ्यो वलिं दद्यात्। वैष्णवादौ तु भूतवलिमात्रम्। ततो भूतवलिं दद्यात्। तद्यथा—

ईशाने मण्डलं कृत्वा अन्नव्यञ्जनपुष्पाक्षतजलादियुक्तं साधारं वलिपात्रं संस्थाप्य तत्र—

**ॐ सर्वेभ्यो भूतेभ्यो नमः**–इति गन्धपुष्पादिभिः संपूज्य—

**ये रौद्रा रौद्रकर्माणो रौद्रस्थाननिवासिनः ।**
**योगिन्योऽप्युग्ररूपाश्च गणानाथाधिपाश्च ये ।।३९।।**
**भूचराः खेचराश्चैव ये तिष्ठन्त्यन्तरिक्षगाः ।**
**सर्वे ते प्रीतमनसो भूत्वा गृह्णन्त्विमं वलिम् ।।४०।।**

इति पठित्वा वामहस्तेन तत्पात्रे जलधारां समर्प्य—

**ॐ सर्वेभ्यो भूतेभ्य एषोऽन्नवलिर्नमः**–इति दक्षहस्तेनोत्सृजेत्।

ततः पुष्पाञ्जलिमादाय प्रार्थयेत्।

**भूतानि यानीह वसन्ति भूतले**
**वलिं गृहीत्वा विधिवत् प्रयुक्ताम् ।**
**सन्तोषमासाद्य व्रजन्तु सर्वे**
**क्षमन्तु तान्यत्र नमोऽस्तु तेभ्यः ।।४१।।**

इति संप्रार्थ्य पुष्पाञ्जलिं दत्वा नत्वा च—

**भूतानि यथासुखं विहरन्तु**–इति नाराचमुद्रया विसृजेत्। ततो मूलमष्टोत्तरसहस्रं प्रजप्य—

**गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ।**

**सिद्धिर्भवतु मे देव त्वत्प्रसादाज्जगत्पते ।।४२।।**

इति जपं निवेद्य यथाशक्ति स्तुत्वा प्रणम्य आसनादुत्थाय त्रिः परिक्रम्य साष्टाङ्गं प्रणमेत् । तत ईशानस्थे पूर्वसञ्चितविकिरपुञ्जेषु सुवर्णगर्भां वस्त्रवेष्टितां जलपूरितां वर्द्धनीं संस्थाप्य—

**सिंहस्थां खड्गखेटकधारिणीं घोररूपां पश्चिमास्याम्**–अस्त्रदेवतां ध्यात्वा तस्यामावाह्य—

**फट् अस्त्रदेवतायै नमः**–इति मन्त्रेण पञ्चोपचारैश्चलासनेनैव संपूज्य तां कर्करीमादाय—

**अमुकदेवताज्ञया इन्द्रामुकदेवयजनं रक्ष**–इत्यादिसकललोकपालान् भावयन् नालाद्वारिधारां विमोच्य मण्डपाभ्यन्तरं प्रदक्षिणीकृत्य—**फट्**– इत्यस्त्रमन्त्रमुच्चार्य यथास्थानं निवेशयेत् । ततः स्थिरासनो भूत्वा गन्धाद्यैरुपचारैः पूर्ववत् संपूज्य प्रणमेत् । तत आचार्यः स्वीयकुण्डे पूर्वेशानमध्यस्थे विधिवदग्निसंस्कारं कुर्यात् । तत्रादौ कुण्डस्थानमागत्यासने उपविश्य तत्त्वत्रयेणाचम्य कुशत्रयतिलजलान्यादाय संकल्पं कुर्यात् । तद्यथा—

**ॐ अद्य**–इत्यादिदेशकालौ संकीर्त्य—**अमुकगोत्रोऽमुकदेवशर्माऽमुक-गोत्रामुकशर्मकर्त्तृकामुकदेवतामुकमन्त्रदीक्षाकर्माङ्गभूतहोमकर्माहं करिष्ये**–इति संकल्प्य पूर्वोक्तमन्त्रेण सूर्यार्घं दत्वा सामान्यार्घं संस्थाप्य कुण्डस्य वीक्षणाद्यष्टादश-संस्कारान् कुर्यात् । तद्यथा—

मूलमन्त्रमुच्चरन् कुण्डं पश्येदिति 'वीक्षणम्' । **फट्** इत्यस्त्रमन्त्रेण 'प्रोक्षणम्'। तेनैव मन्त्रेण दर्भैस्त्रिधा 'ताडनम्' । **हुँ**–इति कवचमन्त्रेणा 'भ्युक्षणम्' । **फट्**– इत्यस्त्रमन्त्रेणाङ्गुलमानेन 'खननम्' । तेनैव मन्त्रेणाङ्गुष्ठानामिकाभ्यां 'मृत्तिकोद्धरणम्' । **नमः**–इति हृन्मन्त्रेण पुनर्मृत्तिकाभिः 'पूरणम्' । अस्त्रमन्त्रेण 'समीकरणम्' । **हुँ**–इति जलेन 'सेचनम्' । **फट्**–इति 'कुट्टनम्' । तच्च काष्ठादिना हस्तेनैव वा दृढीकरणम् । ततः— **हुँ**–इति मन्त्रेण कुशमुष्टिना कुण्डे मृदं मार्जयेदिति 'मार्जनम्' । तेनैव मन्त्रेण गोमयेनोपलेपयेदिति 'लेपनम्'। तत्रस्तेनैव मन्त्रेण कुण्डमध्ये सोमसूर्याग्निकलाश्चित्कलाश्चिन्तयेदिति 'कलारूपकल्पनम्' । **हुँ**–इति कवचमन्त्रमुच्चरन् सूत्रत्रयेण कुण्डमेखलास्त्रिवारं वेष्टयेदिति 'त्रिसूत्रीकरणम्' ।

**ॐ अमुककुण्डाय नमः**–इति मन्त्रेण कुण्डं पूजयेदित्य 'र्चनम्' ।

कुण्डार्चनानन्तरम्—

**ॐ अमुककुण्डनाभये नमः–ॐ अमुककुण्डमेखलाभ्यो नमः–**

इति पूजयेत्। अस्त्रमन्त्रेण कुण्डं वज्रवद्दृढं चिन्तयेदिति 'वज्रीकरणम्'। कुण्डमध्ये पूर्वाग्रं कुशं निधाय तदुपर्युत्तराग्रं कुशं निधायोपरि विष्टरं न्यस्य तदुपरि पुष्पं दत्वा— **नमः**–इति हृन्मन्त्रेण पूजयेदिति 'चतुष्पथीकरणम्।

अस्त्रमन्त्राभिमन्त्रितानच्छिन्नाग्रान् कुशान् मेखलासु कवचमन्त्रमुच्चरन्नास्तरेदित्य 'क्षपाटनम्'। इत्यष्टादशसंस्कारान् कुर्यात्। अष्टादशसंस्कारकरणाशक्तस्तु पूर्वोक्तवीक्षणादिसंस्कारचतुष्टयमेव कुर्यात्। वाममार्गे तु संस्कारचतुष्टयमेव कुर्यात्। ततः कुण्डमध्ये दर्भमूलेन स्रुवमूलेन वा—**नमः**–इत्युच्चरन् प्रागग्रास्तिस्रो रेखा उदगग्रास्तिस्रो रेखा लिखेत्। तत्र प्रागग्रा रेखा दक्षिणोपक्रमा उदगपवर्गा उदगग्राश्च पश्चिमोपक्रमाः प्रागपवर्गा इति लिखनक्रमः। अथ वा त्रिकोणगर्भं वृत्तवेष्टितं षट्कोणं लिखेदिति (शारदायाम्) उक्तम्। उक्तरेखाषट्कं तादृशषट्कोणं च लिखेदिति (मेरुतन्त्रे) प्रोक्तम्। त्रिकोणमध्ये लज्जाबीजं प्रणवं च लिखेदित्यपि क्वचिदुक्तम्। ततः— प्रागग्ररेखासु—

| | |
|---|---|
| **ॐ मुकुन्दाय नमः** | **ॐ ब्रह्मणे नमः** |
| **ॐ ईशानाय नमः** | **ॐ वैवस्वंताय नमः** |
| **ॐ पुरन्दराय नमः** | **ॐ इन्दवे नमः** |

इति लिखनक्रमेणैव गन्धपुष्पादिभिः पूजयेत्। ततो मूलमुच्चार्य—**अमुकदेवताकुण्डाय नमः**–इति पूजयेत्। श्रीविद्याविषये तु—

**ऐँ ह्रीँ श्रीँ ऐँ क्लीँ सौँः मुकुन्दाय नमः**–इत्यादिक्रमेणैव पूजयेत्।

ततः प्रणवमुच्चरन् समान्यार्घजलेनाभ्युक्ष्य योगपीठदेवताः पूजयेत्। तद्यथा— कुण्डमध्ये घटस्थापनोक्तक्रमेण—

**ॐ आधारशक्तये नमः**–इत्यादि—

**ॐ रत्नसिंहासनाय नमः**–इत्यन्तं सम्पूज्य अग्न्यादिकोणेषु धर्मादीनभ्यर्च्य पूर्वादिदिक्षु अधर्मादीन् पूजयेत्। ततोऽष्टदलकमलं विचिन्त्य—

**ॐ अनन्ताय नमः**–इत्यादि—

**ह्रीँ ज्ञानात्मने नमः**–इत्यन्तं संपूज्य—पूर्वादिकेशरेषु—

| | |
|---|---|
| **ॐ जयायै नमः** | **ॐ नित्यायै नमः** |
| **ॐ विजयायै नमः** | **ॐ विलासिन्यै नमः** |
| **ॐ अजितायै नमः** | **ॐ दोग्ध्र्यै नमः** |
| **ॐ अपराजितायै नमः** | **ॐ अघोरायै नमः** |

मध्ये—

**ॐ मङ्गलायै नमः**—इति पीठशक्तीः पूजयेत् । वैष्णवे तु—

**ॐ विभूत्यै नमः** **ॐ सन्नत्यै नमः**

**ॐ उन्नत्यै नमः** **ॐ पुष्ट्यै नमः**

**ॐ कान्त्यै नमः** **ॐ उत्कृष्ट्यै नमः**

**ॐ सृष्ट्यै नमः** **ॐ ऋद्ध्यै नमः**

**ॐ कीर्त्त्यै नमः**

इति पीठशक्तीः पूजयेत्

ततः—

**ह्रीँ वागीश्वरीवागीश्वरयोर्योगपीठात्मने नमः**—इति पीठमन्त्रेण पीठं पूजयेत् ।

**ह्रीँ सर्वशक्तिकमलासनाय नमः**—इति मन्त्रेण वा पूजयेत् । वैष्णवे तु—

**श्रीलक्ष्मीनारायणयोर्योगपीठात्मने नमः**—इति पूजयेत् । ततः—

**वागीश्वरीमृतुस्नातां नीलेन्दीवरसन्निभाम् ।**
**वागीश्वरेण संयुक्ताम्** ·········।।४३।। इति ध्यात्वा—श्रीविद्यायां तु—
**कामेश्वरीं कुण्डमध्ये सकामामृतुसंयुताम्**—इति ध्यात्वा—वैष्णवे तु—
**लक्ष्मीमृतुमतीं तत्र प्रभोर्नारायणस्य च ।**
**ग्राम्यधर्मेण संयुक्ताम्** ···।।४४।।इति ध्यात्वा तत्रावाह्य आवाहनादिमुद्राः प्रदर्श्य—

**ह्रीँ वागीश्वरीवागीश्वराभ्यां नमः** । श्रीविद्यापक्षे तु—

**क्लीँ कामेश्वरीकामेश्वराभ्यां नमः** । वैष्णवे तु—

**श्रीँ लक्ष्मीनारायणाभ्यां नमः**—इति मन्त्रेण पञ्चोपचारैः पूजयेत् । एवं सौरेऽपि । अथ वा शैवशाक्तादौ—

**कामोन्मत्तं शिवमृतुमतीं भुवनेश्वरीम्**—ध्यात्वा—

**ह्रीँ भुवनेश्वरीशिवाभ्यां नमः**—इति मन्त्रेण पूजयेत् ।

ततः सूर्यकान्तादिसम्भूतमरणिसम्भवं वा श्रोत्रियगेहजं वा वह्निं स्वर्णपात्राद्यन्यतमपात्रे निधाय पात्रान्तरेणाच्छाद्य समानीय—**फट्**—इत्यस्त्रमन्त्रेणाग्निं स्वदक्षिणे समाधाय— **हुँ**—इति कवचमन्त्रेणाच्छाद्य तस्मात् क्रव्यादंशमादाय—**हुँ फट्**—इति नैर्ऋत्ये क्षिपेत् ।

ततोऽवशिष्टमग्निं देवांशं विचिन्त्य मूलमन्त्रेण पुरतः संस्थाप्य कुण्डसंस्कारोक्तक्रमेण वीक्षणादिभिश्चतुर्भिः संस्कृत्य औदर्यबैन्देवाग्निभ्यां भौमस्य वह्निरैक्यं भावयेत् । बैन्दवो भ्रूमध्यस्थो वह्निः । ततः—

**रँ वह्निचैतन्यं कल्पयामि**–इति ।

**हुं रँ चैतन्यं ते नमः**–इति मन्त्रेण वा पावकचैतन्यं संयोज्य प्रणवेणाष्टोत्तरशतं दशधा वाऽभिमन्त्र्य धेनुमुद्रयाऽमृतीकृत्य—**फट्**–इति संरक्ष्य—**हुँ**–इत्यवगुण्ठ्य गन्धपुष्पादिभिः पूजयेत् ।

**रँ वह्निमूर्त्तये नमः**–इत्यभ्यर्च्य कुण्डस्योपरि प्रादक्षिण्येन त्रिः परिभ्राम्य जानुस्पृष्टमहीतलः प्रणवोच्चारणपूर्वकमात्मनोऽभिमुखं शिवबीजधिया देव्या योनौ निःक्षिपेत् । शिवबीजधिया शैवशाक्तादौ, वैष्णवादौ तु विष्णवादिबीजधियेति बोध्यम् ।

ततः—

**ह्रीँ वागीश्वरीवागीश्वराभ्यामाचमनीयं नमः**–इत्याचमनीयं दत्वा—

**बह्रिरूपां देवताम्**– देव्या गर्भे धृतां ध्यात्वा गर्भरक्षार्थं दर्भकङ्कणं दत्वा—

**चित्पिङ्गल-हन हन दह दह पच पच सर्वाज्ञाज्ञापय स्वाहा**–

इति मन्त्रेण ज्वालिनीमुद्रया प्रज्वालयेत् ।

रुद्रयामले तु—

**ह्रीँ ह्रीँ ज्वल ज्वल प्रज्वल प्रज्वल हुँ फट् स्वाहा**–इति मन्त्रेणाग्निप्रज्वालन-मुक्तम् । ततः कृताञ्जलिः—

**ॐ अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ।**

**सुवर्णवर्णममलं समिद्धं विश्वतोमुखम् ।।४५।।**इत्यनेन वह्निमुपतिष्ठेत् ।

ततः प्रादेशमात्रां मूलाग्रयोर्घृतसंप्लुतां समिधं वह्नौ तूष्णीं हुत्वा पूजा-प्रकरणोक्तक्रमेण गणेशादिवन्दनदिग्बन्धनभूतशुद्धिप्राणायाममातृकान्यासमूलन्यासान् विधाय स्वदेहे वह्निजिह्वान्यासं कुर्यात् । तत्र सात्त्विकीनां जिह्वानां न्यासः । यथा—

**स्रूँ हिरण्यायै नमः**–लिङ्गे । **ल्रूँ सुप्रभायै नमः**–घ्राणे ।
**ष्रूँ गगनायै नमः**–पायौ । **प्रूँ बहुरूपायै नमः**–नेत्रे ।
**श्रूँ रक्तायै नमः**–मूर्ध्नि । **य्रूँ अतिरिक्तायै नमः**–सर्वाङ्गे ।
**व्रूँ कृष्णायै नमः**–वक्त्रे । एताः सात्त्विक्यो जिह्वाः सात्त्विककर्मसु ।

काम्यादौ तु—

**पद्मरागा सुवर्णा भद्रलोहिता लोहिता श्वेता धूमिनी करालिका**–इति राजस्यो जिह्वा न्यसनीयाः ।

क्रूरकर्मणि—

**विश्वमूर्त्तिः स्फुलिङ्गिनी धूम्रवर्णा लोहिता कराला काली**–

इति तामस्यो जिह्वा न्यसनीयाः । बीजानि तु पूर्वोक्तान्येव । ततस्तान्येव बीजान्यादौ दत्वा तेष्वेव स्थानेषु—

**अमर्त्त्यपितृगन्धर्वयक्षनागपिशाचराक्षसान्** –सप्तजिह्वाधिष्ठातॄन् देवानपि क्रमेण न्यसेत् ।

**स्म्रूँ अमर्त्त्याय नमः**–इत्यादि । ततः ऋष्यादिन्यासं कुर्यात् ।

यथा—

**अग्निमन्त्रस्य भृगू ऋषिर्गायत्री छन्दोऽग्निर्देवता रँ बीजं स्वाहा शक्तिरग्नियजने विनियोगः ।**

**भृगवे ऋषये नमः**–शिरसि । **रँ बीजाय नमः**–गुह्ये ।

**गायत्रीछन्दसे नमः**–मुखे । **स्वाहायैशक्तये नमः**–पादयोः ।

**अग्नये देवतायै नमः**–हृदये । **अग्नियजने विनियोगः**–इति बद्धाञ्जलिः ।

ततः करन्यासः ।

**ॐ सहस्रार्चिषि अङ्गुष्ठाभ्यां नमः। ॐ स्वस्तिपूर्णाय तर्जनीभ्यां नमः स्वाहा। ॐ उतिष्ठपुरुषाय मध्यमाभ्यां वषट्। ॐ धूमव्यापिने अनामिकाभ्यां हुं ।ॐ सप्तजिह्वाय कनिष्ठिकाभ्यां वौषट्। ॐ धनुर्धराय करतलपृष्ठाभ्यां फट्।**

एवं हृदयाद्यष्टन्यासः । ततो मूर्त्तिन्यासं कुर्यात् ।

तद्यथा—

**ॐ अग्नेये जातवेदसे नमः**–मूर्ध्नि ।

**ॐ अग्नये सप्तजिह्वाय नमः**–दक्षांशे ।

**ॐ अग्नये हव्यवाहनाय नमः**–दक्षपार्श्वे ।

**ॐ अग्नये अश्वोदरजाय नमः**–दक्षकटौ ।

**ॐ अग्नये वैश्वानरायनमः**–लिङ्गे ।

**ॐ अग्नये कौमारतेजसे नमः**–वामकट्याम् ।

**ॐ अग्नये विश्वमुखाय नमः**–वामपार्श्वे ।

**ॐ अग्नये देवमुखाय नमः**–वामांशे ।

इति मूर्त्तिन्यासः ।

ततः पीठन्यासं कुर्यात्। तद्यथा—आधारशक्त्यादिवह्निमण्डलान्तमुक्तस्थानेषु विन्यस्य हृत्पद्मस्य पूर्वादिकेशरेषु—

**ॐ पीतायै नमः** **ॐ अरुणायै नमः**
**ॐ श्वेतायै नमः** **ॐ कृष्णायै नमः**
**ॐ धूम्रायै नमः** **ॐ रुचिरायै नमः**
**ॐ तीव्रायै नमः** **ॐ ज्वालिन्यै नमः**–मध्ये
**ॐ स्फुलिङ्गिन्यै नमः**

इति बह्नेर्नव शक्तीः पीठे विन्यस्य तत्रैव—

**रँ बह्नेर्योगपीठाय नमः**–इति पीठन्यासं विधाय वह्निं ध्यायेत्।

ध्यानं यथा—

**इष्टं शक्तिं स्वस्तिकाभीतिमुच्चै-**
**र्दीर्घैर्दोर्भिर्धारयन्तं यवाभम्।**
**हेमाकल्पं पद्मसंस्थं त्रिनेत्रं**
**ध्यायेद्वह्निं बद्धमौलिं जटाभिः।।४६।।**इदं शारदोक्तध्यानम्।

रुद्रयामलो-क्तध्यानम्। यथा—

**बन्धूकपुष्पसङ्काशं सुतप्तकनकप्रभम्।**
**पद्मस्थं यजमानार्थं वदनद्वयशोभितम्।।४७।।**
**सप्तच्छन्दोमयं देवं विमानोपरिसंस्थितम्।**
**त्रिधा ग्रीवं त्रिपादाब्जं हव्यकव्यविनाशनम्।।४८।।**
**ब्रह्माध्वर्यूद्गातृहोतृचतुःशृङ्गविराजितम्।**
**पञ्चरात्रं पाशुपतं कापिलं च महामतम्।।४९।।**
**बौद्धं वैदिकमित्येतत् षट्पिङ्गलविलोचनम्।**
**वेदार्थं च चतुःश्रोत्रं श्रौतशास्त्रमयध्वनिम्।।५०।।**
**सपाटलजटाबद्धमौलिकोटीरभास्वरम्।**
**हेमालङ्कारसंयुक्तं हेमकुण्डलमण्डितम्।।५१।।**
**रक्ताम्भोरुहमध्यस्थं स्वस्तिकासनसंस्थितम्।**
**पृष्ठदेशसमालम्बि तार्त्तीयचरणाम्बुजम्।।५२।।**
**महाशब्दायमानं च राजमानं स्वतेजसा।**
**शक्तिं वज्रं स्रुक्स्रुवं च चतुर्भिर्दक्षबाहुभिः।।५३।।**

**तोमलं तालवृन्तं च सौवर्णं घृतपात्रकम् ।**
**वामैस्त्रिभिर्बाहुभिश्च दधानं रक्तवाससम् ।।५४।।**
**हिरण्या कनका रक्ता कृष्णा दक्षानने स्थिता ।**
**सुप्रभा चातिरक्ता च बहुरक्ता च जिह्विका ।।५५।।**
**इमा रसज्ञास्तद्वामवदने नित्यमास्थिताः ।**
**एताभिः सप्तजिह्वाभिरुपेतं पाटिताननम् ।।५६।।**

इति ध्यात्वा वह्निदेवतात्मकमात्मानं विचिन्त्य मानसैरुपचाररैभ्यर्च्य—

**रँ आत्ममूर्त्तये वह्नये नमः**–इति मन्त्रेण नैवेद्यरहितैर्गन्धादिभिर्वाह्योपचारैरप्यात्मानं संपूज्य सामान्यार्घजलेन मेखलाः परिषिञ्च्य गर्भशून्यैर्दर्भैरग्रैः परिस्तरणं कुर्यात् । परिस्तरणं च एकमेखलकुण्डे मेखलाया अधस्तात् द्विमेखले कुण्डे द्वितीयमेखलोपरि त्रिमेखलाकुण्डे मध्यमेखलायां कुर्यात् । तत्क्रमश्च—

दक्षिणोत्तरयोः पूर्वाग्रैः पूर्वपश्चिमयोरुत्तराग्रैर्दर्भैर्मूलभागानग्रभागैराच्छादयन् परिस्तरेदिति । ततः प्राचीं विहाय दक्षिणोत्तरपश्चिमेषु पलाशादिवृक्षसम्भवान् हस्तमात्रान् सविष्टारान् परिधीन् निःक्षिप्य तेषु प्रादक्षिण्येन—

**ॐ ब्रह्मणे नमः । ॐ विष्णवे नमः । ॐ रुद्राय नमः ।**

इति पूजयेत् । ततो मेखलासु—

**ॐ वामायै नमः** **ॐ रौद्रायै नमः**
**ॐ ज्येष्ठायै नमः** **ॐ अम्बिकायै नमः**

इति पूर्वादिप्रादक्षिण्येन संपूज्य—

**रँ वह्नये आसनं कल्पयामि नमः**–इति आसनं दत्वा कुण्डमध्ये सचतुर्द्वारं चतुरस्रत्रयावृतमष्टदलकमलं विचिन्त्य प्राग्लिखितपीठपूजाक्रमेणाधारशक्त्यादि-वह्निमण्डलान्तं मण्डूकादिज्ञानात्मान्तं वा संपूज्य वह्न्यासनपद्मस्य पूर्वादिदलमूलेषु मध्ये च पूर्वोक्तनवशक्तीरभ्यर्च्य—

**रँ वह्नेर्योगपीठात्मने नमः**–इति ।

**सर्वशक्तिकमलासनाय नमः**–इति मन्त्रेण वा पीठं संपूज्य मूलमन्त्रान्ते—

**रं वह्नेर्मूर्त्तिं कल्पयामि नमः**–इति मूर्त्तिं परिकल्प्य पुनर्वह्निं ध्यात्वा—

**ॐ वैश्वानरजातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा भगवन्नग्ने इहागच्छागच्छ–ॐ वैश्वानरजातवेद इहावह लोहिताक्ष सर्वकर्माणि**

**साधय स्वाहा**–इत्यावाहयेत् । आद्यन्तयोर्मूलमन्त्रोच्चारणं च पूर्वोक्तप्रमाणसिद्धम्। ततः—

**रँ आवाहितो भव, संस्थापितो भव**–इत्यादिक्रमेणावाहनादिमुद्राः प्रदर्श्य प्राणप्रतिष्ठां कुर्यात् । यथा—

**ॐ आँ ह्रीँ क्रोँ यँ रँ लँ वँ शँ षँ सँ हँ हँसः सोऽहं रँ वह्नेः प्राणा इह इह स्थिताः ।**

एवम्—

**जीव इह इह स्थितः ।**

एवम्—

**सर्वेन्द्रियाणि वाङ्मनश्चक्षुः श्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा ।**

एवं प्राणप्रतिष्ठां विधाय—

**ॐ वैश्वानरजातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा–इदं पाद्यं वह्नये नमः**–इत्यादिक्रमेण पाद्यार्घाचमनस्नानगन्धपुष्पधूपदीपनैवेद्य-ताम्बूलानि निवेद्य—

**ॐ वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा–श्रीपादुकां पूजयामि नमः**–इति पुष्पाञ्जलिना वारत्रयमभ्यर्च्य आवरणार्चनं कुर्यात्। तद्यथा— षट्कोणेषु मध्ये च ईशानादिक्रमेण हिरण्यादिसप्तजिह्वाः पूजयेत् । यथा—

**स्रूँ हिरण्यायै नमः**
**ल्रूँ सुप्रभायै नम**
**ष्रूँ गगनायै नमः**
**प्रूँ बहुरूपायै नमः**
**श्प्रूँ रक्तायै नमः**
**य्रूँ अतिरिक्तायै नमः**
**व्रूँ कृष्णायै नमः**

वैष्णवे तु—

**प्रभा दीप्तिः प्रकाशा मरीचिस्तापिनी कराला लेलिहाना** चेति सप्त जिह्वाः पूज्याः । ततः केशरेष्वङ्गदेवताः पूजयेत् । यथा—

**ॐ सहस्रार्चिषे हृदयाय नमः**- आग्नेये ।

**ॐ स्वस्तिपूर्णाय शिरसे स्वाहा**–ईशाने ।

**ॐ उत्तिष्ठपुरुषाय शिखायै वषट्**–नैर्ऋत्ये ।

**ॐ धूमव्यापिने कवचाय हुँ**–वायव्ये ।

**ॐ सप्तजिह्वाय नेत्रत्रयाय वौषट्**–मध्ये ।

वैष्णवादौ तु नेत्राभ्यामिति ज्ञेयम् । चतुर्दिक्षु—

**ॐ धनुर्धरायास्त्राय फट्**– इति संपूज्य—पूर्वादिदलेषु—

**ॐ अग्नये जातवेदसे नमः** **ॐ अग्नये वैश्वानराय नमः**

**ॐ अग्नये सप्तजिह्वाय नमः** **ॐ अग्नये कौमारतेजसे नमः**

**ॐ अग्नये हव्यवाहनाय नमः** **ॐ अग्नये विश्वमुखाय नमः**

**ॐ अग्नये अश्वोदरजाय नमः** **ॐ अग्नये देवमुखाय नमः**

इत्यष्टमूर्त्तीरभ्यर्च्य मेखलाश्रितदर्भेषु पूर्वादिक्रमेणेन्द्रादीन् तद्बहिर्वज्रादीन् संपूज्य—

**ॐ वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा साङ्गाय सायुधाय सवाहनाय सालङ्काराय सपरिवाराय वह्नये श्रीपादुकां पूजयामि नमः**–इति संपूज्य पात्राण्यासादयेत् । तद्यथा—

स्ववामभागे प्रागग्रान् दर्भानास्तीर्य तदुपर्यस्त्रमन्त्रितजलेन प्रक्षालितानि युग्मरूपाणि स्रक्स्रुवप्रोक्षणीप्रणीताज्यस्थालीचरुस्थाल्यादिपात्राण्यधोमुखीकृत्य विन्यसेत् । यद्यपि पूजोपयुक्तप्रोक्षणीपात्रस्य स्वदक्षिणे स्थापनमुक्तं तथाऽपि होमोपयुक्तं तत्प्रणीतादिपात्रवद्वाम एव स्थापनीयम् । स्रुक्स्रुवयोरेव दक्षिणेऽभिधानादिति श्रीविद्यापद्धतिकृतः स्रुक्स्रुवावपि पूर्वं वाम एवासाद्य संस्कारोत्तरं दक्षिणे स्थाप्यौ । ततस्तानि पात्राणि पवित्रेणोत्तानानि विधाय पुनः प्रक्षाल्य सामान्यार्घजलेन क्रमेण सम्प्रोक्ष्य—नमः इति हृन्मत्रमुच्चरन् शुद्धजलेन प्रोक्षणीपात्रमापूर्य आधारपात्रजलेषु क्रमेण विम्बत्रयमभ्यर्च्य—

**ॐ गङ्गे च यमुने चैव**–इत्यादिनाऽङ्कुशमुद्रया सूर्यमण्डलात् तीर्थमावाह्य अस्त्रेण संरक्ष्य कवचेनावगुण्ठ्य प्रणवेन गन्धपुष्पाक्षतपवित्राणि निःक्षिप्य कूर्चे निधाय प्रणवेनाष्टधाऽभिमन्त्र्य धेनुमुद्रां प्रदर्श्य प्रणीतापात्रमपि शुद्धजलेनापूर्य गन्धपुष्पाक्षतपवित्राणि निःक्षिपेत् । ततः प्रणीतापात्रस्थं किंचिज्जलं प्रोक्षणीपात्रे निःक्षिप्य तज्जलेन हृन्मन्त्रं मूलमन्त्रमुच्चरन् यागद्रव्याणि प्रोक्षयेत् । इति पात्रासादनम् । ततः द्रव्यशोधनं च विधाय ब्रह्माणं वृणुयात् । यथा—

तद्देवतामन्त्रदीक्षितं ब्रह्माणं कुण्डदक्षिणभागे कुशासने उपाविश्य—

**ॐ अद्येत्यादि अमुकगोत्रोऽमुकदेवशर्माऽमुकदेवताऽमुकमन्त्रदीक्षा-**

**कर्माङ्गभूतेऽस्मिन् होमकर्मणि अमुकगोत्रममुकदेवशर्माणं भवन्तं ब्रह्माणमहं वृणे । वृतोऽस्मि-** इति प्रतिवचनम् ।

इति वृत्वा—

**ॐ ब्रह्मणे नमः**-इति मन्त्रेण गन्धादिभिर्वासोलङ्कारादिभिश्च पूजयेत् ।

ततः स्रुक्स्रुवौ संस्कुर्यात् ।

यथा—

ऊर्ध्वमुखौ स्रुक्स्रुवौ हस्ताभ्यां गृहीत्वाऽधोमुखौ विधाय वारत्रयमग्नौ प्रताप्य वामहस्तेन तौ धृत्वा दक्षिणहस्तेन दर्भानादाय तैर्दर्भैस्तयोरग्रमूलमध्यानि शोधयेत् । शोधनक्रमश्च— अग्रेणाग्रं मूलेन मूलं मध्येन मध्यमिति । ततः सामान्या-र्घप्रोक्षणीजलाभ्यां संप्रोक्ष्य पुनर्वह्नौ प्रताप्य दर्भानग्नौ प्रक्षिपेत् । ततः स्वदक्षिणे कुशानास्तीर्य तदुपरि तौ स्थापयेत् । तत आज्यं संस्कुर्यात् । तद्यथा— आज्यस्थालीमादायास्त्रमन्त्रितजलेन संप्रोक्ष्य तस्यामाज्यं निधाय मूलमन्त्रेण वीक्ष्य—

**अस्त्राय फट्**-इति संप्रोक्ष्य तेनैव मन्त्रेण दर्भैः संताड्य—**हुँ**- इत्यर्घजलेनाभ्युक्षणं कुर्यात् । इति संस्कारचतुष्टयं कृत्वा कुण्डादङ्गारानुद्धृत्य वायुकोणे संस्थाप्य तेष्वङ्गोरेषु— **नमः**-इति मन्त्रेणाज्यस्थालीं स्थापयेत् । इदं 'तापनम्' । ततो दर्भयुगलं प्रज्वाल्याज्ये निःक्षिप्य दग्धशेषम्— **नमः**-इति मन्त्रेण वह्नौ निःक्षिपेत् । इदं 'पवित्रीकरणम्' । पुनर्ज्वलितेन दर्भयुगलेन— **हुँ**- इति मन्त्रमुच्चरन् घृतं नीराज्य अग्नौ निःक्षिपेत् । इत्य'भिद्योतनम्' । ततः प्रज्वालितकुशमुष्टिं गृहीत्वा—**अस्त्राय फट्**-इति मन्त्रमुच्चरन् प्रदर्श्याग्नौ प्रक्षिपेत् 'इत्युद्योतनम्' । तस्मादङ्गारादाज्यस्थालीमानीयात्मसंमुखे संस्थाप्य तानङ्गारानग्नौ प्रक्षिप्याङ्गारस्थानमार्जनं कृत्वा जलं स्पृशेत् । तत उत्तानहस्तयोरङ्गुष्ठोपकनिष्ठाभ्यां प्रादशेमात्रं पवित्रं पृथक् पृथक् धृत्वा-

**अस्त्राय फट्**-इति मन्त्रमुच्चरन् वह्नेः संमुखमुत्प्लुनीयात् ।

ततः पवित्रं स्थानान्तरे संस्थाप्य पुनस्तेनैव प्रकारेण दर्भद्वयं गृहीत्वा तेन दर्भयुग्मेन— **नमः**-इति मन्त्रमुच्चरन्नात्मसंमुखं घृतं संप्लाव्य पूर्वस्थापितपवित्र-द्वयमेतत्पवित्रयुग्मं च वह्नौ क्षिपेत् । इत्यु'त्प्लवनसंप्लवने' उभयमपि प्लावनमेव । ततः प्रादेशमात्रं सग्रन्थिदर्भयुगलमाज्यस्थाल्यां घृतमध्ये निःक्षिप्याज्य-दक्षिणभागं शुक्लपक्षमाज्यवामभागं कृष्णपक्षं विचिन्त्य वामे इडां दक्षिणे पिङ्गलां मध्ये सुषुम्णां ध्यात्वा होमं कुर्यात् । यथा—स्रुवेण—**नमः**-इति मन्त्रमुच्चरन् दक्षिणभागाद्घृतमादाय—**ॐ अग्नेय स्वाहा अग्नये इदं नमः**-इत्यग्नेर्दक्षिणलोचने

जुहुयात् । संपातमाज्यं तत्रैव दक्षिणभागे निःक्षिपेत् । पुनः—**नमः**–इति वामभागाद्घृतमादाय—

**ॐ सोमाय स्वाहा सोमायेदं नमः** इति वामलोचने जुहुयात् । संतापाज्यं तत्रैव वामभागे स्थापयेत् ।पुनरेवं मध्यभागाद्घृतमादाय—

**ॐ सोमाय स्वाहा सोमायेदं नमः**–इति वामलोचने जुहुयात् ।

संपाताज्यं तत्रैव वामभागे स्थापयेत् ।

पुनरेवं मध्यभागाद्घृतमादाय—

**ॐ अग्नीषोमाभ्यां स्वाहा अग्नीषोमाभ्यामिदं नमः**–इति वह्नेर्ललाटे नेत्रे हुत्वा संपातमाज्यं पूर्ववन्मध्यभागे क्षिपेत् ।

वैष्णवादौ तु ललाटनेत्राहुतिं न कुर्यात् । तत्रापि श्रीनृसिंहचरणाराधनोपयुक्तहोमे तु कुर्यादेव ।

**नेत्रत्रयोद्भासमानं परमात्मानमच्युतम् ।**

**श्रीनृसिंहमहं वन्दे देवदेवं वृषाकपिम् ।** ।इत्युक्तत्वात् तत्रापि—

**प्रज्वलद्वह्निनेत्राभ्यां दहन्निव जगत्रयम् ।।५७।।** इत्यादिद्विनेत्रध्यानपक्षे तु नेत्राहुतिर्न कार्या । पुनः— **नमः**–इति दक्षिणभागादाज्यमादाय—

**ॐ अग्नेय स्विष्टकृते स्वाहा अग्नये स्विष्टकृते इदं नमः**-इति वह्नेर्वक्त्रे जुहुयात् ।

शारदायां तु—**स्वाहा**–इति हुत्वा— **हा**–इति हुतशेषं क्षिपेदित्युक्तम् — तत्रापि— संपादयेदिति प्रतिभाति । ततः प्रणवमुक्ताभिर्व्यस्तसमस्ताभिर्व्याहृतिभिः पञ्चाहुतीर्दद्यात् । तद्यथा—

**ॐ स्वाहा, भूःस्वाहा, भुवः स्वाहा, स्वः स्वाहा, ॐ भूर्भुवःस्वः स्वाहा**–इति हुत्वा—**ॐ वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा**–इत्यग्निमन्त्रेणाहुतित्रयं दत्वा वह्नेर्गर्भाधानादिषोडशसंस्कारान् कुर्यात् ।

यथा— **ॐ अग्नेर्गर्भाधानं संपादयामि स्वाहा**–इत्यष्टाहुतिर्जुहुयात् । एवमग्रेऽपि ।

**ॐ अग्नेः पुंसवनं संपादयामि स्वाहा**–इति ।

**ॐ अग्नेः सीमन्तोन्नयनं संपादयामि स्वाहा, ॐ अग्नेर्जातकर्म संपादयामि स्वाहा**–इति जातकर्माहुतीर्हुत्वा—

**ॐ अग्नेर्नालच्छेदं संपादयामि फट् स्वाहा**–इति मूलाग्रयोर्घृतसंप्लुताः पञ्च समिधो जुहुयात् । ततः—

**ॐ वह्नेः सूतकं शोधयामि स्वाहा**–इत्येकाहुतिं दत्वा स्वेष्टदेवतानाम्ना–

**वह्ने त्वममुकनामाऽसि**–इति नाम कृत्वा वह्नीष्टदेवतयोरैक्यं विचिन्त्य–

**ॐ अग्नेर्नामकरणं संपादयामि स्वाहा**–इति पूर्ववदष्टाहुतीर्जुहुयात् ।

**ॐ अग्ने त्वं शिवनामाऽसि, अग्ने त्वं वरदनामाऽसि, अग्ने त्वं विश्वरूपनामाऽसि**–इत्येवं वा नाम कुर्यात् ।

श्रीविद्यापक्षे तु–

**अग्ने त्वं कामाग्निनामाऽसि**–इति नाम कुर्यात् । ततः–

**ॐ अग्ने निष्क्रमणं संपादयामि स्वाहा ।**

एवं–

**ॐ अग्नेरन्नप्राशनम्**
**ॐ अग्नेश्चूडाकरणम्**
**ॐ अग्नेरुपनयनम्**
**ॐ अग्नेर्महानाम्न्यव्रतम्**
**ॐ अग्नेर्महाव्रतम्**
**ॐ अग्नेरुपनिषद्व्रतम्**
**ॐ अग्नेर्गोदानव्रतम्**
**ॐ अग्नेः समावर्त्तनम्**

**ॐ अग्नेर्विवाहं संपादयामि स्वाहा**–इति प्रत्येकमष्टाहुतीर्हुत्वा मूलाग्रयोर्घृतसंप्लुतां समिधमादाय–

**ॐ ह्रीँ वागीशवागीश्वरीभ्यां स्वाहा**–इति त्रिवारं जुहुयात् । ततोऽग्नेः पितरौ वागीश्वरौ पूर्ववत् पञ्चोपचारैः संपूज्य प्रणम्य स्वहृदये उद्वासयेत् । ततो वह्नेः सप्तसु जिह्वासु तन्मन्त्रैरैकेकामाहुतिं दद्यात् । यथा–

**स्त्रूँ हिरण्यायै स्वाहा**
**ष्भ्रूँ गगनायै स्वाहा**
**श्प्रूँ रक्तायै स्वाहा**
**व्भ्रूँ कृष्णायै स्वाहा**
**ल्रूँ सुप्रभायै स्वाहा**
**र्प्रूँ बहुरूपायै स्वाहा**
**य्प्रूँ अतिरिक्तायै स्वाहा**
इति सप्तजिह्वामन्त्रेण जुहुयात् ।

ततोऽङ्गमन्त्रैर्जुहुयात् । तद्यथा–

**ॐ सहस्रार्चिषे हृदयाय नमः स्वाहा**–एवं क्रमेण जुहुयात् ।

**ॐ स्वस्तिपूर्णाय शिरसे स्वाहा**

**ॐ उत्तिष्ठपुरुषाय शिखायै वषट्**

**ॐ धूमव्यापिने कवचाय हुँ स्वाहा**

**ॐ सप्तजिह्वाय नेत्रत्रयाय वौषट् स्वाहा**

वैष्णवादौ तु–

**नेत्राभ्याम्**–इति ज्ञेयम् ।

**ॐ धनुर्धरायास्त्राय फट् स्वाहा**

ततो वह्नेर्मूर्त्तिमन्त्रैर्जुहुयात् । तद्यथा—

**ॐ अग्नये जातवेदसे स्वाहा** **ॐ अग्नये वैश्वानराय स्वाहा**

**ॐ अग्नये सप्तजिह्वाय स्वाहा** **ॐ अग्नये कौमारतेजसे स्वाहा**

**ॐ अग्नये हव्यवाहनाय स्वाहा** **ॐ अग्नये विश्वमुखाय स्वाहा**

**ॐ अग्नये अश्वोदरजाय स्वाहा** **ॐ अग्नये देवमुखाय स्वाहा**

इति हुत्वा—

**ॐ इन्द्राय स्वाहा** **ॐ वज्राय स्वाहा**

**ॐ अग्नये स्वाहा** **ॐ शक्तये स्वाहा**

**ॐ यमाय स्वाहा** **ॐ दण्डाय स्वाहा**

**ॐ वरुणाय स्वाहा** **ॐ खड्गाय स्वाहा**

**ॐ नैर्ऋतये स्वाहा** **ॐ पाशाय स्वाहा**

**ॐ वायवे स्वाहा** **ॐ अङ्कुशाय स्वाहा**

**ॐ कुवेराय स्वाहा** **ॐ गदायै स्वाहा**

**ॐ ईशानाय स्वाहा** **ॐ त्रिशूलाय स्वाहा**

**ॐ ब्रह्मणे स्वाहा** **ॐ पद्माय स्वाहा**

**ॐ अनन्ताय स्वाहा** **ॐ चक्राय स्वाहा**

इति हुत्वा— स्रुवेण चतुर्वारमाज्यमादाय स्रुचि निधाय स्रुवेण पिधाय शृङ्गाग्रे पुष्पादिकं दत्वोत्तिष्ठेत् ।

**ॐ वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा वौषट्**—इति वौषडन्तेनाग्निमन्त्रेण जुहुयात् । ततो महागणपतिमन्त्रेण दशधा विभक्तेन दशाहुतीर्दद्यात् । तद्यथा—

**ॐ स्वाहा**

**ॐ श्रीँ स्वाहा**

**ॐ श्रीँ ह्रीँ स्वाहा**

**ॐ श्रीँ ह्रीँ क्लीँ स्वाहा**

**ॐ श्रीँ ह्रीँ क्लीँ ग्लौँ स्वाहा**

**ॐ श्रीँ ह्रीँ क्लीँ ग्लौँ गँ स्वाहा**

**ॐ श्रीँ ह्रीँ क्लीँ ग्लौँ गँ गणपतये स्वाहा**

**ॐ श्रीँ ह्रीँ क्लीँ ग्लौँ गँ गणपतये वर वरद स्वाहा**

**ॐ श्रीँ ह्रीँ क्लीँ ग्लौँ गँ गणपतये वर वरद सर्वजनं मे स्वाहा**
**ॐ श्रीँ ह्रीँ क्लीँ ग्लौँ गँ गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा–** इति हुत्वा—पुनस्तेनैव समस्तेन मन्त्रेण चतुर्वारं जुहुयात् ।

इति सर्वसाधारणोऽग्निमुखविधिः ।

ततश्चरुपाकं कुर्यात् । यथा—आचार्यः प्राङ्मुखो भूत्वा नव्यं ताम्रादिपात्र-पादायास्त्रमन्त्रितजलेन प्रक्षाल्य तस्मिन् पात्रे तण्डुलानुसारेण गोक्षीरं निधाय साधारं तत् पात्रं वह्नौ संस्थाप्य पञ्चदशमुष्ठिप्रभृतिपरिमितान् शालितण्डुलान् मूलमन्त्रेणाभिमन्त्र्य तस्मिन् पात्रे क्षिप्त्वा पिधानपात्रमादायास्त्रमन्त्रितजलेन प्रक्षाल्य—

**हुँ–**इति कवचमन्त्रमुच्चरँस्तेन पात्रेण पाकपात्रमुखं पिधाय मूलमन्त्रमुच्चरँश्चरुँ पचेत् । ततः स्रुवेणाज्यमादाय स्विन्नं चरुं मूलमन्त्रमुच्चरन्नभिधारयेत् । ततः—

**हुँ–**इति कवचमन्त्रेण तत्पात्रमवतार्य अस्त्रमन्त्राभिमन्त्रितकुशास्तीर्णमण्डले स्थापयेत् । ततश्चरुत्रिधा विभज्य भागमेकं पात्रान्तरे निधाय देवतायै समर्पयेत् । द्वितीयं भागं वक्ष्यमाणहोमार्थं तृतीयं भागं भोजनार्थं स्थापयेत् । ततो वह्नौ देवताया आधारशक्त्यादिपीठमन्त्रान्तं संपूज्य तत्रेष्टदेवतामावाह्योपचारैः संपूज्यावरणदेवता अपि पूजयेत् । ततो देवमूलमन्त्रेण स्वाहान्तेन पञ्च-विंशत्याज्याहुतीर्वह्निमुखे जुहुयात् । इदमेव वह्नीष्टदेवतयो 'र्वक्त्रैकीरण' मित्युच्यते । तत आत्माग्निदेवतानामैक्यं विचिन्त्य एकादशाज्याहुतीर्मूलेनैव दद्यात् । इदं 'च नाडीसन्धान' मित्युच्यते । तत आवरणदेवताभ्य एकैकामाहुतिं दत्वा ऋत्विग्भिरुक्त-प्रकारेण संस्कृतेषु पूर्वादिकुण्डेषु क्रमेणाचार्यो वह्निं विहरेत् । ततः सर्वे ऋत्विजः स्वस्वकुण्डाग्नौ सावरणामिष्टदेवतामुपचारैः संपूज्य मूलमन्त्रेणाज्येन पञ्चविंशत्या-हुतीर्हुत्वाऽऽवरणदेवताभ्य एकैकामाहुतिं दद्युः । ततो गुरुः पूर्वोक्तचरोर्द्वितीयभागं नवधा विभज्य भागमेकं स्वयं गृहीत्वा एकैकं भागं सर्वेभ्य ऋत्विग्भ्यो दद्यात् । ततस्तस्मिँश्चरौ धृतं निधाय सघृतेन चरुणाऽऽचार्य ऋत्विजश्च स्वे स्वे कुण्डे मूलमन्त्रेण प्रत्येकं पञ्चविंशत्याहुतीर्जुहुयुः । तत आवरणदेवताभ्य एकैकामाहुतिं दत्वा मूलमन्त्रेणाज्येन दश दशाहुतीर्हुत्वा वह्निरूपामिष्टदेवतां प्रणमेयुः । तत आचार्यश्चरोस्तृतीयभागं द्विधा विभज्य पलाशपत्रे पिप्पलपत्रे वा निधाय भागमेकं स्वयं गृहीत्वा परं भागं शिष्याय दद्यात् । ततो गुरुः शिष्यश्च—

**नमः–** इति हृन्मन्त्रमुच्चरन् ग्रासत्रयं ग्रासाष्टकं वा दन्तस्पर्शं विना

भुक्त्वा मन्त्रपूतेन जलेनाचमनं कुर्यात्। ततो गुरुः कृताचमनं शिष्यं मूलमन्त्रेण सकलीकृत्य तस्मै पूर्वोक्तलक्षणं[१] हृन्मन्त्रितं दन्तकाष्ठं दद्यात्। ततः शिष्यस्तेन दन्तकाष्ठेन दन्तान् विशोध्य जलेन प्रक्षाल्य दन्तकाष्ठं विसृज्याचमनं कुर्यात्। अस्मिन्नेव समये पूर्वोक्तदन्तकाष्ठपरीक्षां केचित् कुर्वन्ति। ततः सायं सन्ध्योपासनं कृत्वा गुरुर्मूलमन्त्रेण स्वकल्पोक्तमन्त्रान्तरेण वा शिष्यस्य शिखां बध्वा मण्डपाद्बहिर्देवताया दक्षिणभागे वेदिकान्तरोपरि कुशशय्यायां पूर्वशिरस्कः शिष्येण सार्धं शयनं कुर्यात्। शिष्यश्च शयनसमये स्वप्नमानवमन्त्रेण शुभस्वप्नं प्रार्थयेत्।

स्वप्नमानवमन्त्रो यथा—

**भगवन् देवदेवेश शूलभृद्वृषवाहन।**
**इष्टानिष्टे समाचक्ष्व मम सुप्तस्य शाश्वतम्॥५८॥**

यद्वा—

**ॐ हिलि हिलि शूलपाणये स्वाहा।**
**नमो जय त्रिनेत्राय पिङ्गलाय महात्मने।**
**वामाय विश्वरूपाय स्वप्नाधिपतये नमः॥५९॥**
**स्वप्ने कथय मे तथ्यं सर्वकार्येष्वशेषतः।**
**क्रियासिद्धिं विधास्यामि त्वत्प्रसादान्महेश्वर॥६०॥**

वैष्णवे तु—

**ॐ नमः सकललोकाय विष्णवे प्रभविष्णवे।**
**विश्वाय विश्वरूपाय स्वप्नाधिपतये नमः॥६१॥**

यद्वा—

**परब्रह्मस्वरूपस्त्वमन्तश्चरसि विश्वधृक्।**
**शुभाशुभगतिं देव स्वप्ने मे विनिवेदय॥६२॥**

इत्युच्चार्य जानुभ्यामवनीं स्पृष्ट्वा विष्णुं प्रणम्य प्रसन्नो वाग्यतो निजेष्टं विचिन्त्य शयनं कुर्यात्। ततः स्वप्नं दृष्ट्वा समुत्थायाचम्य पुष्पं धृत्वा गुरुं प्रणम्य गुरवे स्वप्नं निवेदयेत्। ततो गुरुः शुभमशुभं वा स्वप्नं निर्णीय स्वप्नो यदि शुभस्तदा देवतां प्रसन्नां जानीयात्। स्वप्नो यद्यशुभस्तदा शान्तिं कुर्यात्। दुःस्वप्नशान्तिस्तु—

**फट् दुःस्वप्नदोषान् जहि जहि फट् स्वाहा**—इति मन्त्रेण।

---

१. द्रष्टव्यमस्यैव ग्रन्थस्य पृ॰ २८०।

**ॐ वज्रनखदंष्ट्रायुधाय महासिंहाय हुँ फट् नमः स्वाहा**–

इति सिंहमन्त्रेण वा तद्देवतागायत्र्या वा पलाशसमिच्छतमाज्याहुतिशतं वा जुहुयात्। तत्र संकल्पस्तु—

**ॐ अद्येत्यादि–अमुकगोत्रोऽमुकदेवशर्मा दुःस्वप्नशान्तिकामो गुरुद्वारा सक्षीरघृताक्तपालाशसमिदाहुतिशतमहं होष्यामि।**

इत्यधिवासनविधिः।

ततो दीक्षादिने गुर्वादयः सर्वे प्रातरुत्थाय प्रातःकृत्यस्नानसन्ध्यादि-नित्यकर्म समाप्य यागमण्डंप प्रविश्य देवतां नत्वा स्वे स्वे कुण्डे सघृतै-स्तिलैस्तदेवताकल्पोक्तद्रव्यान्तरैर्वा स्वाहान्तेन मूलमन्त्रेण प्रत्येकमष्टोत्तर-सहस्राहुतीरष्टोत्तरशताहुतीर्वा जुहुयुः।

ततो होमसमाप्तौ गुरुः समुत्थाय मण्डपाद्बहिर्गत्वा कृतस्नानं शिष्यं पञ्चगव्यं पाययित्वा दक्षिणद्वारेण मण्डपं प्रवेश्य स्वीयं कुण्डान्तिकमानयेत्। ततो दिव्यदृष्ट्या शिष्यं विलोक्य तद्धृदयाद्वहन्नाड्याऽङ्कुशमुद्रया तच्चैतन्यमाकृष्य स्ववहन्नाडीमार्गेण स्वहृदये संयोज्याध्वशोधनं कुर्यात्।

तद्यथा—शिष्यस्य पादयोः—

**निवृत्तिप्रतिष्ठाविद्याशान्तिशान्त्यतीताख्याः**–पञ्चकला विचिन्त्य कूर्चेन तत्पादौ संस्पृश्य—

**ॐ कलाध्वानं शोधयामि स्वाहा**–इति सघृतैस्तिलैरष्टाहुतीर्जुहुयात्। ततः कलाध्वानं तत्त्वाध्वनि विलीनं विभाव्य शिष्यस्योपस्थप्रदेशे—

**शिवशक्तिसदाशिवेश्वरविद्यामायाविद्याकलारागकालनियतिपुरुष-प्रकृतिबुद्ध्यहङ्कारमनश्चक्षुः-श्रोत्रघ्राणजिह्वात्वग्वाक्पाणिपादपायूपस्थ-शब्दस्पर्श-रूपरसगन्धाकाश-वायुतेजोजलपृथिव्याख्यानि**–षट्त्रिंशद्गणेश-शैवतत्त्वानि।

**जीवप्राणमनोबुद्धिशब्दस्पर्शरूपरसगन्धाकाशवायुतेजोजलपृथिवीचक्षुः श्रोत्रजिह्वाघ्राणत्वग्वाक्पाणिपादपायूपस्थसूर्यसोमाग्निवासुदेवसंकर्षणप्रद्युम्ना-निरुद्धाख्यानि**–द्वात्रिंशद्वैष्णवतत्त्वानि।

**आकाशवायुतेजोजलपृथिवीशब्दस्पर्शरूपरसगन्धमनोऽहङ्कारचक्षुः श्रोत्र-जिह्वाघ्राणत्वग्वाक्पाणिपादपायूपस्थप्रकृतिमहत्तत्त्वाख्यानि**–चतुर्विंशतिः सौरतत्वानि।

**निवृत्तिप्रतिष्ठाविद्याशान्तिशान्त्यतीताख्यकलापञ्चकबिन्दुकलानाद-**

**शक्तिसदाशिवाख्यानि**–दशप्रकृतितत्त्वानि ।

**आत्मविद्याशिवशिवाविद्यात्मात्मविद्याशिवसर्वाख्यानि**–दशशाक्ततत्त्वानि ।

**आत्मविद्याशिवशिवाविद्यात्मसर्वाख्यानि**–त्रैपुरतत्त्वानि च विचिन्त्य शिष्यस्योपस्थप्रदेशं कूर्चेन संस्पृश्य—

**ॐ तत्त्वाध्वानं शोधयामि स्वाहा**–इत्यष्टाहुतीर्जुयात् ।

ततस्तत्त्वाध्वानं भुवनाध्वनि विलीनं विभाव्य शिष्यस्य नाभौ क्रमेण—

**पातालरसातलमहातलतलातलसुतलवितलतलातलभूर्भूवः स्वर्महर्जनस्तपः सत्याख्यानि**–चतुर्दश भुवनानि विचिन्त्य नाभिं स्पृष्ट्वा—

**ॐ भुवनाध्वानं शोधयामि स्वाहा**–इत्यष्टाहुतीर्जहुयात् । ततो भुवनाध्वानं वर्णाध्वनि विलीनं विभाव्य शिष्यस्य हृदयेऽकारादिक्षकारान्तान् विचिन्त्य हृदयं स्पृष्ट्वा—

**ॐ वर्णाध्वानं शोधयामि स्वाहा**–इत्यष्टाहुतीर्जुहुयात् । ततो वर्णाध्वानं पदाध्वनि विलीनं विभाव्य शिष्यस्य ललाटे मन्त्रपदानि विचिन्त्य ललाटं संस्पृश्य—

**ॐ पदाध्वानं शोधयामि स्वाहा**–इत्यष्टाहुतीर्जुहुयात् । ततः पदाध्वानं मन्त्राध्वनि विलीनं विभाव्य शिष्यस्य मूर्ध्नि संपूर्णमन्त्रं विचिन्त्य मूर्धानं स्पृष्ट्वा—

**ॐ मन्त्राध्वानं शोधयामि स्वाहा**–इति पूर्ववदष्टाहुतीर्हुत्वा ब्रह्मरन्ध्रस्थिते परमशिवे मन्त्राध्वा विलीनं इति चिन्तयेत् । एवं संहारक्रमेण शिष्यदेहे षड्विधिमध्वशोधनं विधाय पुनः सृष्टिक्रमेण परमशिवान् मन्त्राध्वनः पदाध्वा पदाध्वनो वर्णाध्वा वर्णाध्वनो भुवनाध्वा भुवनाध्वनस्तत्त्वाध्वा तत्त्वाध्वनः कलाध्वा उत्पन्न इति चिन्तयेत् ।

अत्र के चित्—

**ॐ परमशिवान्मन्त्राध्वानमुत्पादयामि स्वाहा**–इत्याहुतिभिः क्रमेणाध्वनो जनयेदिति वदन्ति । ततः शिष्यं दिव्यदृष्ट्या विलोकयन्नात्मस्थितं तश्चैतन्यं स्ववहन्नाड्या तद्वहन्नाडीमार्गेण तद्धृदये योजयेत् ।

ततो मूलमन्त्रेण दशाहुतीर्हुत्वाऽऽवरणदेवताभ्य एकैकामाहुतिं दत्वा पूर्णाहुतिं कुर्यात् । तत्क्रमस्तु—होमावशिष्टेन घृतेन स्रुचमापूर्य पुष्पतिलयवफलादिकं निधायाधोमुखेन स्रुवेण स्रुचं पिधाय तदग्रे पुष्पं दत्वा मूलाच्चतुरङ्गलं परित्यज्य शङ्खमुद्रया स्रुक्स्रुवौ धृत्वा तन्मूलेनाभिसंलग्ने कृत्वोत्थितः सन् दक्षिणपादपुरःसरं वौषडन्तेन मूलमन्त्रेण पूर्णाहुतित्रयं दद्यात् ।

शाक्ते वाममार्गादौ च वामपादपुरःसरं पूर्णाहुतिं दद्यात्। वाममार्गे स्वाहान्तेन मूलमन्त्रेण ।

१ { वैदिकक्रमस्तु—
**मूर्द्धानं दिव**–इति मन्त्रेण ।

**पूर्णादर्वी**–इत्यादिमन्त्रेण वा पूर्णाहुतिं दद्यादिति विशेषः ।

ततो ब्रह्मार्पणमन्त्रैः पूर्णाहुतिं दद्यात्। मन्त्रो यथा ।

**इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत् स्मृतं यदुक्तं यत् कृतं तत् सर्वं ब्रह्मार्पणं भवतु स्वाहा ।**

एवं ब्रह्मार्पणमन्त्रेण पूर्णाहुतिं दत्वा वह्निस्थामिष्टदेवतां पञ्चोपचारैः संपूज्य प्रणम्य षडङ्गमन्त्रेण सकलीकृत्य संहारमुद्रया कुण्डादुद्वास्य कलशे संयोज्य पूर्वादिदिक्षु स्थापितान् ध्रुवादीनिन्द्रादिलोकपालान् बहिःस्थिता अङ्कुरार्पणदेवताश्च तत्तत्स्थानादुद्वास्य प्रधानकलशे समानीय तासां देवतानामिष्टदैवतैक्यं विचिन्त्य वह्नेर्विसर्जनार्थं महाव्याहृतिभिर्होमं कुर्यात्। तद्यथा—

**ॐ भूरग्नये पृथिव्यै च महते स्वाहा ।**

**ॐ भुवो वायवे अन्तरिक्षाय च दिवे च महते स्वाहा ।**

**ॐ स्वरादित्याय चन्द्रमसे दिग्भ्यश्च नक्षत्रेभ्यश्च स्वाहा ।**

**ॐ भूर्भुवःस्वश्चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यश्च महते स्वाहा ।**

इति हुत्वा पूर्वोक्तप्रकारेण वह्नेर्जिह्वाङ्गमूर्त्तिमन्त्रैर्लोकपालान् तदायुध-मन्त्रैश्चैकैकामाहुतिं हुत्वा पयसा जलेन वा मेखलासु वह्निं परिषिञ्च्य तन्मन्त्रेण पञ्चोपचारैः संपूज्य—

**स्वस्ति श्रद्धां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् ।**
**आयुष्यं तेजआरोग्यं देहि मे हव्यवाहन ।।६३।।**
**भो भो वह्ने महाशक्ते सर्वकर्मप्रसाधक ।**
**कर्मान्तरेऽपि संप्राप्ते सान्निध्यं कुरु सादरम् ।।६४।।**

इति संप्रार्थ्य—

**भगवन्नग्ने पूजितोऽसि क्षमस्व**–इत्युक्त्वा वह्निं प्रणम्य संहारमुद्रया विसृजेत्। ततो ब्रह्माणमुद्वास्य द्वात्रिंशत्पलप्रमाणेन निर्मितं ताम्रपात्रं तण्डुलैरापूर्य

---

१. द्रष्टव्यो वाजसनेयिसंहितायाः ७ अ०, २४ मं०, ३ अ० ४९ मं० ।

तदुपरि सुवर्णदक्षिणां निधाय ब्रह्मप्रतिनिधिब्राह्मणाय दद्यात् । दानवाक्यं यथा—

**ॐ अद्येत्यादि—कृतैतद्दीक्षाकर्माङ्गभूतहोमकर्मप्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतं हिरण्यमग्निदैवतममुकगोत्रायामुकशर्मणे विप्राय तुभ्यमहं संप्रददे—** इति पूर्णपात्रं दद्यात् ।

तत आचार्यः परिस्तरणकुशान् परिधीँश्च तूष्णीमग्नौ प्रक्षिपेत् । नित्यहोमे तु तान् न दहेदिति विशेषः । ततः— **वौषट्—**इति नेत्रमन्त्रमुच्चरन् नव्येन शुक्लवस्त्रेण शिष्यस्य नेत्रे बध्वा पुष्पैस्तदञ्जलिं पूरयित्वा तत्करं धृत्वा तिरस्करणीं विमोच्य शिष्यं देवतान्तिकमानीय स्वयं मूलमन्त्रमुच्चरन् देवतायै पीठोपरि पुष्पाञ्जलिं क्षेपयेत् ।

ततो गुरुणा निराकृतनेत्रबन्धः शिष्यः—

**अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।**

**चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ।।६५।।** इति पठित्वा गुरुचरणौ प्रणम्य देवतां साष्टाङ्गं प्रणमेत् ।

ततो गुरुः शिष्यं दर्भास्तरे निवेश्य भूतशुद्धिक्रमेण पञ्चभूतात्मकं तद्देहं संहृत्य पुनः सृष्टिमार्गेणोत्पाद्य तद्देहे स्वकल्पोक्तन्यासान् विधायाभिषेकार्थमीशानदिशि विरचिते मण्डपान्तरे हस्तद्वयायामायामष्टाङ्गुलोच्छ्रितायां चतुरस्रवेदिकायां श्रीपर्ण्यादिकाष्ठनिर्मितपीठोपरि शिष्यं निवेश्य स्वयं देवतास्थानमागत्य पाद्यादिभिरुपचारैर्देवतां संपूज्य मूलेन पुष्पाञ्जलित्रयं दत्वाऽराधनार्पणं कुर्यात् । तद्यथा—मूलमन्त्रमुच्चार्य—

**साधु वाऽसाधु वा कर्म यद्यदाचरितं मया ।**

**तत्सर्वं देवदेवेश गृहाणाराधनं परम् ।।६६।।** इत्युक्त्वा देवस्य दक्षिणकरे शक्तिविषये वामकरेऽर्घोदकमुत्सृजेत् । ततो देवतां प्रणम्य पुष्पाञ्जलिमादाय क्षमापयेत् । यथा—

**यद्दत्तं भक्तिमात्रेण पत्रं पुष्पं फलं जलम् ।**

**निवेदितं च नैवेद्यं तद्गृहाणानुकम्पया ।।६७।।**

**आवाहनं न जानामि न जानामि विसर्जनम् ।**

**पूजां चैव न जानामि त्वं गतिः परमेश्वर ।।६८।।**

**कर्मणा मनसा वाचा त्वत्तो नान्या गतिर्मम ।**

**अन्तश्चारेण भूतानां द्रष्टा त्वं परमेश्वर ।।६९।।** इत्युक्त्वा पुष्पाञ्जलिं क्षिप्त्वा प्रणमेत् । ततः शिष्यार्थं वरं प्रार्थयेत् । तद्यथा—

**कारुण्यनिलये देवि सर्वसन्निधिसंश्रये ।**
**शरण्ये वत्सले मातः कृपामस्मिन् शिशौ कुरु ।।७०।।**
**आणवप्रमुखैः पाशैः पाशितस्य सुरेश्वरि ।**
**दीनस्यास्य दयाधारे कुरु कारुण्यमीश्वरि ।।७१।।**
**ऐहिकामुष्मिकैर्भोगैरपि संबध्यतामसौ ।**
**स्वभक्तिः सकला चास्मै दीयतां निष्कलाश्रये ।।७२।।** इति । पुन्दैवते तु—

**कारुणाश्रयदेवेश**—इत्यादिपाठोऽनुसन्धेयः इति संप्रार्थ्य सर्वा आवरणदेवताः प्रधानदेवताङ्गे लीना इति विचिन्त्य तेजोरूपां देवतां ध्यात्वा—

**भगवत्यमुकदेवते पूजिताऽसि क्षमस्व ।** इत्युक्त्वा संहारमुद्रया विसृज्य वहन्नाडीमार्गेण स्वहृदये तां स्थापयेत् । तत ऐशान्यां दिशि मण्डलं कृत्वा तद्देवताकल्पोक्तं निर्माल्यवासिनं संपूज्य—

**लेह्यचोष्यान्नपानादि निर्माल्यं स्रग्विलेपनम् ।**
**निर्माल्यभोजिने तुभ्यं ददामि देवताज्ञया।।७३।।**इति निर्माल्यं दत्वा संहारमुद्रया निर्माल्यवासिनं विसृजेत् । ततो मूलमन्त्रेण स्वशिरसि किंचिन्निर्माल्यं धृत्वा कुम्भमुत्थाप्य शिष्यनिकटं गत्वा कुम्भमुख्यान् पल्लवान् शिष्यस्य शिरसि विन्यस्य मातृकावर्णान् मूलमन्त्रं चोच्चरन् पञ्चवाद्यादिनादैर्विप्राशीर्भिश्च सार्धं कुम्भतोयेन शिष्यमभिषिञ्चेत् । ततो वर्धनीमुत्थाप्य तज्जलेनाभिषिञ्चेत् । ततोऽवशिष्टजलेन शिष्यमाचम्य षडङ्गैः सकलीकृत्य तं देवतात्मानं चिन्तयेत् । ततः शिष्यः समुत्थाय धौतवाससी परिधायाचम्य गुरोः सन्निधौ तदाज्ञया पूर्वाभिमुख उत्तराभिमुखो वा आसने उपविशेत् । ततो गुरुरात्मनः सकाशात् तद्देहे संक्रान्तां देवतां विचिन्त्य तयोरैक्यं विभाव्य गन्धपुष्पाद्यैः संपूज्य मन्त्रं दद्यात् । तद्यथा—

**अमुकदेवतामन्त्रमहं ददामि**—इति प्रतिज्ञां श्रावयन् गुरुः शिष्यहस्ते जलं दद्यात् ।

**ददस्वानुग्रहपूर्वकम्**—इति शिष्यो वदेत् ।

ततो गुरुः शिष्यस्य शिरसि हस्तं दत्वा देयमन्त्रमष्टोत्तरशतं प्रजप्य दक्षिण कर्णे त्रिवारं मन्त्रं श्रावयेत् । स्त्रीशूद्रयोस्तु वामकर्णे मन्त्रं कथयेत् । जलदानपूर्वकमन्त्रदानं ब्राह्मणमात्रविषयम् । तदितरेभ्यस्तु तद्विनैव मन्त्रं दद्यात् । ततो गुरुर्ज्योतिर्मयीं विद्यां स्वतः शिष्यतुनं प्रविशन्तीं विचिन्त्य—

**मन्त्रोऽयमावयोस्तुल्यफलदोऽस्तु**—इति ब्रूयात् । शिष्योऽपि तादृशीं विद्यां

गुरुमुखात् स्वहृदयं प्रविशन्तीं विचिन्त्य—

**नमस्ते नाथ भगवन् शिवाय गुरुरूपिणे ।**
**सर्वदेवस्वरूपाय सर्वमन्त्रमयाय च ।।७४।।**
**घोरान्मृत्युमहापाशान्मोचितः कृपया त्वया ।**
**त्वत्प्रसादादहं नाथ कृतकृत्योऽस्मि सर्वतः।।७५।।** इति स्तुत्वा गुरुचरणयोर्दण्डवत् पतित एव तिष्ठेत् । ततो गुरुः—

**उत्तिष्ठ वत्स मुक्तोऽसि सम्यगाचारवान् भव ।**
**कीर्त्तिश्रीकान्तिमेधायुर्बलारोग्यं सदाऽस्तु ते ।।७६।।** इत्युक्त्वा शिष्यमुत्थापयेत् । ततः शिष्यो गुरुदेवमन्त्राणामैक्यं संभाव्य गुरोराज्ञया तत्सन्निधौ मन्त्रमष्टोत्तरशतं जपेत् । गुरुरपि मन्त्रदानानन्तरमष्टोत्तरसहस्रमष्टोत्तरशतं वा मन्त्रं जपेत् । ततः शिष्यो वित्तशाठ्यं विहाय सर्वस्वं तदर्धं तदर्धं वा गुरवे दक्षिणां दद्यात् । कुशत्रयतिलजलान्यादाय—

**ॐ अद्येत्यादि–अमुकगोत्रोऽमुकशर्मा कृतैतदमुकदेवतामुकमन्त्रग्रहण-प्रतिष्ठार्थमिमां दक्षिणाममुकगोत्रायामुकशर्मणे श्रीगुरवे तुभ्यमहं संप्रददे ।**

एवं ब्रह्मप्रतिनिधिविप्राय ऋत्विग्भ्यश्च गोभूहिरण्यवासोऽलङ्कारादीन् दद्यात् । ततः पूजोपकरणसहितं मण्डपं गुरवे दद्यात् । ततो ब्राह्मणान् भोजयित्वा तेभ्यो दक्षिणां दत्वा तदाशिषः समादाय देवनिवेदितं नैवेद्यं तद्भक्तेभ्यो दत्वा गुरुशिष्यौ भुञ्जीयाताम् । दीक्षादिने गुरुशिष्ययोरुपवासो निषिद्धः ।

ततः शिष्यो दिनत्रयं गुरुकुले निवासं कृत्वा चतुर्थदिनं देवतार्चन कारयित्वा गुरुं प्रणम्य तदाज्ञामादाय स्वगृहं गच्छेत् ।

इति क्रियावतीदीक्षाप्रयोगः परिपूर्णः ।

एतदशक्तौ संक्षेपदीक्षा विधेया । सा च प्रोक्ता निबन्धे—

**मुहूर्त्ते सर्वतोभद्रे नवकुम्भं निधाय च ।**
**सोदकं गन्धपुष्पाभ्यामर्चितं वस्त्रसंयुतम् ।।७७।।**
**सर्वौषधींनवरत्नपञ्चपल्लवसंयुतम् ।**
**ततो देवार्चनं कृत्वा हुनेदष्टोत्तरं शतम् ।।७८।।**

सर्वौषधीति तन्त्रान्तरे—

**जटामांसी वचा कुष्टं शैलेयं रजनीद्वयम् ।**
**शटीचम्पकमुस्तं च सर्वोषधिगणः स्मृतः ।।७९।।**

रजनीद्वयं हरिद्रा दारुहरिद्रा च ।[1] पृश्निपर्णी पिप्पली सहदेवी घृतकुमारीति । नवरत्नानि पूर्वं[2]मुक्तानि । पञ्चपल्लवमिति वाशिष्ठे—

**पनसाम्रं तथाऽश्वत्थं वटं वकुलमेव च ।**
**पञ्चपल्लवमित्युक्तं मुनिभिस्तन्त्रवेदिभिः ।।८०।।**

तन्त्रान्तरे—

**अश्वत्थोदुम्बरवटप्लक्षाम्राः पञ्चपल्लवाः।** इत्युक्तम् ।

निबन्धे—

**शिष्यं स्वलङ्कृतं वेद्यामुपाग्न्यमुपवेशयेत् ।।८१।।**
**मन्त्रितैः प्रोक्षणीतोयैः शान्तिं कुम्भजलैस्तथा ।**
**मूलमन्त्रेणाष्टशतं मन्त्रितैरभिषेचयेत् ।।८२।।**

अष्टशतमष्टोत्तरशतम् ।

**अथ संपादयन् मन्त्रं हस्तं शिरसि धारयन् ।**
**शमस्त्वित्यक्षतान् दद्यात् ततः शिष्योऽर्च्चयेद्गुरुम् ।।८३।।**

इति संक्षेपदीक्षाविधिः ।

अथ वर्णमयी दीक्षा मेरुतन्त्रे—

**अथ वर्णमयीं दीक्षां श्रृणवन्तु ज्ञानदायिनीम् ।**
**पुंप्रकृत्याऽऽत्मकत्वं च वर्णानां समुदीरितम् ।।८४।।**
**तादृत्त्वं च शरीरस्य प्रोक्तमेवास्ति देशिकैः ।**
**ततस्तनौ शिशोर्न्यस्येदर्णान् देशिकसत्तमः ।।८५।।**
**संहरेद्वैपरीत्येन वर्णांस्तत्स्थानसंस्थितान् ।**
**देशिकेन्द्रः स्वसामर्थ्यादाज्ञया देवतात्मनः ।।८६।।**
**देवतात्मा भवेच्छिष्यस्तदासंलीनतत्त्वकः ।**
**ततस्तु शिष्यचैतन्यं परमात्मनि योजयेत् ।।८७।।**
**तानर्णाँस्तत उत्पाद्य न्यसेच्छिष्यशरीरके ।**
**तस्मिँश्च दृष्टिक्रमतस्तच्चैतन्यं पुनर्न्यसेत् ।।८८।।**
**भवेच्छिष्यो देवतात्मा नित्यानन्दात्मकः शिवः ।**
**ज्ञानदाऽर्णमयी दीक्षा कथिता सर्वसिद्धिदा ।।८९।।**

इति वर्णामयी दीक्षाविधिः ।

---

१. पुस्तकत्रये ग्रन्थासन्दर्भवाक्यमिदमुपलभ्यते ।
२. द्रष्टव्यमस्यैव ग्रन्थस्य प्रथम भागे ।

अथ कलावती दीक्षा तत्रैव—

अथ वक्ष्ये कलादीक्षामणिमाद्यष्टसिद्धिदाम् ।
वेदे पञ्चकला दीक्षा दक्षेऽष्टत्रिकला मता ।।९०।।
कुपञ्चाशत्कला वामे सिद्धमन्त्रगुरोस्तु सा ।
ग्राह्या द्रुतं सिद्धिकर्त्री विपरीते विपर्ययः ।।९१।।
कला निवृत्तिप्रमुखा भूतानां पञ्च चेरिताः ।
शिष्यकाये भूतमये वेधयेत् ताः क्रमात् सुधीः ।।९२।।
पादादिजानुपर्यन्तं निवृत्तिः संस्थिता कला ।
जान्वोः सकाशादानाभि प्रतिष्ठाख्या कला स्थिता ।।९३।।
नाभितः कण्ठपर्यन्तं विद्याख्या संस्थिता कला ।
कण्ठतो ह्याललाटं तु शान्त्याख्या संस्थिता कला ।।९४।।
भालाच्छिरोऽवधि प्रोक्ता शान्त्यतीता कला तथा ।
संहृतिक्रमतो विद्वान् वेधयेत् स्थानतोऽन्यतः ।।९५।।
स्थाने स्वीयाज्ञया चैवं दीक्षा पञ्चकला स्मृता ।
अष्टत्रिंशत्कलादीक्षायुक्तिं शृण्वन्तु देवताः ।।९६।।
क्रमेण कादिका वर्णा यत्र द्वादश संस्थिताः ।
विलोमा भादिका यत्र तत्र स्थानद्वये कलाः ।।९७।।
भावनीयास्तु सूर्यस्य षोडशासु विधोस्तता ।
यकारादिस्थले वह्नेर्भावनीयाः कला दश ।।९८।।
ततो वर्णकलानां तु वर्णस्थानाच्च संहृतिः ।
पुनश्च जनयेच्छिष्यं कलादीक्षाविधिः स्वयम् ।।९९।।

इति कलावती दीक्षा ।

अथ वेधमयी दीक्षा तत्रैव—

दीक्षां वेधमयीं वक्ष्ये या लब्ध्वा त्यजते जनः ।
तत्कालमेव संसारं जीवन्मुक्तोऽभिजायते ।।१००।।
मूलाधारेऽपि शिष्यस्य ध्यायेत् कञ्जं चतुर्दलम् ।
तस्य मध्ये त्रिकोणं च तन्मध्ये चापि कुण्डलीम् ।।१०१।।
त्रिरावर्त्तमयीं देवीं विद्युत्पुञ्जस्वरूपिणीम् ।
महादेवमयीं साक्षाज्ज्ञानमात्रशरीरिणीम् ।।१०२।।
अणोरणीयसीं देवीं चक्रषट्कप्रभेदिनीम् ।

सुषुम्णावर्त्मना दिव्यां यान्तीं शिवगृहं प्रति ।।१०३।।
सान्तवादितलस्थार्णान् पद्मस्थाने समाहरेत् ।
षड्दले कमले तां तु लान्तवाद्यर्णयुग्दले ।।१०४।।
स्वाधिष्ठाने गुरुं सम्यग्योजयित्वा तु वेधयेत् ।
तदर्णानानयेद्विष्णौ विष्णुं तं नाभिपङ्कजे ।।१०५।।
फान्तडाद्यर्णसंयुक्ते दिग्दले वेधयेत् स्वयम् ।
वर्णाँस्तान् योजयेद्रुद्रे रुद्रं तं हृत्सरोरुहे ।।१०६।।
कान्तथाद्यर्णपत्राब्जे वेधयेदीश्वरे स्वयम् ।
वर्णाँस्तानाहरेदस्मिन् कण्ठपद्मे च तं तथा ।।१०७।।
कलादलमये पद्मे स्वरान् संयोज्य यत्नतः ।
सदाशिवेऽथ संयोज्य ताँस्तद्भ्रूमध्यपद्मके ।।१०८।।
द्विदले हक्षसंयुक्ते वेधयित्वा तु देशिकः ।
शक्त्या सहैवमात्मानं नयेत् परशिवावधि ।।१०९।।
देशिकाज्ञावशाच्छिष्यो दग्ध्वाऽज्ञानं तदा क्षितौ ।
पतेदवाप्तविज्ञानः सर्वज्ञो जायते ततः ।।११०।।
सदाशिवः स्वयं भूयात् सत्यमेव न संशयः ।
इयं ज्ञानप्रदा प्रोक्ता दीक्षा वेधात्मिका शुभा ।।१११।।

इति वेधमयी दीक्षा ।

अथ पञ्चायतनी दीक्षा

तत्र मुख्यकलशं मध्ये संस्थाप्य चतुर्षु कोणेषु चतुरः कलशान् संस्थाप्य पञ्चदेवता आवाह्य पूजयेत् । अथ वा एकमेव कलशं संस्थाप्य वक्ष्यमाणक्रमेण देवताः पूजयेत् । 'प्रोक्तेनैवं कलशविधिनैकेन वा नैककुम्भै' रिति प्रपञ्चसार वचनात् ।

तत्र देवतास्थापनक्रम उक्तो ज्ञानमालायाम्—

यदा तु शङ्करं मध्ये ऐशान्यां श्रीपतिं यजेत् ।
आग्नय्यां च तथा हंसं नैर्ऋत्यां पार्वतीसुतम् ।।११२।।
वायव्यां च सदा पूज्या भवानी भक्तवत्सला ।
यदा तु मध्ये गोविन्दमैशान्यां शङ्करं यजेत् ।।११३।।
आग्नेय्यां गणनाथं च नैर्ऋत्यां तपनं तथा ।
वायव्यामम्बिकां चैव यजेन्मन्त्री समाहितः ।।११४।।

सहस्रांशुं यदा मध्ये ऐशान्यां पार्वतीपतिम् ।
आग्नेय्यामेकदन्तं च नैर्ऋत्यामच्युतं यजेत् ।।११५।।
वायव्यां पूजयेद्देवीं भोगमोक्षैकदायिनीम् ।
भवानीं तु यदा मध्ये ऐशान्यां माधवं यजेत् ।।११६।।
आग्नेय्यां पार्वतीनाथं नैर्ऋत्यां गणनायकम् ।
प्रद्योतनं च वायव्यामाचार्यस्तु प्रपूजयेत् ।।११७।।
हेरम्बं तु यदा मध्ये ऐशान्यामच्युतं यजेत् ।
आग्नेय्यां पञ्चवक्त्रं नैर्ऋत्यां जगदम्बिकाम् ।।११८।।
वायव्यां द्युमणिं चैव यजेन्मन्त्री ह्यतन्द्रितः ।
स्वस्थानवर्जिता देवाः शोकदुःखभयप्रदाः ।।११९।।
तन्मण्डलस्थितो राजा साधकश्च विनश्यति ।

तन्त्रान्तरे—

शम्भौ मध्यगते हरीनहरभूदेव्यो हरौ शङ्करे-
भांस्येनागसुता रवौ हरगणेशाजाम्बिकाः स्थापिताः ।
देव्यां विष्णुहरैकदन्तरवयो लम्बोदरेऽजेश्वरा-
र्येनाः शङ्करभागतो निगदिता व्यस्तास्तु ते हानिदाः ।।१२०।।

मेरुतन्त्रे—

इशेऽजेनेशजशिवा हरावीशेशजेनसाः ।
रवावीशेजजाजोमा देव्यां विशिगभास्कराः ।।
गणेशेऽजेशभादेव्योऽभ्यर्च्या ईशादिकोणतः ।।१२१।।

पूजाक्रमस्तु तन्त्रान्तरे—

मुख्ये पुष्पाञ्जलिं दत्वा गणेशाद्यर्चनं भवेत् ।
गणेश एव मुख्यश्चेत् तत्र सूर्यक्रमाद्भवेत्।।१२२।। इति ॥

इदं च—

एकपीठे पृथक्पूजां विना यन्त्रं करोति यः ।
अङ्गाङ्गं तु परित्यज्य देवताशापमाप्नुयात् ।।१२३।।

इति कलावतीवचनेन यन्त्रातिरिक्ताधारे पृथक्पूजाय निषेधात् प्रतिष्ठित-यन्त्रादिविषयं पीठस्यार्चनमङ्गदेवजयनमित्यादि सनत्कुमारीय वचनात्। अङ्गदेवतापूजाकालस्तु पीठार्चनानन्तरमिति तन्त्रसारकृतः। महाकालसंहितायाँ तु पीठार्चनात् प्रागेव गणेशादिपूजनमुक्तम् ।

**पञ्चायतनवानस्मिन्नेवावसर उत्सुकः ।**
**गणेशविष्णुसूर्येशान् पूजयेदुपाचरकैः।।१२४।।** इति ।

वस्तुतस्तु पीठास्यार्चनमङ्गदेवयजनमित्यादिवचनमेककलशपक्षे । पञ्चकलश-पक्षे तु पञ्चसु सर्वतोभद्रमण्डलेषु पञ्चकलशानुक्तक्रमेण संस्थाप्य पञ्चदेवताः पृथक् पूजयेदिति न कश्चिद्विरोधः । श्यामादौ तु पञ्चायतनदीक्षाभाव उक्तः चामुण्डातन्त्रे ।

**श्यामायां भैरवीताराछिन्नमस्तास्तु भैरवे ।**
**मञ्जुघोषे तथा रौद्रे पञ्चाङ्गो नेष्यते बुधैः ।।१२५।।**

इति पञ्चायतनदीक्षाविधिः ।

पडन्वयमहारत्ने—

**आणवी बहुधा दीक्षा शाक्तेयी शाम्भवी पुनः ।**
**एकधैवेति विद्वद्भिः पठ्यते शास्त्रकोविदैः ।।१२६।।**
**आणवी बहुधेत्युक्त्वा तद्भेदं त्वधुनोच्यते ।**
**स्मार्त्ती मानसिकी यौगी चाक्षुषी स्पार्शनी तथा ।।१२७।।**
**वाचिकी मान्त्रिकी होत्री शास्त्री चेत्यभिषेचिकी ।।**

अथ स्मार्त्ती दीक्षा तत्रैव—

**विदेशस्थं गुरुं स्मृत्वा शिष्यं पाशत्रयं क्रमात् ।।१२८।।**
**विश्लिष्य लयभोगस्य विधानेन परे शिवे ।**
**सम्यग्योजनरूपैषा स्मार्त्ती दीक्षेति कीर्त्तिता ।।१२९।।**

इति स्मार्त्ती दीक्षा ।

अथ मानसी दीक्षा तत्रैव—

**स्वसन्निधौ समासीनमालोक्य मनसा शुचिम् ।**
**मलत्रयादुपायैर्या मोचकी सा तु मानसी ।।१३०।।**

इति मानसी दीक्षा ।

अथ योगदीक्षा तत्रैव ।

**योगोक्तक्रमतो योगी शिष्यदेहं प्रविश्य तु ।**
**गृहीत्वा तस्य चात्मानं स्वात्मना योजनात्मिका ।।**
**योगदीक्षेति सा प्रोक्ता मलत्रयविनाशिनी ।।१३१।।**

इति योगदीक्षा ।

अथ दृग्दीक्षा मेरुतन्त्रे—

निमील्य नयने ध्यात्वा परमात्मनि देवताम् ।
तद्दर्शनानन्दपूर्णनेत्राभ्यां वीक्षयेद्गुरुःस्वयम् ।।१३२।।
शिष्यं प्रसन्नचित्तः सन् पश्चादुपदिशेदिति ।
मन्त्रः शिष्यस्य सिद्ध्यै स्यात्ताद्दग्दीक्षेयं फलप्रदा ।।१३३।।

षडन्वयमहारत्ने—

शिवोऽहमिति निश्चित्य वीक्षणं करुणार्द्रया ।
दृशा सा चाक्षुषी दीक्षा सर्वपापप्रणाशिनी ।।१३४।।

इति दृग्दीक्षा ।

अथ स्पर्शदीक्षा तत्रैव—

स्वयं परशिवो भूत्वा निःसंदिग्धमना गुरुः ।
शिवहस्तेन शिष्यस्य समन्त्रं मूर्ध्नि संस्पृशेत् ।।
स्पर्शदीक्षेति सा प्रोक्ता शिवाभिव्यक्तकारिणी ।।१३५।।

शिवहस्तेनेति—

गन्धैर्मण्डलकं स्वीये विदध्याद्दक्षिणे करे ।
विधिना चार्चयेद्देवमित्थं स्याच्छिवहस्तकः।।१३६।। इति

सोमशम्भुप्रोक्तरूपेणेत्यर्थः ।

मेरुतन्त्रे—

गुरुः स्वस्य गुरुं ध्यायेत् स्वहस्ते शिवरूपिणम् ।
मूलविद्यां षडङ्गं च मातृकादिमनून् जपन् ।।१३७।।
शिष्यस्य मस्तके दत्वा कृपया दक्षिणं करम् ।
पश्चादुपदिशेत् प्रोक्ता स्पर्शदीक्षाऽतिसिद्धिदा ।।१३८।।

इति स्पर्शदीक्षा ।

अथ वाचिकी दीक्षा षडन्वयमहारत्ने—

गुरुवक्त्रं निजं वक्त्रं विभाव्य गुरुरादरात् ।
गुरुवक्त्रप्रयोगेण दिव्यमन्त्रादिकं शिशौ ।।
मुद्रान्यासादिभिः सार्धं दद्यात् सेयं हि वाचिकी ।१३९।।

मेरुतन्त्रे—

सदाशिवे तु चिद्रूपे गुरुश्चित्तं निधापयेत् ।

**मन्त्रान् समस्ताँस्तज्जातान् ध्यायेत् स्वयं तदात्मकः ।।१३०।।**

**जातो गुरोश्च कृपया केवलोऽहं सदाशिवः ।**

**इति ध्यायन्नुपविशेद्वाग्दीक्षा त्वियमीरिता ।।१४१।।**

इति वाचिकी दीक्षा ।

अथ मान्त्री दीक्षा षडन्वयमहारत्ने—

**दीक्षा परा तथा मन्त्रन्याससंयुक्तविग्रहः ।**

**स्वयं मन्त्रतनुर्भूत्वा सक्रमं मन्त्रमादरात् ।।**

**दद्याच्छिष्याय सा दीक्षा मान्त्री मलविघातिनी ।।१४२।।**

इति मान्त्री दीक्षा ।

अथ होत्री दीक्षा तत्रैव ।

**कुण्डे वा स्थण्डिले वाऽपि निःक्षिप्याग्निं विधानतः ।**

**लयभोगक्रमेणैव प्रत्यध्वानं यथाक्रमम् ।।१४३।।**

**मन्त्रवर्णकलातत्त्वपदविष्टपमेव च ।**

**शुद्ध्यर्थं होमयेदेषा होत्री दीक्षा समीरिता ।।१४४।।**

लयभोगक्रमेणेति । वेधदीक्षाक्रमेण मूलाधाराधिष्ठितवर्णदेवतासंहाररूपेणेत्यर्थः।

इति होत्री दीक्षा ।

अथ अभिषेचिकी दीक्षा तत्रैव—

**शिवं च शिवपत्नीं च कुम्भे संपूज्य सादरम् ।**

**शिवकुम्भाभिषेकात् सा दीक्षा स्यादभिषेचिकी ।१४५।।**

इत्यभिषेचिकी दीक्षा ।

अथ शाम्भवी दीक्षा मेरुतन्त्रे—

**गुरोरालोकमात्रेण भाषणात् स्पर्शनादपि ।**

**सद्यः संजायते ज्ञानं सा दीक्षा शाम्भवी स्मृता ।।१४६।।**

इति शाम्भवी दीक्षा ।

अथोपदेशदीक्षा विश्वसारे—

**तत्राप्यशक्तः कश्चिच्चेदब्जमभ्यर्च्य साक्षतम् ।**

**तदम्बुनाऽभिषिच्याष्टवारं मूलेन के करम् ।।**

**निधायाष्टौ जपेत् कर्णे उपदेशे त्वयं विधिः ।।१४७।।**

तत्रेति । पूर्वोक्तसंक्षेपदीक्षायामित्यर्थः । अब्जमिति शङ्खम् । के करं निधायेति । शिरसि हस्तं न्यस्येदित्यर्थः ।

अथोपदेशदीक्षान्तरं तत्रैव ।

महादीक्षा तथा दीक्षा उपदेशस्ततः परम् ।
युगे युगे च कर्त्तव्या उपदेशः कलौ युगे ।।१४८।।
चन्द्रसूर्यग्रहे तीर्थे सिद्धिक्षेत्रे शिवालये ।
मन्त्रमात्रप्रकथनमुपदेशः स उच्यते ।।१४९।।

मेरुतन्त्रे—

भुक्तिमुक्तिप्रसिद्ध्यर्थं परीक्ष्य विधिवद्गुरुः ।
पश्चादुपदिशेन्मन्त्रमन्यथा निष्फलं भवेत् ।।१५०।।
अन्यायेन च यो दद्यात् गृह्णात्यन्यायतश्च यः ।
ददतो गृह्णतो वाऽपि कुल[1]शापो भविष्यति ।।१५१।।
गुरुशिष्यावुभौ मोहादपरीक्ष्य परस्परम् ।
उपदेशं ददद्गृह्णन् प्राप्नुयातां पिशाचताम् ।।१५२।।
अशास्त्रीयोपदेशं तु यो गृह्णाति ददाति च ।
भुञ्जाते तावुभौ घोरान् नरकानेकविंशतिम् ।।१५३।।
असंस्कृत्योपदेशं तु यः करोति विमूढधीः ।
विनश्यन्ति च तन्मन्त्राः सैकते शालिबीजवत् ।।१५४।।
अनर्हे मन्त्रविज्ञानं न तिष्ठति कदाचन ।
तस्मात् परीक्ष्य वक्तव्यमन्यथा निष्फलं भवेत् ।।१५५।।
सच्छिष्यायातिभक्ताय यज्ज्ञानमुपदिश्यते ।
तत् प्राप्नोति प्रतीतित्वं गोक्षीरात् तु यथा घृतम् ।।१५६।।
धनेच्छाभयलोभाद्यैरयोग्यं यदि दीक्षयेत् ।
देवताशापमाप्नोति कृतं च विकृतं भवेत् ।।१५७।।

इत्युपदेशदीक्षाविधिः

अथ क्रमदीक्षाविधिः । तन्त्रचिन्तामणि धृत-शक्तिशङ्गमकुलार्णवादिवचनानि ।

सुन्दरी तारिणी काली क्रमदीक्षाभिगामिनी ।
क्रमपूर्णो महेशानि क्रमाच्छम्भुर्भविष्यति ।।१५८।।
चन्द्राग्निपक्षषोढाख्यपरानिर्वाणतत्परा ।
षट्शाम्भवं ततो देवि चक्रसंभेदमेव च ।।१५९।।

---

१. कुलनाश इति २ पु॰ पा॰ ।

स्वचक्रदेहविज्ञानं परकायप्रवेशनम् ।
एतज्ज्ञानाद्भवेन्मेधा दीक्षा प्रोक्तामया तव ।।१६०।।
हादाविदं निगदितं शृणु कादौ महेश्वरि ।
चन्द्राग्निरसराज्ञी च महाराज्ञी ततः शिवे ।।१६१।।
महाकामकला काली गुह्यकाली ततः शिवे ।
गुह्यकाली द्विधा प्रोक्ता सकला निष्कला क्रमात् ।।१६२।।
दशवक्त्रा तु सकला प्रोक्ता वा सृष्टिकारिका ।
उग्रा सौम्या महाक्रूरा त्रिधा साऽपि प्रकीर्त्तिता ।।१६३।।
निष्कला गुह्यसंशन्तो काली भेदेन कीर्त्तिता ।
केवलेयं भवेन्मेधाह्वयी साम्राज्यरूपिणी ।।१६४।।
चन्द्राग्निवेदपञ्चार्णा तथा नीला क्रमेण च ।
हंसतारा महानीला तदन्ते चीनसम्भवी ।।१६५।।
केवला तु भवेन्मेधा ऋद्धिसिद्धिक्रिया द्विधा ।
त्रितया दिव्यसाम्राज्ये मेधा दीक्षा प्रकीर्त्तिता ।।१६६।।
देवरूपा दिव्यरूपा मन्त्ररूपा महापरा ।
सर्वरूपा सर्वपूर्वा महासाम्राज्यमेधया ।।१६७।।
ऋद्धिसिद्धिक्रमेणैव भेदबाहुल्यमीरितम् ।
विद्या राज्याभिधा दीक्षा छिन्नमस्ताविधौ स्मृता ।।१६८।।
चन्द्रवह्निरसारक्तश्यामा च षोडशी तथा ।
परा षोढा सप्तदशी तदा जाता परा भवेत् ।।१६९।।
दीपिनी मालिनी कुल्ला क्रमाद्विद्यादिराज्यदा ।
बगला या महेशानि साम्राज्यपरमे स्थिता ।।१७०।।
चन्द्रवेदसूक्ष्ममेरुमन्त्रहीनं शिवान्तरम् ।
हृदयं च शतार्णं च पञ्चास्त्रं कुल्लुका तथा ।।१७१।।
गायत्री क्रमयोगेन साम्राज्यपरमेष्ठ्यधृक् ।
एतत्पञ्चकसंयुक्तः सर्वसाम्राज्य बुद्धिधृक् ।।१७२।।
श्रीदिव्यसर्वसाम्राज्यदीक्षासर्वोत्तरा भवेत् ।
ततोऽपि दीक्षा देवेशि नास्ति ब्रह्माण्डगोलके ।।१७३।।
दश विद्याप्रभेदाश्च महाविद्याप्रभेदजाः ।
सिद्धिविद्याप्रभेदाश्च महामन्त्रास्तथैव च ।।१७४।।

तदङ्गमन्त्रा देवेशि शावरं देशशावरम् ।
कालशावरकं देवि तथैव सिद्धिशावरम् ।।१७५।।
त्रिधा दर्शनमन्त्राश्च तथाऽऽम्नायक्रमोद्भवाः ।
कादिहादिक्रमत्वेन ऊर्ध्वाम्नाये कलौ शिवे ।।१७६।।
तथाऽऽयतनमन्त्राश्च यत् किंचिन्मन्त्रजालकम् ।
सर्वाधिकारो देवेशि एतद्दीक्षाविधौ भवेत् ।।१७७।।
एतद्दीक्षासमायुक्तः साक्षाच्छ्रीकालिका स्वयम् ।
प्रहराष्टक्रमेणैव दशविद्यास्वरूपधृक् ।।१७८।।
कामकलाभिधा विद्या सभेदा वृत्तिदेवता ।
अङ्गमन्त्रास्तथाऽन्येऽपि तस्य चास्त्रगताः सदा ।।१७९।।
क्रमदीक्षा महेशानि पञ्चविद्यासु भेदतः ।
तदङ्गमन्त्रा गायत्रीकुल्लुकापञ्चकं शिवे ।।१८०।।
अन्यविद्याविधौ प्रोक्तं रहस्यातिरहस्यकम् ।
श्रीविद्यायां कालिकायां तारायां परमेश्वरि ।।१८१।।
क्रमदीक्षां विना देवि यो जपेत् साधकाधमः ।
स दरिद्री महाघोरी लक्ष्मीहीनस्तु निन्दितः ।।१८२।।
अथ वा वातुलो भूयान्मन्त्रक्षोभमवाप्नुयात् ।
क्रमदीक्षासमायुक्तो राजा भवति निश्चितम् ।।१८३।।
महाविभवसंयुक्तः सर्वसिद्धिसमन्वितः ।
वीजयी विनयी साधुः सिद्धश्च सिद्धिदः शुभः ।।१८४।।
प्रहृष्टात्मा सर्ववेत्ता त्रिकालज्ञः कविः सुखी ।
कोटिसिद्धीश्वरः शूरः सुन्दरः काममोहनः ।।१८५।।
आनन्दात्मा [1]परात्मा च पराजितगुणोत्तरः ।
राजराजेश्वरः साक्षान्महाकालसमः कलौ ।।१८६।।
नैतद्विद्योपासकस्य दारिद्र्यं दीनता क्वचित् ।
गुरुहीनात् क्रमत्यागात् संप्रदायवियोगतः ।।१८७।।
दारिद्र्यं प्रथमं भूयान्नात्र कार्या विचारणा ।
चिन्तामणिगृहं यत्र यत्र रत्नस्य मन्दिरम् ।।१८८।।

---

१. परानन्द इति २ पु. पा. ।

नवरत्नात्मसोपानं सर्वैश्वर्यास्पदं गृहम् ।
कल्पवृक्षवनं यत्र पारिजातवनं तथा ।।१८९।।
स्पर्शमणेस्तु प्राकारो दारिद्र्यं तत्र कुत्र वै ।
तस्मात् क्रमविहीनस्य दारिद्र्यं तु पदे पदे ।।१९०।।
क्रमयुक्तं गुरुं प्राप्य क्रमं संप्रार्थयेत् सुधीः ।
अन्यथा गुरुमौढ्येन दरिद्रत्वमवाप्नुयात् ।।
अल्पायुर्वा भवेद्देवि नात्र कार्या विचारणा ।।१९१।।

दीक्षापद्धतौ वाडवानलीय वचनम्—

गविसूमापतीशाश्च कथ्यन्ते दिक्षु च क्रमात् ।
देशिकेन क्रमज्ञेन दीयन्ते यद्विधानतः ।।१९२।।
क्रमदीक्षेति सा प्रोक्ता व्युत्क्रमो नैव सिद्धिदः ।
क्रमदीक्षाविधिर्यत्र तत्र पूर्णाभिषेचनम् ।।१९३।।

इति क्रमदीक्षाप्रकारः ।

अथ पूर्णाभिषेकदीक्षाविधिः मेरुतन्त्रे पूर्वोक्तदीक्षाभेदानुक्त्वा—

एवं दत्वा गुरुर्दीक्षां कुर्यात् पूर्णाभिषेचनम् ।
विना येनाभिषेकेण साधकः पूर्णबोधताम् ।।१९४।।
आचार्यत्वं न चाप्नोति सद्गतिं च समीहिताम् ।
तस्माद्गुरुः प्रियं शिष्यं बोधयित्वाऽभिषेचयेत् ।।१९५।।

शक्तिसङ्गमकुलार्णवादौ—

विना पूर्णाभिषेकेण पशुरूपः शिवोऽपि च ।
विना पूर्णाभिषेकेण देवता न प्रसीदति ।।१९६।।
विना पूर्णाभिषेकेण कालीं तारां च यो जपेत् ।
तस्य क्रियां हरिष्यामि वातुलो जायते नरः ।।१९७।।
विना पूर्णाभिषेकेण गुरुधर्मेण पार्वति ।
न जपो न तथा होमो न पूजा पूर्णता क्वचित् ।।१९८।।

विशेषतः कौलिकानां पूर्णाभिषेक आवश्यकः—

पूर्णाभिषेकहीनस्तु कौलिको म्रियते यदि ।
पिशाचत्वमवाप्नोतियावदाभूतसंप्लवम् ।।१९९।।

इति कुलार्णववचनात् । तथा—

पूर्णाभिषेको देवेशि दशविद्याविधौ स्मृतः ।

पूर्णाभिषेककाला उक्ताः तन्त्रराजे—

ग्रहाणां वैपरीत्येषु जन्मर्क्षे ग्रहणे द्वयोः ।।२००।।
कुहूप्राप्तौ रिपुक्लेशे कुर्यात् पूर्णाभिषेचनम् ।
तेन दोषाः स्पृशन्त्येनं न कदाचन तद्बलात् ।।२०१।।

शक्तिसङ्गमादौ—

पूर्णाभिषेकदीक्षा तु चन्द्रसूर्यग्रहे भवेत् ।

अन्येष्वपि पुण्यकालेषु पूर्णाभिषेकदीक्षा कर्त्तव्यैव—

सप्तसूक्तेषु कालेषु पुण्येष्वन्येषु वाऽऽदरात् ।।२०२।। विधानमाह—

इति तन्त्रराज वचनात् ।

पूर्वोक्तमण्डपे स्थित्वा गुरुर्ध्यानपरायणः ।
अङ्कुरारोपणं वास्तुयागं कुर्यात् परेऽहनि ।।२०३।।

कुण्डं निर्माय यत्नेन यथाविहितमादरात् ।
होमं कृत्वा गुरुकुलं मान्यं पूज्यमथादरात् ।।२०४।।
वेदिकायामिष्टदेवं गुरुत्रितयमादरात् ।
वस्त्रालङ्करणैः पूज्या गुरुशक्तय एव च ।।२०५।।
तथा दिव्यौघचरणं सिद्धौघचरणं शिवे ।
मानवौघं महेशानि स्वगुरूणां चतुष्ककम् ।।२०६।।

मेरुतन्त्रे—

विरच्य विपुलं चक्रं मण्डपेऽतिमनोहरम् ।
खारीतोयभृतं कुम्भं स्थापयेच्छक्रमध्यतः ।।२०७।।
अन्येषु कलशाँस्तत्र वस्त्रहेमसमन्वितान् ।
दलेषु विविधाः स्थाप्यास्तत्रावाह्येष्टदेवताम् ।।
अभ्यर्च्य मध्ये चान्तेषु साङ्गावरणदेवताः ।।२०८।।

तन्त्रान्तरे—

मध्ये मूलघटः स्थाप्यस्ततः पूजाक्रमेण च ।
सर्वावरणकुम्भाश्च स्थापनीयाः समन्ततः ।।२०९।।

तन्त्रराजे—

विरच्य विपुलं चक्रं प्रतियोनि च षोडश ।
त्रिकोणानि विधायात्र मध्ये कुम्भं च विन्यसेत् ।।२१०।।

सौवर्णं राजतं ताम्रं काचं मार्त्तिकमेव च ।
पूरितं खारितोयेन क्वथितेनाक्षरौषधैः ।।२११।।
निःक्षिप्य नव रत्नानि धान्यानि विविधानि च ।
हिरण्यानि सताम्राणि वासोभ्यामभिवेष्टयेत् ।।२१२।।
रक्ताभ्यां चन्दनैश्चूतपनसाश्वत्थपल्लवैः ।
शतक्रतुलेताबद्धैर्मातुलुङ्गफलान्वितैः ।।२१३।।
विधाय कलशानन्यानन्येष्वेकैकशो न्यसेत् ।
सार्धं सहस्रं षट्त्रिंशत्पञ्चसंख्याः क्रमोदिताः ।।२१४।।

खारीतोयमिति । खारीलक्षणमुक्तं स्कन्दपुराणे—

पलद्वयं तु प्रसृतिः कुडवं द्विगुणं मतम् ।
चतुर्भिः कुडवैः प्रस्थ आढकस्तैश्चतुर्गुणैः ।।२१५।।
चतुर्गुणो भवेद्द्रोणः कुम्भस्तद्द्वयतः स्मृतः ।
कुम्भैस्तैरष्टभिः खारी ... ... ... ।।२१६।।इति ।।

तन्त्रराजे—

[1]मध्ये चक्रेषु तोयादि कृत्वा वात्वाऽभिपूज्य[2] च ।
कालात्मनि च मन्त्राँश्च जपित्वा पूर्ववासरे[3] ।।२१७।।
जन्मर्क्षे प्रातरुत्थाय स्वनित्यान्ते प्रपूजयेत् ।
सहस्रं प्रजपेत् पश्चाद्धोमं कृत्वा समन्ततः ।।२१८।।

त्रिशक्तिरत्ने—

नानोपचारैः संपूज्य सहस्रं जुहुयाच्छुचौ ।
अभिषिञ्चेद्गुरुः शिष्यं नामास्मै प्रदिशेत् स्वयम् ।।२१९।।

तन्त्रराजे—

शृङ्गकाहलशङ्खादिवाद्यसङ्गीतनर्त्तनैः ।
मुदितैर्योगिनीवृन्दैरेकैकं देवतात्मभिः ।।
धृतैः सुपूजितैः सार्धमभिषिञ्चेद्गुरुः स्वयम् ।।२२०।।

मेरुतन्त्रे—

स्पृशँश्च मध्यकलशमाचार्यः प्रपठेदिति ।
साङ्गाँश्च चतुरो वेदाँस्ततस्तेन जलेन तु ।।

१. अशुभफलदेषु ग्रहेषु सत्स्विति । २. चन्द्रसूर्ययोरिति ।
३. शत्रुभिः क्लेशे प्राप्ते इति ।

अभिषिञ्चेद्गुरुः शिष्यमिति पूर्णाभिषेचनम् ।।२२१।।

तन्त्रराजे—

अथ वा खण्डवत्यष्ट कलशाँस्तत्र विन्यसेत् ।
तेषु शक्तीः समावाह्य संपूज्यैवाभिषेचयेत् ।।२२२।।
एकं वा कलशं जन्मदिने कृत्वाऽभिषेचयेत् ।।२२३।।

तथा—

सोमसूर्याग्निरूपत्वं जलस्य परिकीर्त्तितम् ।
तस्मादशेषदुःखार्त्तिशान्त्यै स्यादभिषेचनम् ।।२२४।।

तन्त्रान्तरे—

अभिषेकक्रियाभिज्ञ उद्वर्त्तनपुरःसरम् ।
स्नानद्वयं यथोक्तेन कृत्वा यत्नेन पार्वति ।।२२५।।
पञ्चपल्लवयोगेन दूर्वाविल्वफलैस्तथा ।
वैदिकैस्तान्त्रिकैर्मन्त्रैः सेचयेच्छिष्यमादरात् ।।२२६।।
अयमेव महादेवि पूर्णदीक्षाक्रमः स्मृतः ।
अन्यत् सर्वं महेशानि दीक्षापटलगोचरम् ।।२२७।।

स्नानद्वयमिति। क्रियावत्यादिदीक्षोक्तमेकमपरं पूर्णाभिषेकरूपमित्यर्थः । तदुक्तं तन्त्रराजे—

अथाभिषेकं द्विविधं समवाप्य तदाज्ञया ।
अनुग्रहादि कुर्वीत सिद्धये नान्यथा भवेत् ।।२२८।।
विधाय चक्रं तन्मध्ययोन्यां कुम्भं विधाय तु ।
वर्णक्वाथैः समापूर्य अभिषिञ्च्य वदेन्मनुम् ।।२२९।।
क्रमागतसमाचारनिरते भक्तिशालिनि ।
द्वितीयमभिषेकं च कुर्याद्दिव्यात्मसिद्धये ।।२३०।।

मेरुतन्त्रे—

देवेभ्यः सर्वतन्त्राणि तन्त्रेभ्यो मनवस्तथा ।
यतो यातास्ततः शिष्यः सर्वमन्त्रैकभाजनम् ।।२३१।।
भवेदाचार्यनामा च कुर्यान्नामान्तरं गुरुः ।
एतादृशस्य यो दीक्षां गृह्णीयात् स तु सिद्धिभाक् ।।२३२।।
सर्वमन्त्रप्रदानेषु समर्थः स तु जायते ।
सर्वे देवा वशास्तस्य वेदपन्थास्तु सात्त्विकः ।।२३३।।
एष एव विधिस्तत्र मार्गे स्याद्दक्षिणाभिधे ।

विशेषस्तत्र तोयानि तीर्थानामाहरेत् सुधीः ।।२३४।।
गङ्गाया यमुनायाश्च सरस्वत्या महोदधेः ।
सिन्धुगोदावरीरेवाकावेरीभ्यः पृथूदकात् ।।२३५।।
महेन्द्रजायाः सरयूचर्मण्यवत्योश्च पुष्करात् ।
महानद्या वेदिकाया क्षिप्रावेत्रवतीजलम् ।।२३६।।
कुरुक्षेत्रस्य गण्डक्याः पूर्णाया मानसस्य च ।
घटे दत्वा जपेन्मन्त्रान् नानातन्त्रगतानपि ।।२३७।।
अभिषिक्तस्तु तैस्तोयैः सिद्धास्ते मनवोऽस्य तु ।
प्रयोगार्थं तथा न्यस्य दानार्थम् ....।।२३८।। इति ॥

निरुत्तरतन्त्रे—

वैष्णवो गाणपत्यश्च सौरश्चैव कुलेश्वरि ।
अभिषेकं प्रकुर्वीत शाक्तश्च कुलभूषणः ।।२३९।।

तथा—

अभिषेकं चरेद्देवि अधिवासपुरःसरम् ।
वृद्धिशक्तिं ततः कृत्वा शिवशक्तीः प्रपूजयेत् ।।२४०।।
गुरुं संपूज्य विधिवत् स्वर्णालङ्कारभूषणैः ।
ततः संकल्पविधिना गुरूणां वरणं चरेत् ।।२४१।।

तथा—

शिवशक्ती च संपूज्य स्थापयेद्घटमुत्तमम् ।
नातिह्रस्वं नातिदीर्घं स्वर्णरूप्यादिनिर्मितम् ।।२४२।।
विशेषार्घस्य यन्त्रे वा त्रिकोणे वाऽपि विन्यसेत् ।
कामबीजेन संप्रोक्ष्य वाग्भवेनैव ताडयेत् ।।२४३।।
शक्त्या घटं समालोच्य मायया पूरणं जलैः।
मन्त्रेणानेन तीर्थानि देशिकस्तत्र विन्यसेत् ।।२४४।।
गङ्गाद्याः सरितः सर्वाः समुद्राश्च सरांसि च ।
सर्वे समुद्राः सरितः सरांसि जलदा नदाः ।।२४५।।
ह्रदाः प्रस्रवणाः पुण्याः स्वः पातालमहीगताः ।
सर्वतीर्थानि पुण्यानि घटे कुर्वन्तु सन्निधिम् ।।२४६।।
श्रीबीजेन प्रजप्तेन पल्लवं प्रतिपादयेत् ।
कूर्चेन फलदानं स्यात् स्त्रीबीजेन स्थिराकृतिः ।।२४७।।

सिन्दूरं वह्निबीजेन पुष्पं प्रेतेन विन्यसेत् ।
मूलेन प्रणवेनापि दूर्वां दद्याद्विचक्षणः ।।२४८।।
हूँ फट्स्वाहेति मन्त्रेण कुर्याद्दर्भेण ताडनम् ।
विचिन्त्य देवीपीठं च तत्रावाह्य प्रपूजयेत् ।।२४९।।
अनेनैव विधानने सर्वकर्मसु सुन्दरि ।
घटं संस्थापेयेद्देवीभक्तेनैव विशेषतः ।।२५०।।
महापूजां चरेद्धीमान् षोडशोपचारसंयुताम् ।
गुरूणां च महापूजां शक्तीनां च ततः परम् ।।२५१।।
तत्पश्चात् साधकानां च क्रमेण परिपूजनम् ।
कुमारीभ्यो वलिं दत्वा कुलजाभ्यो विशेषतः ।।२५२।।
अभिषेकं ततो देवि कुर्याच्च गुरुमार्गतः ।
स्वतन्त्रोक्तविधानेन मन्त्रस्योच्चारणैः सह ।।२५३।।
चालयेच्च घटं मन्त्री मन्त्रेणानेन देशिकः ।
ॐ उत्तिष्ठ ब्रह्मकलश सेविताशेषसिद्धिद ।।२५४।।
सर्वतीर्थाम्बुपूर्णस्त्वं पूरयस्व मनोरथम् ।
ईशानेन्द्रस्मरक्षोणी तदन्ते भुवनेश्वरी ।।२५५।।
मन्त्रेणानेन वाद्यानां निर्घोषैश्चालयेद्घटम् ।
अभिषिञ्चेद्गुरुः शिष्यं यजमानं पुरोहितः ।।२५६।।

तथा—

अभिषेकस्य दक्षिणामूर्त्ती ऋषिरनुष्टुप्छन्दः शक्तिर्देवता
सर्वसिद्धिसंकल्पसिद्धये विनियोगः ।

ॐ राजराजेश्वरीशक्तिर्भैरवी[1] कालभैरवी ।
श्मशानभैरवी देवी त्रिपुरानन्दभैरवी ।।२५७।।
त्रिपुरा त्रिपुरादेवी तथात्रिपुरसुन्दरी ।
त्रिपुरेशी महादेवी तथा त्रिपुरमालिका ।।२५८।।
नित्या च नित्यरूपा च वज्रप्रस्तारिणी तथा ।
सर्वचक्रेश्वरी देवी तथा नीलसरस्वती ।।२५९।।
सर्वसिद्धिकरी देवी सिद्धगन्धर्वसेविता ।
उग्रतारा महादेवी तथादक्षिणकालिका ।।२६०।।

---

१. पुरभैरवी इति २—३ पु० पा० ।

एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ।
उग्रदंष्ट्रा महादंष्ट्रा शुभदंष्ट्रा कपालिनी ।।२६१।।
भीमनेत्रा विशालाक्षी मङ्गला विजया जया ।
एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ।।२६२।।
मङ्गला नन्दिनी भद्रा लक्ष्मीः कीर्त्तिर्यशस्विनी ।
पुष्टिर्मेधा शिवा साध्वी यशःशोभा जया धृतिः ।।२६३।।
श्रीनन्दा च सुनन्दा च नन्दिन्यानन्दपूजिता ।
एतास्त्वामभिषिञ्चन्तु मन्त्रपूतेन वारिणा ।।२६४।।
विजया मङ्गला भद्रा स्मृतिः शान्तिः क्षमा धृतिः ।
सिद्धिस्तु परमा पुष्टिः श्री ऋद्धिश्च रतिस्तथा ।।२६५।।
दीप्ता कान्तिर्यशोलक्ष्मीरीश्वरी बुद्धिरेव च ।
शक्तिर्मायावती ब्राह्मी जयन्ती चापराजिता ।।२६६।।
अजिता मानवी श्वेता दितिस्त्वदितिरेव च ।
माया चैव महामाया मोहिनी क्षोभिणी तथा ।।२६७।।
कमला विमला गौरी लावण्याम्बुधिसुन्दरी ।
दुर्गा क्रियाऽरुन्धती च घण्टाकर्णा कपालिनी ।।२६८।।
चर्चिका चापरा ज्ञेया तथैव सुरपूजिता ।
वैवस्वती च कौमारी तथा माहेश्वरी परा ।।२६९।।
वैष्णवी च महालक्ष्मीः कार्त्तिकी कौशिकी तथा ।
शिवदूती च चामुण्डा मुण्डमालाविभूषणा ।।२७०।।
एतास्त्वा मभिसिञ्चन्तु मन्त्रपूतेन वारिणा ।
इन्द्रो वह्निर्यमश्चैव नैर्ऋतो वरुणस्तथा ।।२७१।।
पवनो धनदेशानौ ब्रह्माऽनन्तो दिगीश्वराः ।
एतास्त्वा सिञ्चन्तु मन्त्रपूतेन वारिणा ।।२७२।।
संवत्सरश्चायनौ च मासपक्षदिनानि च ।
तिथयश्चाभिषिञ्चन्तु मन्त्रपूतेन वारिणा ।।२७३।।
रविः सोमः कुजबुधौ गुरुः शुक्रः शनैश्चरः ।
राहुः केतुश्च सततमभिषिञ्चन्तु ते ग्रहाः ।।२७४।।
नक्षत्रं करणं योगोऽमृतसिद्धिस्ततः परम् ।
दग्धाः पापास्तथा भद्रा योगा वाराः क्षणास्तथा ।।२७५।।
वारवेला कालवेला दण्डा ऋक्षादयस्तथा ।

अभिषिञ्चन्तु सततं मन्त्रपूतेन वारिणा ।।२७६।।
असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्त एव च ।
कपाली भीषणाख्यश्च संहारश्चाष्ट भैरवाः ।।२७७।।
एते त्वा मभिसिञ्चन्तु मन्त्रपूतेन वारिणा ।
द्राविणीपुत्रिकाचैव डाकिनीपुत्रिकास्तथा ।।२७८।।
शाकिनीपुत्रिकाश्चान्याः काकिनीपुत्रिकाः पराः ।
शाकिनीपुत्रिका भूयो हाकिनीपुत्रिकास्तथा ।।२७९।।
ततश्च राकिणीपुत्री देवपुत्री ततः परम् ।
मातृणां च तथा पुत्री चोर्ध्वमुख्याः सुतास्तथा ।।२८०।।
अधोमुख्याः सुताश्चैव ज्वालामुख्याः सुताः पराः ।
एतास्त्वा मभिसिञ्चन्तु मन्त्रपूतेन वारिणा ।।२८१।।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
एते त्वा मभिसिञ्चन्तु मन्त्रपूतेन वारिणा ।।२८२।।
पुरुषः प्रकृतिश्चैव विकाराश्चैव षोडश ।
आत्मा परात्मा ज्ञानात्मा ध्यानात्मा परमात्मनः ।।२८३।।
आत्मानश्चात्मनश्चैव स्थूलसूक्ष्मौ च ये पराः ।
एते त्वामभिसिञ्चन्तु मन्त्रपूतेन वारिणा।।२८४।।
वेदादिबीजं हुँ बीजं स्त्रीबीजं तन्निकेतनम् ।
शक्तिबीजं रमाबीजं मायाबीजं सुधाकरम् ।।२८५।।
चिन्तारत्नं महाबीजं नारसिंहं च तारकम् ।
मार्तण्डभैरवं दौर्गं बीजं स्त्रीपौरुषोत्तमम् ।।२८६।।
गाणपत्यं च वाराहं कालीबीजं भयापहम् ।
एतानि त्वाऽभिषिञ्चन्तु मन्त्रपूतेन वारिणा ।।२८७।।
गङ्गा गोदावरी रेवा यमुना च सरस्वती ।
आत्रेयी भारती चैव सरयू गण्डकी तथा ।।२८८।।
करतोया चन्द्रभागा श्वेतगङ्गा च कौशिकी ।
भोगवती च पाताले स्वर्गे मन्दाकिनी तथा ।।२८९।।
एतास्त्वा मभिसिञ्चन्तु मन्त्रपूतेन वारिणा।
भैरवी भीमरूपा च शोणः सुमुख एव च ।।२९०।।
सिन्धुश्चैव ह्रदः पुण्यास्तथा पातालसम्भवः ।
एते त्वामभिसिञ्चन्तु मन्त्रपूतेन वारिणा इति ।।२९१।।

यानि कानि च तीर्थानि पुण्यापुण्यतराणि च ।
तानि त्वामभिसिञ्चन्तु मन्त्रपूतेन वारिणा ।।२९२।।
जम्बूद्वीपादयो द्वीपाः सागरा लवणादयः ।
अनन्ताख्यस्तथा नागाः सर्पा ये तक्षकादयः ।।२९३।।
एते त्वामभिसिञ्चन्तु मन्त्रपूतेन वारिणा ।
तारश्च वह्निजाया च वषट् कूर्चमतः परम् ।।२९४।।
वौषट्कारस्तु फट्कारो ह्यभिषिञ्चतु सर्वदा ।
नश्यन्तु प्रेतकूष्माण्डा राक्षसा दानवाश्च ये ।।२९५।।
पिशाचा गुह्यका भूता अभिषेकेण ताडिताः ।
अलक्ष्मी; कालकर्णी च पापानि सुमहान्ति च ।।२९६।।
नश्यन्तु चाभिषेकेण तारबीजेन ताडिताः ।
रोगाः शोकाश्च दारिद्र्यं दौर्बल्यं चित्तविक्रिया ।।२९७।।
नश्यन्तु चाभिषेकेण वाग्बीजेनैव ताडिताः ।
लोकानुरागत्यागाश्च दौर्भाग्यमपि दुर्यशः ।।२९८।।
नश्यन्तु चाभिषेकेण मन्मथेनैव ताडिताः ।
तेजोह्रासः शक्तिह्रासो बुद्धिह्रासस्तथैव च ।।२९९।।
नश्यन्तु चाभिषेकेण शक्तिबीजेन ताडिताः ।
विषाणि च महारोगा डाकिन्यो भीतयस्तथा ।।३००।।
घोराभिचाराः क्रूराश्च ग्रहा नागास्तथैव च ।
नश्यन्तु चाभिषेकेण कालीबीजेन ताडिताः ।।३०१।।
नश्यन्तु विपदः सर्वाः संपदः सन्तु सुस्थिराः ।
अभिषेकेण शाक्तानां पूर्णाः सन्तु मनोरथाः ।।३०२।।
एवं संसिच्य शिष्यं तु पुनः पूजां समाचरेत् ।
शिष्योऽपि तत्र संपूज्य गुरवे दक्षिणां ददेत् ।।३०३।।
गोभूमिस्वर्णरूप्यं च नानारत्नानि पार्वति ।
सर्वस्वं गुरवे दद्यात् तदर्धं वाऽपि दक्षिणाम् ।।३०४।।
श्रीविद्यां वा सिद्धिकालीं तारां वा महिषार्दिनीम् ।
शिष्याय भक्तियुक्ताय प्रदद्याद्देशिकः स्वयम् ।।३०५।।

तन्त्रान्तरे—

एवं कृत्वाऽभिषेकं च प्रधानकलशाम्भसा ।
तत्तन्मन्त्रं समुच्चार्य परिचारघटोदकैः ।।३०६।।

अभिषिञ्चेत् ततस्तस्मै प्रदद्यान्मन्त्रमुत्तमम् ।
कृते पूर्णाभिषेके तु सर्वमन्त्राधिकारवान् ।।३०७।।
शिष्यः संजायते तस्मादभिषिच्य मनुं ददेत् ।
पूर्वमल्पविधानेन उपदिष्टोऽपि चेन्मनुः ।।३०८।।
पश्चात् सर्वाधिकारार्थं कुर्यात् पूर्णाभिषेचनम् ।
महामन्त्रोपमन्त्राश्च सिद्धिं दद्युर्न संशयः ।।३०९।।

वाममार्गे तु प्रधानकलशो हेतुद्रव्येण पूरणीयः । कलशान्तराणि जलेनैव । तदुक्तं मेरुतन्त्रे—

मध्ये तीर्थघटः स्थाप्यः शेषास्तोयघटा मताः ।
ये ये आवाहिता देवा गुरुणा तु सुरा घटे ।।३१०।।
ते ते कुर्वन्ति सान्निध्यं मन्त्ररूपाश्च तन्मुखे ।
स्वयं सिद्ध्यति वागस्य मूर्द्धानं नैव नामयेत् ।।३११।।
तदर्थं नामितो मूर्द्धा तस्य मृत्युर्न संशयः ।
वाममार्गे गुरुर्यस्य ईदृक् सिद्धो यदा भवेत् ।।३१२।।
शिष्यश्च निरहङ्कारः सदा दैवतत्परः ।
देवार्थं यस्य[1] नान्यत्र यस्य भोगे मनो न च ।।
स एव सिद्धो वामे स्यादन्यो निरयभाजनम् ।।३१३।।

कौलमार्गे विशेष उक्तस्तत्रैव—

सजीवमीनयुक्तेन सुरया पूरितेन च ।
पञ्चामृतैस्तु संपूर्णं शङ्खेन कलशेन वा ।।३१४।।
अभिषेकं ततः कुर्यात् कुलवृक्षोत्थपल्लवैः ।
अयं पूर्णाभिषेकोऽत्र कुलमार्गे प्रकीर्त्तितः ।।३१५।।

कुलवृक्षाश्च—

सहकारः कर्णिकारः केशरस्तिलकस्तथा ।
कदम्बः सिन्धुवारश्च कङ्कोलश्चम्पकाह्वयः ।।३१६।।
श्लेष्मान्तकं कुरवको निम्बश्चलदलस्तथा ।
यज्ञाङ्गो जटिलो विल्वः कुलवृक्षा मता अमी ।।३१७।।

---

१. नाम ततो भोगे इति २ पु. पा ।
नान्तत्रयं भोगे इति ३ पु. पा. ।

इति कुलचूडामणौ प्रोक्ताः।

तन्त्रान्तरे—

अभिषिञ्चेद्गुरुः शिष्यं नामास्मै प्रदिशेत् स्वयम् ।
आनन्दनाथशब्दादि द्व्यक्षरं चतुरक्षरम् ।।३१८।।
नियोज्यैवामुकोऽसीति गुरुरादौ तदाह्वयेत् ।
यथा नारी पितुर्गोत्रात् पत्युर्गोत्रं समाश्रयेत् ।।३१९।।
तथा शक्त्युपदेशेन कौलो गोत्रान्तरे व्रजेत् ।
अथोच्यते महेशानि कौलानां गोत्रमुत्तमम् ।।३२०।।
दुर्लभं सर्वतन्त्रेषु शाम्भवं तत् प्रकीर्त्तितम् ।
कौलावधूतमार्गेषु तीर्थयात्रां न च व्रजेत् ।।३२१।।
तीर्थाटनं च संन्यासं व्रतधारणमेव च ।
उपवासं मुण्डनं च सर्वथा परिवर्जयेत् ।।
पूर्णाभिषिक्ते शिरसि तेन तत्र न मुण्डनम् ।।३२२।।

पूर्णाभिषेकमाहात्म्यमाह मेरुतन्त्रे—

रसेन्द्रेण यथा विद्धमयः सौवर्णतां व्रजेत् ।
दीक्षाविद्धस्तथा ह्यात्मा शिवत्वं लभते ध्रुवम् ।।३२३।।

तथा—

गतं शूद्रस्य शूद्रत्वं गता विप्रस्य विप्रता ।
दीक्षासंस्कारसंपन्ने जातिभेदो न विद्यते ।।३२४।।
पूर्णाभिषेकं कृत्वा तु यत्र कुत्र मृतोऽपि च ।
स एव देवीरूपः स्यात् स देवो धन्यतामियात् ।।३२५।।

तन्त्रान्तरे—

पूर्णाभिषेकयुक्तस्य यत्किञ्चिदनृतं भवेत् ।
तस्य क्रिया च सफला देवता सुप्रसीदति ।।३२६।।
पूर्णाभिषेकयुक्तो हि मन्त्रान् दत्वा जपेच्छिवे ।
तत्क्षणात् सिद्धिमाप्नोति नात्र कार्यविचारणा ।।३२७।।
गुरुं विनाऽपि देवेशि त्वभिषेकी तु यं जपेत् ।
तं सभेदं साधयित्वा सिद्धिं दातुमथार्हति ।।३२८।।
पूर्णाभिषेकसंयुक्तश्चाण्डालोऽपि भवेद्यदि ।
स ब्रह्मर्षिर्महेशानि नात्र कार्या विचारणा ।।३२९।।

पूर्णाभिषेकहीनो य ऋषिवर्योऽपि पार्वति ।
स ब्राह्मणाधमः प्रोक्तस्त्वभिषेकी द्विजोत्तमः ।।३३०।।
पूर्णाभिषेकी देवेशि यस्मिन् देशे विराजते ।
स देशो धन्यतां याति समन्तात् कोटियोजनम् ।।३३१।।
न व्याधिर्न च वै मृत्युर्न शत्रूणां भयं क्वचित् ।
पूर्णरूपः शिवः प्रोक्तः शिव एव न संशयः ।।३३२।।
को वा देहः कस्य देहः सुखं दुःखं च कस्य च ।
को जातः को मृतो देवि सर्वं ब्रह्मस्वरूपकम् ।।३३३।।
यस्मिन् काले भवेद्देवि मन्त्रवर्यस्य विस्मृतिः ।
तदैव मरणं प्रोक्तं मरणं मरणं न हि ।।३३४।।
पूर्णाभिषेकयुक्तानामधिकारो हि सर्वतः ।।३३५।।

इति पूर्णाभिषेकदीक्षाविधिः ।

अथ गुरुं विना मन्त्रिणां मन्त्रान्तरग्रहणोपायो मेरुतन्त्रे—

अथ तान्त्रिकमन्त्राणां दीक्षां शृणु गुरुं विना ।
शुक्लपक्षे त्रयोदश्यां चन्द्रताराबलान्विते ।।३३६।।
गत्वा च दक्षिणामूर्त्तेः सन्निधौ पूजयेच्च तम् ।
कलशस्थापनं कृत्वा तदग्रे वोपरि क्षिपेत् ।।३३७।।
तालपत्रे मनुं लेख्यं[१] मन्त्रदेवं च पूजयेत् ।
देवो गुरुरिति ध्यात्वा मन्त्रं व्यक्तं तु वाचयेत् ।।३३८।।
अष्टोत्तरशतं चैतन्मन्त्रग्रहणमुच्यते ।
एतत् तत्त्वं समाख्यातं गोप्यं मातरि जारवत् ।।३३९।।
गुरौ लोभादयो दोषास्तस्मादुद्विजते मनः ।
अतः शास्त्रगुरुं कृत्वा दक्षिणामूर्त्तितो मनुः ।।३४०।।
बिभ्रत्यद्भुतभूतिभूतपवचोवैचित्र्यचित्रामृत-
स्रोतःशालिनि सन्निबन्धनसरित्संभेदमभ्यर्हितम् ।
गोरक्षाचलभूपनिर्मितपुरश्चर्यार्णवे पञ्चमः
सद्युक्तिस्फुटमौक्तिकोत्कररुचोत्तुङ्गस्तरङ्गो गतः ।।३४१।।

इति श्रीमन्महाराजाधिराजप्रतापसिंहसाहविरचिते पुरश्चर्यार्णवे क्रियावती-दीक्षाप्रयोगपूर्वकदीक्षाभेदनिर्णयो नाम पञ्चमस्तरङ्गः सम्पन्नः ।।५।।



१.लिखितमित्यर्थः ।

# अथ पुरश्चर्यार्णवस्य षष्ठस्तरङ्गः

## अथ पुरश्चरणविधिर्निरूप्यते ।

तत्र पुरश्चरणपदार्थ उक्तो यामले—

वेदादिशावरान्तानां मन्त्राणां सिद्धिहेतवे ।
पुरतश्चरणीयत्वात् पुरश्चरणमुच्यते ।।१।।

मेरुतन्त्रेऽपि—

धर्मार्थकाममोक्षाणां साधनं मन्त्र उच्यते ।
तत्सिद्धये पुरो यच्च चर्यते तत् प्रकीर्तितम् ।।२।।
पुरश्चरणकर्माख्यं वेदादौ शावरान्तके ।
मन्त्रे यन्त्रे तथाऽवश्यम् । ... ...।।३।। इति ।

एतेन पुरश्चरणप्रयोजनमप्युक्तं भवति ।

वायवीयसंहितायाम्—

साधनं मूलमन्त्रस्य पुरश्चरणमुच्यते ।

वीरचूडामणौ—

पुरश्चरणहीनस्य मन्त्रसिद्धिर्न जायते ।
आदौ पुरस्क्रियां कुर्यान्नियमेन यथाविधि ।।४।।

योगिनीहृदयेऽपि—

गुरोराज्ञां समादाय शुद्धान्तःकरणो नरः ।
ततः पुरस्क्रियां कुर्यान्मन्त्रसंसिद्धिकाम्यया ।।५।।
जीवहीनो यथा देहः सर्वकर्मसु न क्षमः ।
पुरश्चरणहीनोऽपि तथा मन्त्रः प्रकीर्त्तितः ।।६।।
तस्मादादौ स्वयं कुर्याद्गुरुं वा कारयेद्बुधः ।
गुरोरभावे विप्रं वा सर्वप्राणिहिते रतम् ।।७।।
स्निग्धं शास्त्रविदं मित्रं नानागुणसमन्वितम् ।
स्त्रियं वा सद्गुणोपेतां सपुत्रां विनियोजयेत् ।।८।।

पुरश्चरणस्वरूपमुक्तम् कुलचूणामणौ—

पचाङ्गानि महादेवि जपो होमश्च तर्पणम् ।
अभिषेकश्च विप्राणामाराधनमपीश्वरि ।।९।।
पूर्वपूर्वदशांशेन पुरश्चरणमुच्यते ।।१०।।

कुलमूलावतारे—

संसारे दुःखभूयिष्ठे यदिच्छेच्छ्रेय आत्मनः ।
पञ्चाङ्गोपासनेनैव मन्त्रजापी सुखं व्रजेत् ।।११।।

मुण्डमालायाम्—

यावद्यस्मिन् जपः प्रोक्तो मन्त्रं तावज्ज्पेत् पुरः ।
ततस्तु तद्दशांशं हि होमं कुर्याद्विचक्षणः ।।१२।।
तस्यापि च दशांशेन तर्पणं समुदाहृतम् ।
तद्दशांशं ततः कुर्यान्मार्जनं तु विशेषतः ।।१३।।
तस्यापि च दशांशेन प्रोक्तं ब्राह्मणभोजनम् ।
कुमारीभोजनं तद्वद्गुरवे दक्षिणां तथा ।।१४।।
एवं गुरुप्रसादेन पुरश्चरणकर्मकृत् ।
मन्त्रसिद्धिमवाप्नोति परमार्थं हि साधकः ।।१५।।

मेरुतन्त्रे—

जपो होमस्तर्पणं च मार्जनं विप्रभोजनम् ।
पञ्चाङ्गकर्मरूपं तदाहुः केचन तत्र तु ।।१६।।
चतुरङ्गास्तथा त्र्यङ्गा द्वयङ्गा एकाङ्गिनोऽपि च ।
मन्त्रास्तिष्ठन्ति वेदेषु तथा मन्त्रेऽपि शावरे ।।१७।।
केचित् षडङ्गा मन्त्राः स्युस्तदङ्गानां जपादिति ।
अघमर्षणसूर्यार्घजलपानप्रणामकैः ।।१८।।
देवार्चया पञ्चभिश्च तैरेवं स्युर्दशाङ्गकाः ।
दूतीयागात् तथा चौलीकर्मतश्चक्रपूजनात् ।।१९।।
भगलिङ्गसमायोगजपाच्च वलिदानतः ।
महावलिप्रदानाच्च भवन्त्येकादशाङ्गकाः ।।२०।।
षोडशाङ्गाः कौलिकानां वामिकानां द्विकोदिताः।
अमर्यश्मरिसेवातोऽष्टादशाङ्गास्त्वघोरिणाम् ।।२१।।

वैष्वक्सेन्याम्—

पञ्चाङ्गोऽयं महायागः पुरश्चरणसंज्ञकः ।
साधनं पुरुषार्थानामन्ये यागाः सहस्रशः ।।२२।।

अस्य पञ्चाङ्गयागस्य कलां नार्हन्ति षोडशीम् ।
विशेषतः कलियुगे जपयागः प्रशस्यते ।।२३।।

मेरुतन्त्रे—

अयुताब्दे कलेर्याते त्येजेद्विष्णुशिला महीम् ।
तदर्धे जाह्नवीतोयं तदर्धे देवताशिला ।।२४।।
प्राप्ते कलियुगे घोरे वामाचारविमिश्रिते ।
भक्ष्याभक्ष्यविचारादिरहिते म्लेच्छसंकुले ।।२५।।
कामक्रोधादिभिर्व्याप्ते जने स्त्रीभिर्विनिर्जिते ।
क्व शिष्यः क्व गुरुर्मन्त्रः क्व तपः क्व च सिद्धयः ।।
जप एव कलौ श्रेयान् शालग्रामार्चनं तथा ।।२६।।

यामले—

साङ्गो जपो महादेवि पुश्चर्येति गीयते ।
तस्यामाचरितायां च मन्त्रः सिद्ध्यति नान्यथा ।।२७।।

पुरश्चरणचन्द्रिकायाम्

विना येन न सिद्धिः स्यान्मन्त्रो वर्षशतैरपि ।
कृतेन येन लभते साधको वाञ्छितं फलम् ।।२८।।
पुरश्चरणसंपन्नो मन्त्रो हि फलदायकः ।
अतः पुरस्क्रियां कुर्यान्मन्त्रवित् सिद्धिकाङ्क्षया ।।२९।।
सम्यक् सिद्धैकमन्त्रस्य नासाध्यं विद्यते क्वचित् ।
बहुमन्त्रवतः पुंसः का कथा शिव एव सः ।।३०।।
किं होमैः किं जपैश्चैव हिं मन्त्रन्यासविस्तरैः ।
रहस्यानां हि मन्त्राणां यदि न स्यात् पुरस्क्रिया ।।३१।।
पुरस्क्रिया हि मन्त्राणां प्रधानं बीजमुच्यते ।

आदियामले—

अकृत्वा तु पुरश्चर्यां यो यत् कर्म समाचरेत् ।।३२।।
तत् तस्यैवाभिचाराय जायते नात्र संशयः ।
तस्मादादौ पुरश्चर्यां कृत्वा कर्माणि साधयेत् ।३३।।

कर्माणीति षट् कर्माणि तथा—

हेतुरप्यङ्कुरोत्पत्तौ जलसेकं विना यथा ।
नाङ्कुरं जनयेद्बीजं तथा मन्त्रोऽपि कीर्त्तितः ।।३४।।

**पुरश्चर्याविहीनो हि सिद्धिहेतुर्न सिद्ध्यति ।**
**तस्मात् तत्सिद्धये मन्त्री पुरश्चरणमाचरेत् ।।३५।।**

तत्रादौ पुरश्चरणकाला वैश्वक्सेन्याम्—

**माधवे मार्गशीर्षे वा मकरस्थे दिवाकरे ।**
**आरभेत पुरश्चर्यां शुक्लपक्षे शुभेऽहनि ।।३६।।**

दक्षिणामूर्त्तिकल्पे—

**आरभेत् प्रवरो विद्वान् पूर्वपक्षं समाश्रितः ।**
**पुण्ये मुहूर्त्ते नक्षत्रे तिथौ स्नात्वा यथाविधि ।।३७।।**

पूर्वपक्षः शुक्लपक्षः। शाक्तादौ तु पक्षद्वयमपि प्रशस्तमेव

**अष्टम्यां वा चतुर्दश्यां पक्षयोरुभयोरपि ।**
**आरभेत पुरश्चर्यां काले दीक्षोक्त एव हि ।।३८।।**इति यामल-सुधार्णव—धृतवचनात् ।

**यस्मिन् काले भवेद्दीक्षा तस्मिन् काले भवेदिदम् ।।३९।।**

मुण्डमालायाम्—

**गुरोरनुज्ञां संप्राप्य विशेषेण शुभे दिने ।**
**समारभ्य पुरश्चर्यां विधिपूर्वं समापयेत् ।।४०।।**

वैशम्पायनसंहितायाम्—

**चन्द्रतारानुकूले च शुक्लपक्षे शुभेऽहनि ।**
**आरभेन्मकरादौ तु सुप्ते विष्णौ जपेन्न च ।।४१।।**

श्रीनृसिंहपादार्चनपद्धतावपि—

**प्रसुप्ते तु महाविष्णौ पुरश्चर्यां न चाचरेत् ।**
**मुह्यन्ति सकला मन्त्राः सुप्ते तस्मिन् जगद्गुरौ ।।४२।।**

मुह्यन्तीति । सर्वेषां मन्त्राणां नारायणात्मकतया तस्मिन् योगरूपनिद्रामाश्रिते सर्वे मन्त्रास्तदीययोगनिद्रया व्यामोहिता भवन्तीत्यर्थः । तथा च मन्त्राणां व्यामोहकाले पुरश्चरणादिना सिद्धिर्न भवतीति भावः । न च तत्तन्मन्त्राणां तत्तदेवतात्मकतया तन्मन्त्राणामेव तदात्मकत्वेन तन्मन्त्रातिरिक्तमन्त्राणामपि कथं तदात्मकत्वमस्तीति वाच्यम् । 'सर्वदेवमयो हरि' रित्यादिना भगवतः सकलदेवात्मकत्वे सिद्धे तत्तद्देवतात्मकतत्तन्मन्त्राणां तदात्मकत्वस्य सुवचत्वात् । एतेन हरिशयन-कालिकपुरश्चरणनिषेधो विष्णुमन्त्रमात्रविषयो वैशम्पायनवचनस्य तत्प्रकरणी-

यत्वादित्यपास्तम्। 'मुह्यन्ति सकला मन्त्रा' इत्यत्र सकलपदमहिम्ना मन्त्रशब्दस्य वैष्णवावैष्णवमन्त्रपरत्वावगमात्। एवं च 'ब्राह्मणेभ्यो दधि दातव्यं न कौण्डिन्यायें' त्यादौ ब्राह्मणादिपदस्य कौण्डिन्येतरब्राह्मणपरत्वदर्शनात्। पुरश्चरणप्रकरणीयवैशम्पायनादिवचननिषिद्धकालातिरिक्तो दीक्षाप्रकरणीयसिद्धान्तशेखरादिवचनविहितश्च यः काल स एव 'यस्मिन् काले भवेदीक्षा तस्मिन् काले भवेदिद' मिति सामान्यवचनेन गृह्यते। तेन दीक्षायां विहितोऽपि श्रावणादिः पुरश्चरणे निषिद्ध एव। हरिशयनकाले पुरश्चरणमेव निषिद्धम्। तदतिरिक्तजपपूजादेस्त्वावश्यकत्वमुक्तम्। तत्रैव—

**अर्चया स्तोत्रपाठेन जपेन नियमेन च।**
**तत्प्रीतिकामुकैर्भक्तैः सेव्यः सुप्तो जनार्दनः ।।४३।।**
**यः प्रसूप्तोऽपि जागर्त्ति विश्वसाक्षी चिदात्मकः।**
**स भक्त्या तोषितो येन तस्यैव सफलं जनुः।।४४।।**इति ॥

शक्तिविषयेऽपि वाडवानलीये—

**घनागमे घनान्ते च पुष्पकाले च शाम्भवि।**
**आराधयेज्जगद्धात्री दिवा वा यदि वा निशि ।।४५।।**
**एकैकदिवसे देव्याः प्रीतिः सांवत्सरी भवेत्।**
**विशेषादेषु कालेषु येन नाराधिताऽम्बिका ।।**
**स दरिद्रो भयग्रस्तः क्षीणायुः साधको भवेत् ।।४६।।**इति।

केचन शाक्तास्तु—

**शिशिरश्च वसन्तश्च शरत्काल इति त्रयः।**
**उत्तमः ऋतवो देव्याः पुरश्चरणकर्मणि ।।४७।।**

इत्यादि—यामलवचनेन हरशियनकालान्तः पातिनिशरत्काले देवीमन्त्रपुश्चरणविधानाद् 'विष्णौ सुप्ते जपेन्न चें' त्यादिवैशम्पायनीयचवचनं देवीमन्त्रातिरिक्तमन्त्रपरमिति संकोचं परिकल्प्य हरिशयनकालेऽपि पुरश्चरणमाचरन्ति। अत्र शरत्कालशब्दः शरत्कालान्तः पातिदुर्गोत्सवकालपरः। तन्त्रोक्तवचनेन 'शरत्काले चतुर्थ्यादिनवम्यन्तं विशेषत' इत्यादिवक्ष्यमाण-कालीकल्प-मुण्डमाला- दिवचनेन च शक्तिमन्त्रपुरश्चरणविधानेऽपि तस्य हरिशयनाधिकरणीभूतयावत्कालं कर्तव्यताकत्वे प्रमाणाभावः। अन्यथा 'ऊर्जे तपसि राधे वा शुक्लपक्षस्तु वैष्णवे' इत्यादि चन्द्रपीठादि —वचनेन 'वैशाखे कार्तिके तथें' त्यादि मत्स्यपुरश्चरण प्रकरणीय-

मेरु-तन्त्र-वचनेन च वैष्णवस्यापि मन्त्रस्य हरिशयनकालान्तः पातिनि कार्त्तिकादौ पुरश्चरणविधानाद्वैशम्पायनादिवचनस्य निर्विषयत्वापत्तेः । यदि च तन्त्रोपतन्त्राणामनन्तत्वेन चातुर्मास्येऽपि शक्तिमन्त्रपुरश्चरणविधायैकवचनानन्तरमुपलभ्येत तदा तु संकोचकल्पना न दुष्टा । अन्यथा दुष्टैवेति पुरश्चरणपद्धतिकृतः।

प्राञ्चस्तु— निषिद्धमासपतितेऽपि ग्रहणादौ सकलमन्त्राणां विशेषपुरश्चरणविधानात् सामान्यपुरश्चरणमेव हरिशयनकाले निषिद्धम् । विशेषपुरश्चरणे तु नायं निषेध इत्याहुः ।

वस्तुतस्तु दुर्गोत्सवकालादौ शाक्तादिमन्त्रस्य कार्त्तिकादौ वैष्णवादिमन्त्रस्य भाद्रपदादौ गणेशादिमन्त्रस्य ग्रहणादौ मन्त्रमात्रस्य च पुरश्चरणविधानादनुक्तकालस्य विशेषपुरश्चरणस्याप्यनिषिद्धकाल एवाचरणाच्च निषिद्धकालान्तर्गत यद्यत्कालावच्छेदेन यद्यद्देवतामन्त्रपुरश्चरणं विशेषवचनैर्विधीयते तत्तत्कालावच्छदेन ततद्देवतामन्त्रपुरश्चरणं कर्त्तव्यमेव। समान्यवचनेन निषिद्धो विशषवचनेन विहितश्च यः कालस्तत्र कस्यापि मन्त्रस्य पुरश्चरणमात्रं नाचरणीयमिति सिद्धान्तस्थितिः। कार्त्तिके तु मन्त्रमात्रस्य पुरश्चरणं कर्त्तव्यम् ।

**सर्वेषामपि मन्त्राणां कुर्यादूर्जे पुरस्क्रियाम्** । इति साधनसमुश्चय वचनाद्वक्ष्यमाणमहाचीनादिक्रमेण पुरश्चरणे तु न कालादिनियमः। तदुक्तं सारसंग्रहे—

**सर्व एव शुभः कालो नाशुभो विद्यते क्वचित् ।।४८।।**

तथा—

**दिग्देशनियमो नात्र स्थित्यादिनियमो न हि ।**
**न जपे कालनियमो नार्चादिषु वलिष्वषि ।।**
**स्वेच्छानियम उक्तोऽत्र महामन्त्रस्य साधने ।।४९।।**

इत्यादिमहामन्त्रशब्दस्तु मन्त्रमात्रोपलक्षकः। अन्यथा महाचीनक्रमेणोपमन्त्रपुरश्चरणे नियमपरिपालनापत्तेस्त्रापि कालपदप्रहारत्तन्त्रान्तर्गततत्तत्कालपरं न तु विहितनिषिद्धमासदिवसादिपरम् ।

तथा च —

**प्रातः कालं समारभ्य जपेन्मध्यमावधि ।।५०।।** इति ।

पाशवकल्पोक्तौ—

**गते तु प्रथमे यामे तृतीयप्रहरावधि ।**
**निशायामेव जप्तव्यं रात्रिशेषे जपेन्न च।।५१।।**

इति वीरकल्पोक्तश्च यः कालनियमः स चास्मिन् महाचीनक्रमेणास्तीति तदर्थः।

**न विशेषो दिवारात्रौ सन्ध्यायां वा महानिशि ।**
**सर्वकाले यजेद्देवीमस्नातः कृतभोजनः ।।५२।।**

इति तत्रैवोक्तत्वात् कथमन्यथा स्यात्तथा—

**वीराणां जपकालस्तु सर्वकालः प्रशस्यते ।।५३।।**

इति भावचूडामणि—वचनं संङ्गमनीयम् ।

**अष्टम्यां वा चतुर्दश्यां पक्षयोरुभयोरपि ।**
**आरभेत पुरश्चर्यां काले दीक्षोक्त एव हि ।।५४।।**

इत्यादिवीरपुरश्चरणप्रकरणीय- यामलादिवचनविरोधादुक्त्युक्त्या तु कालशब्दस्योक्तकालपरतया वीरशब्दस्य च कौलिकपरतया तदीयकल्पे दिवसस्य रात्रेश्च पुरश्चरणकालतया वक्ष्यमाणत्वान्न कश्चिद्विरोधः ।

एवं महानीलक्रमेण पुरश्चरणेऽपि नोक्तकालनियमः । उक्तवचनानां तत्राप्युपलम्भात् । अत्र केचित् —

**न जपे कालनियमो महामन्त्रस्य साधने ।।५५।।**

इत्यादि—सिद्धान्तसंग्रहवचनान्महामन्त्रपुरश्चरणे कालनियमो नास्तीति वदन्ति । तन्मते—

**न देशकालनियमो भक्ष्यादिनियमो न हि ।**
**शौचादिनियमो नास्ति महामन्त्रस्य साधने ।।५६।।**

इति तस्य वचनात् ।

**न शौचादिक्रियाः कार्याः स्मृतिशास्त्रप्रचोदिताः ।**
**एकं लिङ्गे गुदे पञ्च इत्याद्या याः प्रकीर्त्तिताः ।।५७।।**

इति स्वच्छन्दभैरवादिवचनाच्च ।

महामन्त्रपुरश्चरणे नियमसामान्याभावापत्त्या—

**नियमास्तत्र भूयांसः प्रकर्त्तव्याः प्रयत्नतः ।**
**अवैधकरणात् सिद्धिहानिः स्यान्नात्र संशयः ।।५८।।**

इत्यादिमहाविद्यापुरश्चरणप्रकरणीयमहाकालवचनविरोधः स्पष्ट एवोति संक्षेपः ।

अथ पुरश्चरणदेशाःयोगिनीतन्त्रे—

**आदौ पुरस्क्रियां कर्त्तुं स्थाननिर्णय उच्यते ।**
**पुण्यक्षेत्रं नदीतीरं गुहापर्वतमस्तकम् ।।५९।।**

तीर्थप्रदेशः सिन्धूनां संगमः पावनं वनम् ।
उद्यानानि विविक्तानि विल्वमूलं तटं गिरेः ।।६०।।
तुलसीकाननं गोष्ठं वृषशून्यं शिवालयम् ।
अश्वत्थामलकीमूलं गोशाला जलमध्यतः ।।
देवतायतनं कूलं समुद्रस्य निजं गृहम् ।।६१।।

तथा—

गृहे शतगुणं विद्याद्गोष्ठे लक्षगुणं भवेत् ।
कोटिर्देवालये पुण्यमनन्तं शिवसन्निधौ ।।६२।।
म्स्लेच्छदुष्टमृगव्याधशङ्कातङ्कविवर्जिते ।
एकान्तोपवने निन्दारहिते भक्तिसंयुते ।।६३।।
सुदेशे धार्मिके देशे सुभिक्षे निरुपद्रवे ।
रम्ये भक्तजनस्थाने निवसेत् तापसप्रिये ।।६४।।
गुरूणां सन्निधाने च चित्तैकाग्रस्थले तथा ।
एषामन्यतमं स्थानमाश्रित्य जपमारभेत् ।।६५।।

महाकपिलपञ्चरात्रे च—

क्षेत्रतीर्थगृहारामदेवालयनदीह्रदाः ।
कुटी विविक्तमित्येते देशाः स्युर्मन्त्रसिद्धिदाः ।।६६।।

प्रपञ्चसारे—

समुद्रतीरेऽप्यथ वाऽद्रिशृङ्गे
समुद्रगानां सरितां च तीरे ।
जपेद्विविक्ते निज एव गेहे
विष्णोर्गृहे वा पुरुषो मनस्वी ।।६७।।

यामले—

म्लेच्छदुष्टमृगव्यालशङ्कातङ्कविवर्जिते ।
एकान्ते पावने चिन्तारहिते भक्तिसंयुते ।।६८।।
सुदेशे धार्मिके राष्ट्रे सुभिक्षे निरुपद्रवे ।
रम्ये भक्तगणस्थाने निवसेन्न पराश्रये ।।६९।।

देवताभेदेन पुरश्चरणस्थानभेदा उक्ता मेरुतन्त्रे—

जपस्थानानि वक्ष्यामि कृत्तिमाकृत्तिमानि च ।
गुप्तानि सर्वतन्त्रेषु देवतानां पृथक् पृथक् ।।७०।।

महागणपतिक्षेत्रं मायूरं नर्मदातटम् ।
महाश्मानं मायूरं गणेशमनुसिद्धिदम् ।।७१।।
प्रभासं च कुरुक्षेत्रं पुष्करं भृगुपर्वतम् ।
यमुनायास्तटं काशीदिनेशमनुसिद्धिदम् ।।७२।।
अयोध्या मथुरा माया काशी वदरिकाश्रमः ।
गया च गण्डकीतीरं द्वारिका विष्णुसिद्धिदा ।।७३।।
केदारस्त्र्यम्बकं काशी काञ्च्यवन्त्यौ वनानि च ।
गङ्गातीरं वैद्यनाथो रामेशः शिवसिद्धिकृत् ।।७४।।
ज्वालामुखी प्रयागश्च कामिनी मालिकापदम् ।
सरस्वत्यास्तथा तीरं शक्तिमन्त्रस्य सिद्धिकृत् ।।७५।।
तीरं च कमलेश्वर्या मेखला यक्षपर्वतः ।
अङ्गबङ्गकलिङ्गाश्च क्षुद्रदैवतसिद्धिदाः ।।७६।।
कामरूपं च नेपालं हिङ्गुला विन्ध्यवासिनी ।
जालन्धरं पूर्णगिरिर्वाममार्गेण सिद्धिदाः ।।७७।।
तटं पद्माकराणां च कदलीक्ष्वर्कवाटिका ।
विद्रुमाकुलितो ग्रामो गणेशस्यातिवल्लभः ।।७८।।
पद्माकरतटारण्यकरवारार्कवाटिका ।
गोधूमदूर्वाक्षेत्राणि शिलाभानुमतः प्रिया ।।७९।।
तुलस्यश्वत्थ[१]धात्रीक्षुशालग्रामादिसन्निधौ ।
गोष्ठे श्रोत्रिययुग्ग्रामे हरेर्मुद्वैदिकान्तिके ।।८०।।
पश्चिमाभिमुखे लिङ्गे नन्दिवर्जे शिवालये ।
शिवतोषे वटस्यारात् संगमे विपिने ह्रदे ।।८१।।
कदलीचूतचम्बेलीसेवन्तीवर्बरीवने ।
[२]पञ्चख्यातनदीतीरे शक्तेः प्रीतिश्च निर्जने ।।८२।।
पल्वलारान्निम्बकोलशाखाटेमधुकाकुले ।
वल्मीके शुष्कनद्यां च मोदन्ते क्षुद्रदेवताः ।।८३।।
पितृगेहे श्मशाने च त्रिपथे च चतुष्पथे ।
शून्यालये शिवाकीर्णभुवि तुष्यन्ति वामगाः ।।८४।।

---

१. शालीक्षु—इति २ पु. पा. ।
२. ग्रन्थख्यात—इति २-३ पु. पा. ।

गृहे गोष्ठे तथोद्याने वने पर्वतमस्तके ।
नद्यां तत्संगमे देवालये स्याद्वैदिकोऽधिकः ।।८५।।
यस्मिन् देशे न गोहत्या नापि ब्रह्मवधो भवेत् ।
न श्रावयन्ति शूद्राश्च सिद्धिस्तत्र तु वैदिकी ।।८६।।
म्लेच्छाः पाखण्डिनो धूर्त्ता राजानः सचिवादयः ।
युवत्यश्च च वर्त्तन्ते तत्र सिद्धिरदूरतः ।।८७।।

अथ निषिद्धस्थानानि तत्रैव—

जीर्णदेवालयोद्यानगृहवृक्षतलेषु च ।
नदीकूलाद्रिकूटेषु भूच्छिद्रादिषु नो वसेत् ।।८८।।

जीर्णत्वं वृक्षपर्यन्तमन्वेति । नदीकूलनिषेधस्तु समुद्रगाकुलभिन्नपरः ।

यामले—

राजानः सचिवा राजपुरुषाः प्रभवो जनाः ।
चरन्ति येन मार्गेण न वसेत् तत्र तत्त्ववित् ।।८९।।

मेरौ—

एवं विचार्य मतिमान् कुर्याद्भूमिपरिग्रहम् ।।९०।।

अथ पुरश्चरणे भक्ष्यादिनियमो यामले—

शाकं मूलं फलं भक्ष्यं हविष्यं शक्तवोऽथ वा ।
अथ वा क्षीरमात्रं स्यात् पुरश्चरणवृत्तये ।।९१।।

हविष्याण्युक्तानि स्मृतौ—

हैमन्तिकं सितास्विन्नं धान्यं मुद्गास्तिला यवाः ।
कलायकङ्गुनीवारा वास्तुकं हिलमोचिका ।।९२।।
षष्टिका कालशाकं च मूलकं केमुकेतरत् ।
लवणे सैन्धवसामुद्रे गव्यं च दधि सर्पिषाम् ।।९३।।
पयोऽनुद्धृतसारं च पनसाम्रहरीतकी ।
पिप्पली जीरकं नागरङ्गकतिन्तिडीकी ।।९४।।
कदलीलवलीधात्रीफलान्यगुडमैक्षवम् ।
अतैलपक्कं मुनयो हविष्यान्नं प्रचक्षते ।।९५।।

मेरुतन्त्रे—

सत्कन्दफलमूलाशी सद्भिक्षाशी हविष्यभुक् ।
पयोव्रती भवेच्छ्रेष्ठस्तेषाम् ... ... ।।९६।।इति ।।

तत्रैव—

**श्रेष्ठं गवां दुग्धमुक्तं मध्यमं सुरभीभवम् ।**
**अधमं माहिषं चान्यव्रतस्थानां निषिध्यते ।।९७।।**

कुलार्णवे—

**यस्यान्नपानपुष्टाङ्गः कुरुते धर्मसंचयम् ।**
**अन्नदातुः फलस्यार्धं कर्त्तुश्चार्धं न संशयः ।।९८।।**
**तस्मात् सर्वप्रयेत्लन परान्नं वर्जयेत् सुधीः ।**
**पुरश्चरणकाले तु सर्वकर्मसु शाम्भवि ।।९९।।**
**जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहात् ।**
**मनो दग्धं परस्त्रीभिः कथं सिद्धिर्वरानने ।।१००।।**

परान्नमिति भिक्षेतरविषयम् । भिक्षायां तु विहितत्वान्न दोषः । तदुक्तं मेरुतन्त्रे—

**वैदिकाचारयुक्तानां शुचीनां श्रीमतां सताम् ।**
**सत्कुलस्थानजातानां भिक्षाशी चाग्रजन्मनाम् ।।१०१।।**
**चरुमूलफलक्षीरदधिभिक्षान्नशक्तवः ।**
**एतत् सप्तविधं भीक्षालब्धं भक्ष्यं व्रतस्थितैः ।।१०२।।**

अगस्त्यसंहितायाम्—

**दधि क्षीरं घृतं गव्यमैक्षवं गुडवर्जितम् ।**
**तिलाश्चैवासिता मुद्गाः कन्दः केमुकवर्जितः ।।१०३।।**

पद्धतौ—

**कन्दाश्च पिण्डारुकसेरुकाद्या**
**गवां दधिक्षीरघृतानि सैन्धवम् ।**
**मुद्गा यवाः कृष्णतिलाः कलायाः**
**प्रियङ्गवः षष्टिकतण्डुलाश्च ।।१०४।।**
**कदम्बजम्बूपनसाम्रनिम्बा**
**नारङ्गधात्रीकदलीफलानि ।**
**कपित्थमिष्टीमृदुदाडिमानि**
**भक्ष्याणि चैतानि पुरस्क्रियायाम् ।।१०५।।**

मिष्टी मधुररसविशिष्टफलविशेषः। मृदुर्मृद्वीका । इतराणि प्रसिद्धानि । एतद्भिन्नान्यप्यनिषिद्धानि, यावकनारिकेलादीनि भक्ष्याण्येव ।

अथ निषिद्धानि—

क्षारं च भौमं लवणं तथाऽऽढकी

माषा मसूराश्चणकाश्च कोद्रवाः ।

तैलं सितं मुद्गकमारनालकं

क्षौद्रं गुडं फाणितमामिषादिकम् ।।१०६।।

कूष्माण्डवृन्ताकपलाण्ड्वलाबु-

च्छत्राकनालं लशुनं करीरः ।

पटोलताम्बूलविभीतकाद्य

मन्यच्च संजातरसान्तरं यत् ।।

अन्धस्तथा पर्युषितं च दग्धं

त्याज्यानि चैतानि वदन्ति धीराः ।।१०७।।

पटोलं पडवर इति प्रसिद्धम् । अलाबुस्तुम्बीफलम् । करीरो वंशाङ्कुरः । अन्ध इत्यन्नम् । अन्यान्यपि निषिद्धानि गृञ्जरकरञ्जादीनि त्याज्यान्येव । गृञ्जनं च गाजर इति मध्यदेशीयभाषया प्रसिद्धा ।

अथासनानि मेरुतन्त्रे—

आसनं तु द्विधा प्रोक्तं नित्यकामिकभेदतः ।

कुशाजिनाम्बरैर्युक्तं चतुरङ्गुलमूर्द्धतः ।।१०८।।

चतुरस्रं द्विहस्तं च सुन्दरं मृदुनिर्मलम् ।

इदं सुखासनं नित्यं जपसिद्धिविधायकम् ।।१०९।।

अथ काम्यानि वक्ष्यन्ते जपसिद्ध्यै मृगाजिनम् ।

सर्वसिद्ध्यै व्याघ्रचर्म त्वाविकं रोगनाशनम् ।।११०।।

कौशेयं पौष्टिकं प्रोक्तं वेत्रजं श्रीविवर्द्धनम् ।

श्वेते तु कम्बले धर्मसिद्धी रक्तेऽर्थसिद्धयः ।।१११।।

पीते कामो द्विजान्येषां मोक्षदः कृष्णकम्बलः ।

दुःखमुक्त्यै रञ्जितं तु नीलरङ्गो न शोभनः ।।११२।।

पुरश्चरणचन्द्रिकायाम्—

अभिचारे कृष्णवर्णं रक्तं वश्यादिकर्मणि ।

शान्तिके धवलं प्रोक्तं चित्रकं सर्वकर्मसु ।।११३।।

स्तम्भने गजचर्मस्यान्मारणे माहिषं तथा ।

मैषीचर्म तथोच्चाटे खड्गिजं वश्यकर्मणि ।।

विद्वेषे जाम्बुकं प्रोक्तं भवेद्गोचर्म शान्तिके ।।११४।।

अथ निषिद्धानि मेरुतन्त्रे—

त्यजेन्निषिद्धमप्राप्तौ न निषिद्धे तु संविशेत् ।
निषिद्धान्यथ वक्ष्यन्ते शोकः स्याद्दारुजासने ।।११५।।
वंशासने दरिद्रः स्याद्वस्त्रे स्थानविनाशनम् ।
पाषाणे च तथोच्चाटो ज्वरी स्यान्मृण्मयासने ।।११६।।
क्षित्यासने भवेत् पीडा पल्लवे चित्तविभ्रमः ।
तृणासने भवेत् पीडा निषिद्धं त्विष्टिकासनम् ।।११७।।
चित्तक्षोभो गृहस्थस्य कृष्णसाराजिने भवेत् ।
वटुर्वनस्थः संन्यासी स्नातकः सिद्धिमाप्नुयात् ।।११८।।

पुरश्चरणचन्द्रिकायाम्—

न दीक्षितो विशेज्जातु कृष्णसाराजिने गृही ।
विशेद्यतिर्वनस्थश्च ब्रह्मचारी च स्नातकः ।।११९।।
कुशाजिनाम्बरेणाढ्यं चतुरस्रं समन्ततः ।
एकहस्तं द्विहस्तं वा चतुरङ्गुलमुच्छ्रितम् ।।१२०।।
स्वस्तिकादिक्रमेणाथ विशेत् तत्र निराकुलः ।
स्वस्तिकं भद्रकं वीरं [1]कूर्मं चेति चतुष्टयम् ।।१२१।।
जपेत् प्रशस्तमन्येषां प्रसाङ्गादेव कीर्त्तनम् ।
उद्देशानुक्रमेणैव वक्ष्याम्येषां तु लक्षणम् ।।१२२।।
जानूर्वोरन्तरे सम्यक् कृत्वा पादतले उभे ।
ऋजुकायः समासीनः स्वस्तिकं तदुदीरितम् ।।१२३।।
गुल्फौ तु वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ।
पार्श्वे पादौ तु पाणिभ्यां दृढं बध्वा सुनिश्चलम् ।।१२४।।
भद्रासनं भवेदेतत् सर्वव्याधि[2]विनाशनम् ।
एकं पादमथैकस्मिन् विन्स्योरुणि[3]संस्थितः ।।१२५।।
इतरस्मिँस्तथा चोरौ वीरासनमुदाहृतम् ।।१२६।।

तन्त्रान्तरे तु—

वामोरुन्यस्तदक्षाङ्घ्रि वीरासनमुदाहृतम् ।
गुदं निरुध्य गुल्फाभ्यां व्युत्क्रमेण समाहितः ।।१२७।।

---

१. सिद्धं चोति २-३ पु. पा. । २. विषापहम् २-३ पु. पा. ।
३. तान्त्रिकप्रयोगः

कूर्मासनं भवेदतेत् कूर्ममुत्तानकूर्मकम् ।
गोमुखं कुक्कुटं मात्स्यं धनुःपश्चिमतानकम् ।।१२८।।
मयूरं लावकं सिद्धं पद्मं सिंहं शवासनम् ।
स्वस्तिकं पद्मकं वीरमिति योगविदो विदुः ।।१२९।।
कुक्कुटासनबन्धस्थो दोर्भ्यां संबध्य कन्धराम् ।
शेते कूर्मवदुत्तान एतदुत्तानकूर्मकम् ।।१३०।।
सव्ये दक्षिणगुल्फं तु पृष्ठपार्श्वे निवेशयेत् ।
दक्षिणे च तथा सव्यं गोमुखं गोमुखं यथा ।।१३१।।
पद्मासनं तु संयोज्य जानूर्वोरन्तरे करौ ।
निवेश्य भूमौ संस्थाप्य व्योमस्थं कुक्कुटासनम् ।।१३२।।
वामोरुमूलार्पितदक्षपादं
जान्वयोर्बहिर्वेष्टितदक्षदोष्णा ।
प्रगृह्य तिष्ठेत् परिवर्त्तिताङ्गः
श्रीमत्स्यनाथोदितमासनं तत् ।।१३३।।
पादाङ्गुष्ठौ तु पाणिभ्यां गृहीत्वा श्रवणावधि ।
धनुराकर्षणं कुर्याद्धनुरासनमीरितम् ।।१३४।।
प्रसार्य पादौ भुवि दण्डरूपौ
दोर्भ्यां च पादद्वितयं गृहीत्वा ।
जानौ परिन्यस्तललाटदेशो
वसेदिदं पश्चिमतानमाहुः ।।१३५।।
अवष्टभ्य धरां सम्यक् तलाभ्यां तु करद्वयम् ।
हस्तयोः कुर्परे चापि स्थापयेन्नाभिपार्श्वयोः ।।१३६।।
समुन्नतशिरःपादो दण्डवद्व्योम्नि संस्थितः ।
मयूरासनमेतत् तु सर्वरोगहरं परम् ।।१३७।।
भूमौ स्वमस्तकं स्थाप्यं हस्तयोः कुर्परे तथा ।
पादौ खे दण्डवत् कुर्यान्नरकासनमीरितम् ।।१३८।।
मेढ्रादुपरि निःक्षिप्य सव्यं गुल्फं ततोपरि[1] ।
गुल्फान्तरं च निःक्षिप्य मुक्तासनमितीरितम् ।।१३९।।

१. अयं 'तस्योपरी'त्यर्थे तान्त्रिकप्रयोगः ।

एतत् सिद्धासनं प्राहुरन्ये वज्रासनं विदुः ।
मुक्तासनं वदन्त्येके प्राहुर्गुप्तासनं परे ।।१४०।।
वामोरूपरि दक्षिणं च चरणं संस्थाप्य वामं तथा
याम्योरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां दृढम् ।
अङ्गुष्ठौ हृदये निधाय चिबुकं नासाग्रमालोकये-
देतदव्याधिविघातकारि यमिनां पद्मासनं प्रोच्यते ।।१४१।।
गुल्फौ च वृषणस्याधः सविन्याः पार्श्वयोर्न्यसेत् ।
दक्षिणे सव्यगुल्फं च दक्षगुल्फं च सव्यके ।।१४२।।
हस्तौ जान्वोस्तु संस्थाप्य स्वाङ्गुलीः संप्रसार्य च ।
व्यातवक्रो निरीक्षेत नासाग्रं सुसमाहितः ।।१४३।।
सिंहासनं भवेदेतत् पूजितं योगिभिः सदा ।
उत्तानशववद्भूमौ शयनं तु शवासनम् ।।
शवासनं चार्त्तिहरं चित्तविश्रान्तिसाधनम् ।।१४४।।

यामले—

ऊर्वोः पादौ क्रमान्न्यस्य जान्वोः प्रत्यङ्मुखाङ्गुलीः ।
करौ निदध्यादाख्यातं वज्रासनमनुत्तमम् ।।१४५।।

गोरक्षशतके—

योनिस्थानकमङ्घ्रिमलघटितं कृत्वा दृढं विन्यसेन्-
मेढ्रे पादमथैकमेव नियतं कृत्वा समं विग्रहम् ।
स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्यन् भ्रुवोरन्तरं
चैतन्मोक्षकपाटभेदजनकं सिद्धासनं प्रोच्यते ।।१४६।।

तथा—

आसनानि च तावन्ति यावन्तो जीवजन्तवः ।
एतेषामखिलान् भेदान् विजानामि महेश्वरः ।।१४७।।

अथ मालाभेदा मेरुतन्त्रे—

अथ मालां प्रवक्ष्यामि द्विविधा सा स्थिरा चला ।
स्थिरा तु स्थिरचित्तानां चञ्चला चलचेतसाम् ।।१४८।।

यामले—

माला तु त्रिविधा प्रोक्ता प्रथमा वर्णमालिका ।
द्वितीया चरमालोक्ता तृतीया करमालिका ।।१४९।।

मेरुतन्त्रे—

**अकारादिक्षकारान्तैर्बिन्दुवन्मातृकाक्षरैः ।**
**अनुलोमविलोमस्थैः क्लृप्तया वर्णमालया ।।१५०।।**
**प्रत्येकवर्णयुग्मन्त्राः जप्ताः स्युः सर्वसिद्धिदाः ।**
**आर्याद्या अपि किं चान्यत् प्रोक्तेयं स्थिरमालिका ।।१५१।।**

त्रिशक्तिरत्नेऽपि—

**अथ वा मातृकामय्या मालया प्रजपेद् बुधः ।**
**एकैकं वर्णमुच्चार्य वर्णेनान्तरितं जपेत् ।।१५२।।**
**सुधीरवे लकारान्तं तत आन्तं समानयेत् ।**
**मेरुरूपं क्षकारं हि साधको नैव लङ्घयेत् ।।१५३।।**

मुण्डमालायाम् —

**मेरुहीना च या माला मेरुलङ्घ्या च या भवेत् ।**
**अशुद्धा तु भवेदत्र सा माला निष्फला भवेत् ।।१५४।।**
**विचित्रा[1] विशतन्त्वाभा ब्रह्मनाडीगता तु या ।**
**तया संग्रथिता ध्येया सर्वकामफलप्रदा ।।१५५।।**
**अष्टोत्तरशतजपे त्वादौ क्लीबं समुच्चरेत् ।**
**ॠ-ॠ-ॡ-ॡ-वर्णचतुष्टयं क्लीबं प्रचक्षते ।।१५६।।**
**वर्गाणामष्टकं वाऽपि काम्यभेदक्रमेण तु ।**
**अं-क-च-ट-त-प-य-शा इत्येव चाष्टवर्गकम् ।।१५७।।**

अष्टोत्तरशतजपे कर्त्तव्ये क्लीबचतुष्टयमादावुच्चार्य विलोमसमाप्तौ चापि तच्चतुष्टयं विलोमेन जपेदित्येकः पक्षः ।अनुलोमविलोमाभ्यां पञ्चाशद्वर्णमुच्चार्य शेषेऽष्टवर्गाक्षराण्युच्चरेदित्यपरःपक्ष इत्यर्थः । क्षकारश्च मेरुत्वेन सकृदेवोच्चार्यस्तदुत्तरं मन्त्रो नोचार्य इति तत्र विवेकः । प्रकारान्तरमुक्तं साधनसमुच्चये—

**श्रीमायाकामवाग्योगान्मातृकावर्णयोगतः ।**
**अनुलोमविलोमाभ्यामष्टोत्तरशतं जपेत् ।।१५८।।**

तन्त्रान्तरे—

**त्रयं गुरो त्रयं देवि गणपाय प्रकीर्त्तितम् ।**
**न्यूनातिरिक्ते द्वितयं शेषमिष्टाय योजयेत् ।।१५९।।**

---

१. चित्रिणी इति २-३ पु. पा. ।

मेरुतन्त्रे—

चराऽथ कथ्यते मालाऽभिचारे तिथिसङ्ख्यकैः ।
मुक्त्यर्थं पञ्चविंशत्या [1]संतुष्ट्यै सर्वदा जपेत् ॥१६०॥
त्रिंशद्भिर्धर्मवृद्धिः स्याच्चतुष्पञ्चाशतेप्सितम् ।
शतात् सौख्यं तथाऽष्टाभिः शतात् सफलसिद्धयः ॥१६१॥
समस्तसिद्ध्यै रुद्राक्षा मणयो धनदा मताः ।
गतप्राप्तिकरः शङ्खो भोगकृत् स्फाटिको मतः ॥१६२॥
पुत्रप्रदाः पुत्रजीवाः पद्माक्षाः पुष्टिवर्द्धनाः ।
विद्रुमोत्था वश्यकरा मौक्तिका मुक्तिदा मताः ॥१६३॥
पापापहाः कुशमयाः स्वर्णजाः कामदायकाः ।
कामवृद्धिस्तारजातैरिन्द्राक्षैः स्याद्धतं पदम् ॥१६४॥
स्त्रीवश्यार्थं हरिद्राया दार्वी पुरुषवश्यकृत् ।
ज्वरहर्त्री तु लाक्षायाः खड्गस्य पितृतृप्तिकृत् ॥१६५॥
अर्कस्योच्चाटने कार्या श्रीफलैर्ज्ञानसाधने ।
गजदन्तस्य सर्वार्थं मोहने ताम्रजा मता ॥१६६॥
मारणे चायसी प्रोक्ता धनार्थं श्वेतपद्मजा ।
विषोत्तारे चन्दनोत्था शान्तिकृच्छ्वेतकाष्ठजा ॥१६७॥
रक्तचन्दनबीजोत्था यक्षिण्यादिकसाधने ।
पद्मकाष्ठोद्भवा तुष्ट्यै देवदारुभवैर्विरुक् ॥१६८॥
कृष्णकाष्ठसमुद्भूतैस्तामसं कर्म सिद्ध्यति ।
भूतस्तम्भे निम्बजाता जनस्तम्भे समीभवा ॥१६९॥
महानिम्बेन डाकिन्या भूनिम्बैः स्तम्भनं रुजाम् ।
इन्द्रवृक्षाद्व्रणस्तम्भोऽभिचारो वानरास्थितः ॥१७०॥
ऋक्षास्थितो वन्यसिद्धिः शार्दूलात् तस्य देवताः ।
नरास्थ्ना राक्षरता वीरा वश्या हयस्थिभिः ॥१७१॥
रासभास्थ्ना क्षुद्रसिद्धिर्मान्यता तु गजास्थिभिः ।
मृत्तिका[2]भृष्टमणिजा माला शावरसिद्धिदा ॥१७२॥

---

१. ससङ्ख्यैः इति २-३ पु. पा. ।
२. भृष्टं जलोपसेकं विना वालुकाग्निसंयोगेन पक्कम् ।

पुरश्चरणचन्द्रिकायाम्—

रुद्राक्षशङ्खपद्माक्षपुत्रजीवकमौक्तिकैः ।
स्फाटिकैर्मणिरत्नैश्च हेमराजतवैद्रुमैः ॥१७३॥
कुशैः पूर्वोदितैः सर्वैः पर्वभिर्मातृकाक्षरैः ।
गर्दभाश्वनराणां वै दन्तैरप्यभिचारकैः ॥१७४॥
वैष्णवे तुलसी माला गजदन्तैर्गणेश्वरे ।
त्रिपुराया जपे शस्ता इन्द्राक्षै रक्तचन्द्रनैः ॥
महाशङ्खमयी ज्ञेया नीलसारस्वते मनौ ॥१७५॥

त्रिशक्तिरत्नेऽपि—

रहस्यमालया जप्ता तारिणी सिद्धिदा भवेत् ।
अतस्तया प्रजप्तव्या मालया सिद्धिमिच्छता ॥१७६॥
महाशङ्खमयी माला पञ्चाशन्मणिनिर्मिता ।
रहस्यमाला संप्रोक्ता गोपनीया प्रयत्नतः ॥१७७॥
कर्णनेत्रान्तरालस्थो महाशङ्खः प्रकीर्त्तितः ।
तदभावे तु कस्यापि कर्त्तव्याऽवयवस्य वै ॥१७८॥

यामले—

नरेभाश्वोष्ट्रमुण्डानां छिन्नानां रणसंकटे ।
मालां वै कारयेद् वृत्तां महाविद्यासु साधकः ॥१७९॥
तदभावे स्फाटिकी स्यान्माला सर्वसमृद्धिदा ।

वीरतन्त्रे—

रहस्यमालया जप्ता कालिका सर्वसिद्धिदा ॥१८०॥
महाशङ्खास्थिमालोक्ता तारिणीकालिकाविधौ ।
तदभावे स्फाटकी स्यात् तथा पद्माक्षसंभवा ॥१८१॥

तन्त्रे[१]—

स्वयम्भूमालिका देवि भैरव्यां कालिकाविधौ ।
छिन्नमस्ताविधौ देवि महाशङ्खास्थिमालिका ॥१८२॥
बालायां भुवनेश्वर्यां स्फाटिकी परिकीर्त्तिता ।
गुञ्जामाला तु मातङ्ग्या धूम्रायां खरदन्तजा ॥
हरिद्रा बगलायां च कमलाक्षा रमाविधौ ॥१८३॥

---

१. रुद्रयामले इति २ पु. पा. ।

तथा—

पूर्वाम्नाये स्फाटिकजैर्दक्षिणे रुद्रनेत्रजैः ।
प्रवालैर्मौक्तिकैर्देवि पश्चिमाम्नायदैवते ।।१८४।।
उत्तराम्नायदेवीनां महाशङ्खास्थिमालिका ।
ऊर्ध्वाम्नाये स्वयम्भूत्था पाताले रत्नसम्भवा ।।१८५।।
प्रवालैः सूर्यमन्त्रे च मौक्तिकैः शक्तिमात्रके ।
शिवशक्तिमयी माला रौद्राक्षी स्फाटिकी तथा ।।१८६।।
रुद्राक्षस्वर्णसंयुक्तां मालां विद्धि शिवात्मिकाम् ।
सर्वतन्त्रेषु रुद्राक्षाः शक्तिमन्त्रे दिवा न हि ।।१८७।।

यामले—

रुद्राक्षैर्विहिता माला सर्वकामप्रसाधनी ।
निर्मिता शङ्खमालाभिर्धनं कीर्त्तिं च यच्छति ।।१८८।।
पद्माक्षैः पुष्टिलक्ष्मीदा शत्रुनाशकरी तथा ।
पुत्रञ्जीवभवा पुत्रपशुश्रीधान्यऋद्धिदा ।।१८९।।
मुक्ताभी रचिता माला सौभाग्यं विपुलं श्रियम् ।
मन्त्रप्रत्यक्षदा सिद्धिं शान्तिकं चाथ पौष्टिकम् ।।१९०।।
मुक्तिं च तनुते तद्वत् स्फाटिक्यप्यक्षमालिका ।
सारस्वते पद्मरागा पुष्कले च धने तथा ।।१९१।।
सौवर्णी राजती माला सर्वान् कामान् प्रयच्छति ।
सारस्वते प्रवालोत्थां वश्येऽधिकधनागमे ।।१९२।।
पापक्षयकरी कौशी रुद्राक्षादिकुशान्तकैः ।
सर्वैरेतैर्विरचिता माला स्यान्मुक्तये नृणाम् ।।१९३।।
नित्यं जपं प्रकुर्वीत पर्वभिर्वर्णमालिका ।
स्थिरेण मनसा न्यस्ता सर्वान् कामान् प्रयच्छति ।।१९४।।
उच्चाटनेऽश्वदन्तानां माला प्रोक्ताऽश्ववालकैः ।
खरदन्तैरधोभूतैर्मनुष्यस्नायुतन्तुना ।।१९५।।
ग्रथितैर्निर्मिता माला शत्रूणां नाशिते मता ।
प्रेतदन्तैरधोभूतैः कर्त्तव्या जपमालिका ।।१९६।।
साध्यदेहभवैः केशैः प्रोतव्या द्वेषकर्मणि ।
अङ्गुलीजपसंख्यानमेकमेवमुदाहृतम् ।।१९७।।

पुत्रञ्जीवैर्दशगुणैः शतं शङ्खैः सहस्रकम् ।
प्रवालैर्मणिरत्नैश्च दशसाहस्रकं स्मृतम् ।।१९८।।
तदेव स्फादिकं प्रोक्तं मौक्तिकैर्लक्षमुच्यते ।
पद्माक्षैर्दशलक्षं स्याद्राजतैः कोटिरुच्यते ।।१९९।।
सौवर्णैर्द्विगुणा सैव सर्वैः शतगुणा स्मृता ।
कुशग्रन्थ्या च रुद्राक्षैरनन्तगुणितं फलम् ।।२००।।
श्वेतपद्माक्षमालाभिरपि स्यादमितं फलम् ।
मातृकावर्णसंभूतमालयाऽपि तदेव तु ।।२०१।।

मेरुतन्त्रे—

कुशग्रन्थ्या जपेद्विप्रः सुवर्णमणिभिर्नृपः ।
पुत्रञ्जीवैर्जपेद्वैश्यः पद्माक्षैः सर्व एव हि ।।२०२।।
रुद्राक्षस्फाटिकेन्द्राक्षमध्ये किंचिन्न दापयेत् ।
मध्ये दत्वा जपं कुर्वन् काममोक्षौ विनाशयेत् ।।२०३।।

रूद्राक्षप्रभेदकथनपूर्वकं तन्माहात्म्यमाह तत्रैव—

धात्रीफलोपमश्रेष्ठो मध्यो वदरसन्निभः ।
अधमश्चणकाभः स्यात् ततो हीनो विपत्तिकृत् ।।२०४।।
श्वेतरक्तसुवर्णाभकृष्णवर्णा द्विजादितः ।
एतेषु ब्राह्मणः श्रेष्ठो जपमालाकृते भृशम् ।।२०५।।
अलाभे तु द्विजातीनामपि वा स्वस्वजातयः ।
कलौ तु दुर्लभा विद्या यथा विप्राः स्वधर्मगाः ।।२०६।।
अतिस्थूलोऽतिसूक्ष्मश्च स्फुटितो भङ्गुरो लघुः ।
भिन्नः पुराधृतो जीर्णो रुद्राक्षो न शुभप्रदः ।।२०७।।

तथा—

एकवक्त्रैर्द्विवक्त्रैश्चतुर्वक्त्रैश्च पञ्चभिः ।
षड्वक्त्रैर्वाऽथ कर्त्तव्या मिथो मिश्राँस्तु वर्जयेत् ।।२०८।।
एकवक्त्रं शिवस्तस्य माला तु जपतो हरेत् ।
ब्रह्महत्यादिपापानि तथा राज्यादिकेष्टदा ।।२०९।।
उमाशङ्करनामा यो द्विमुखोऽयं व्यपोहति ।
गोहत्यादिकपापानि गार्हस्थाश्रमसौख्यदः ।।२१०।।

त्रिमुखस्त्वग्निरूपः स्यात् स्त्रीहत्यादिकपापहा ।
धर्मार्थकामाः सिध्यन्ति धारणात् तज्जपादपि ।।२११।।
चतुर्मुखो भवेद्ब्रह्मा भ्रूणहत्यादिनाशकः ।
स्फुरन्ति सकला विद्या वाक्सिद्धिश्चापि जायते ।।२१२।।
पञ्चवक्त्रः शिवः साक्षात् सर्वपापहरः स्मृतः ।
शैवगाणेशशाक्तानां द्रुतं सिद्धिस्तु तज्जपात् ।।२१३।।
कार्त्तिकेयस्तु षड्वक्त्रः स्खलितव्रतपापहा ।
विधिना दक्षिणे बाहौ धारणात् समरे जयः ।।२१४।।
सप्तवक्त्रो महानागोऽनन्तो नामाथ तज्जपात् ।
अनन्ता सिद्धयः सर्पविषभश्च न जायते ।।२१५।।
अष्टवक्त्रो गणेशः स्यात् सर्वविघ्ननिवारकः ।
नश्यन्ति तज्जपात् सर्वे कामक्रोधादिशत्रवः ।।२१६।।
नववक्त्रो भैरवः स्याद्वाममार्गस्थदेवताः ।
जपादेव प्रसीदन्ति वामबाहौ स्थितौघहा ।।२१७।।
जनार्दनो दशमुखो जपान्नश्यन्ति धारणात् ।
पिशाचग्रहवेतालब्रह्मराक्षसपन्नगाः ।।२१८।।
एकादशमुखः साक्षाद्रुद्र एवास्य धारणात् ।
जपाच्च हयमेधादियज्ञानां फलभाग्भवेत् ।।२१९।।
द्वादशास्यो भास्करः स्यात् तज्जपाद्धारणात् तथा ।
तेजस्वी च प्रतापी च गोमेधफलभाग्भवेत् ।।२२०।।
त्रयोदशमुखः साक्षाद्विश्वेदेवात्मकः स्मृतः ।
श्राद्धकाले धृतो दद्यात् पितृणामक्षयां गतिम् ।।२२१।।
चतुर्दशमुखे जप्तं तदाऽन्ताय जायते ।
पूज्यते देवमनुजैरक्षयां लभते गतिम् ।।२२२।।

तथा—

देवान् पुष्णन्ति ये देवा पशवस्ते तु वैदिकाः ।
तान् पातयन्ति ये कौले तेषां शास्ता स्वयं यमः ।।२२३।।
तेषां संरक्षणार्थाय नान्यो रुद्राक्षतो भुवि ।
रुद्राज्ञाः सर्वदेवानां मन्त्रसिद्धिविधायकाः ।।२२४।।

रुद्राक्षं कण्ठमाश्रित्य शुनको म्रियते यदि ।
सोऽपि रुद्रत्वमाप्नोति किं पुनर्मानुषादयः ।।२२५।।
उच्छिष्टो वा विकर्मस्तो युक्तो वा सर्वपातकैः ।
मुच्यते सर्वपापेभ्यो नरो रुद्राक्षधारणात् ।।२२६।।
रुद्राक्षमालिकां कण्ठे धारयेद्भक्तिवर्जितः ।
पापकर्माऽपि यो नित्यं रुद्रलोके महीयते ।।२२७।।
अरुद्राक्षधरो भूत्वा यत्किञ्चि कर्मवैदिकम् ।
कुर्याद् विप्रस्तु यो मौढ्यान्नासावाप्नोति तत्फलम् ।।२२८।।

रुद्राक्षधारणप्रकारस्तत्रैव—

शिरोमाला तु षड्विंशद्द्वात्रिंशत्कण्ठमालिका ।
कुर्परे षोडश प्रोक्ता द्वात्रिंशन्मणिबन्धयोः ।।२२९।।
अष्टोत्तरशतैर्युक्तमुपवीतं विधीयते ।
तदर्धमुरसो माला शिखायामेकमुच्यते ।।२३०।।
कर्णयोश्चापि षट्संख्या धारणक्रम ईरितः ।
संख्याहीनं न कर्त्तव्यमधिकं नैव दूष्यति ।।२३१।।

तन्त्रान्तरे—

रुद्राक्षान् कण्ठदेशे दशनपरिमितान् मस्तके विंशती द्वे
षट् षट् कर्णप्रदेशे करयुगलकृते द्वादश द्वादशैव ।
बाह्वोरिन्दोः कलाभिर्नयनयुगकृते चैकमेकं शिखायाम्
वक्षस्यष्टाधिकं यः कलयति शतकं स स्वयं नीलकण्ठः ।।२३२।।
रुद्राक्षान् धारयत्येवं देहान्ते स शिवो भवेत् ।
बहुलं लभते पुण्यं भाग्यवानिह जायते ।।२३३।।
स्नाने दाने जपे होमे वैश्वदेवे सुरार्चने ।
प्रायश्चित्ते तथा श्राद्धे दीक्षाकाले विशेषतः ।।२३४।।
रुद्राक्षधारी भूत्वा च यत्किंचित् कर्म वैदिकम् ।
यो विप्रः सततं कुर्यात् तत् कर्म सफलं भवेत् ।।२३५।।
कण्ठे शिरसि हस्ते च कर्णयोरुपवीतके ।
रुद्राक्षधारणादेव रुद्रो भवति मानवः ।।२३६।।

खादन्मांसं पिबन्मद्यं संगच्छन्मर्त्यजातिषु ।
सद्यो भवति पूतात्मा रुद्राक्षं मूर्ध्नि धारयन् ।।२३७।।

देवताभेदेन मालाग्रथनकालभेद उक्तस्तत्रैव—

चतुर्थ्यां प्रोतयेन्मालां गणनाथस्य मन्त्रकैः ।
मध्याह्नेर्कस्य सप्तम्यां रवौ वातस्य मन्त्रकैः ।।२३८।।
द्वादश्यां वैष्णवी माला प्रोतव्या विष्णुमन्त्रतः ।
त्रयोदश्यां तु सन्ध्यायां तन्मन्त्रैः शिवमालिकाम् ।।२३९।।
अष्टम्यां वा चतुर्दश्यां नवम्यां भूमिनन्दने ।
शक्तीनामपि कर्त्तव्या भुक्त्वा रात्रौ यथाविधि ।।२४०।।

सूत्रभेदा उक्तास्तात्रैव—

ग्रथिता पट्टसूत्रेण देव्याः प्रीत्यै तु मालिका ।
कार्पासैर्वैष्णवी माला पद्मसूत्रैरथापि वा ।।२४१।।
ऊर्णाभिर्वा वल्कलैर्वा शैवी कार्या ससूत्रजा ।
प्रायशः सर्वदेवानां सूत्रोत्पत्तिविधिं शृणु ।।२४२।।
सूत्रं द्विजेन्द्रपण्यस्त्रीनिर्मितं ग्रन्थिवर्जितम् ।
त्रिगुणं त्रिगुणीकृत्य ग्राह्यं प्रक्षाल्य यत्नतः ।।२४३।।

उमामहेश्वरे—

या जीवत्पुत्रका नारी सुन्दरी पतिवत्सला ।
तया कर्त्तितसूत्रेण व्यूढा माला सुभावहा ।।२४४।।

तन्त्रान्तरे—

कन्याकर्त्तितसूत्रेण दुर्वर्णस्वर्णजैरपि ।।२४५।।

दुर्वर्णं रजतम् ।

मालाग्रथनप्रकारस्तत्संस्कारश्च पुरश्चरणचन्द्रिकायाम् —

अथातो ग्रथनं वक्ष्ये मालानां तन्त्रबोधितम् ।
एकभुक्तं विधायादौ साधको ग्रथयेत् स्वयम् ।।२४६।।
स्वयं च माला ग्रथिता स्वघृष्टं
न धार्यते चन्दनमित्यनेन ।
निषिध्यते चन्दनसन्निधानात् ।
स्त्रगत्र पुष्पस्य न चाक्षमाला ।।२४७।।

कृतनित्यक्रियाशुद्धः उक्तेष्वृक्षेषु मन्त्रवित् ।
यथाकामं यथालाभादक्ष्याण्यानीय यत्नतः ।।२४८।।
अन्योन्यसमरूपाणि नातिस्थूलकृशानि च ।
कीटादिभिरदुष्टानि न जीर्णानि नवानि वै ।।२४९।।
गव्यैस्तु पञ्चभिस्तानि प्रक्षाल्य च पृथक् पृथक् ।

पञ्चगव्येषु विशेष उक्तो मेरुतन्त्रे—

दुग्धकाञ्चनवर्णायाः श्वेतायाश्चैव गोमयम् ।
गोमूत्रं ताम्रवर्णाया नीलायाश्च भवद्देधि ।।२५०।।
घृतं तु कृष्ण वर्णाया एवं पञ्चामृतेऽपि च ।
गवां वर्णास्तु सुलभाः सन्ति देशेषु कुत्रचित् ।।२५१।।
तत्र वर्णविभागेन पञ्चगव्यानि चाहरेत् ।
वर्णालाभेन दोषोऽस्ति मात्राहीनं तु वर्जयेत् ।।२५२।।
गोसकृद्विगुणं मूत्रं सर्पिर्दद्याच्चतुर्गुणम् ।
क्षीरमष्टगुणं प्रोक्तं पञ्चगव्यं तथा दधि ।।२५३।।
गायत्र्याऽऽदाय गोमूत्रं गन्धद्वारेति गोमयम् ।
[1]आप्यायस्वेति च क्षीर [2]दधि क्राव्णोति वै दधि ।।२५४।।
[3]तेजोऽसि शुक्रमित्याज्यं [4]देवस्य त्वा कुशोदकम् ।
क्षालयेत् पञ्चगव्याद्यै ... ... ...।।२५५।। इति ।

पुरश्चरणचन्द्रिकायाम्—

अश्वत्थपत्रैर्नवकैः पद्माकारेण कल्पिते ।
सूत्रे मणीव सगन्धाशिक्षालिताँस्तत्र निःक्षिपेत् ।।२५६।।
तार शक्तिं मातृकाश्च सूत्रे चैव मणिष्वथ ।
विन्यस्य पूजयेदाज्यैर्जुहुयाच्चैव शक्तितः ।।२५७।।
मालामेकैकमादाय सूत्रे वै योजयेत् सुधीः ।
मुखं मुखे तु संयोज्य पुच्छं पुच्छे तु योजयेत ।।२५८।।

१. वाजसनेयिसंहितायाम् १२ अ० ११४ मन्त्रः ।
२. वाजसनेयिसंहितायाम् २३ अ० ३२ मन्त्रः ।
३. वाजसनेयिसंहितायाम् २२ अ० १ मन्त्रः ।
४. वाजसनेयिसंहितायाम् १ अ० १० मन्त्रः ।

गोपुच्छसदृशी कार्य यद्वा सर्पाकृतिः शुभा ।
तत्सजातीयमेकाक्षं मेरुत्वेनाग्रतो न्यसेत् ।।२५९।।

मेरुतन्त्रे—

एको मेरुस्तत्र देयः सर्वेभ्यः स्थौल्ययुक् च यः ।
आद्य स्थूल ततस्तस्मान्न्यूनं न्यूनतरं ततः ।।२६०।।
सर्पाकारां प्रकुर्वीत ब्रह्मग्रन्थिमणिं प्रति ।
अथ वा ग्रन्थिरहितं दृढरश्मिसमन्वितम् ।।२६१।।
त्रिरावृत्त्याऽथ मध्येन चार्धावृत्त्याऽन्तदेशतः ।
ग्रन्थिः प्रदक्षिणावर्त्तः स ब्रह्मग्रन्थिरुच्यते ।।२६२।।
अन्योन्यघर्षणादेव जपहानिर्भवेद्ध्रुवम् ।
मध्यतो ग्रन्थयः कार्या नात्र मुक्तादि विन्यसेत् ।।२६३।।

पुरश्चरणचन्द्रिकायाम्—

एकैकमणिमध्ये तु ब्रह्मग्रन्थिं प्रकल्पयेत् ।
जपमालां विधायेत्थं ततः संस्कारमाचरेत् ।।२६४।।
क्षालयेत् पञ्चगव्येन सद्योजातेन सज्जलैः ।
ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमः ।।२६५।।
भवे भवे नाति भवे भवस्व मां भवोद्भवाय नमः ।
चन्दनागुरुगन्धाद्यैर्वामदेवेन घर्षयेत् ।।२६६।।

ॐ वामदेवाय नम ॐ कलविकरणाय नमः
ॐ ज्येष्ठाय नमः ॐ बलप्रमथनाय नमः
ॐ श्रेष्ठाय नमः ॐ सर्वभूतदमनाय नमः
ॐ रुद्राय नमः ॐ मनोन्मनाय नमः
ॐ कालाय नमः

धूपयेत् तामघोरेण—

ॐ अघारेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वतः संर्व-
सर्वेभ्यो नमस्ते रुद्ररूपेभ्यः सर्वतः सर्वसर्वेभ्यः ।
लेपयेत् तत्पुरुषेण तु ।
ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रःप्रचोदयात् ।
मन्त्रेयत् पञ्चमेनैव प्रत्येकं तु शतं शतम् ।।

ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्माशिषो मेऽस्तु सदा शिवोम् ।

मेरुश्च पञ्चमेनैव ततो मन्त्रेण मन्त्रयेत् ।
संस्कृत्यैवं बुधो मालां तत्प्राणाँ स्थापयेत् ततः ।।२६७।।

क्रियासंग्रहे—

मन्त्रयेन्मूलमन्त्रेण क्रमेणोत्क्रमयोगतः ।
तथैव मात्रिकावर्णैर्मन्त्रयेन्मन्त्रतत्त्ववित् ।।२६८।।
पूजयित्वा यथान्यायमिष्टदेवमनुक्रमात् ।
न्यासपूर्वं जपेन्मन्त्रमष्टोत्तरसहस्रकम् ।।
जुहुयाच्च दशांशेन यस्य देवस्य यत् प्रियम् ।।२६९।।

योगिनीतन्त्रे—

होमकर्म ततः कुर्याद्देवताभावसिद्धये ।
अष्टोत्तरशतं हुत्वा संपाताज्यं विनिःक्षिपेत् ।।२७०।।
होमकर्मण्यशक्तश्चेद् द्विगुणं जपमाचरेत् ।
त्वं माले सर्वलोकानां सर्वसिद्धिप्रदा मता ।।२७१।।
तेन सत्येन मे सिद्धिं देहि मातर्नमोऽस्तु ते ।
इत्युक्त्वा परिपूज्याथ गोपयेद्यत्नतो गृही ।।२७२।।

यामले तु—

माले माले महामाले सर्वतत्त्वस्वरूपिणि ।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ।।२७३।।
मायाबीजादिकं कृत्वा रक्तपुष्पैः समर्चयेत्।

पुरश्चरणचन्द्रिकायाम्—

एवं कृत्वाऽक्षमालायां जपेन्मातृकया सुधीः ।।२७४।।
मातृकावर्णभेदेभ्यः सर्वतन्त्राः प्रजज्ञिरे ।
अतः सकलमन्त्राणां जपः कार्योऽनया स्रजा ।।२७५।।
गुरुं संपूज्य तद्धस्तादगृह्णीयात् सर्वसिद्धये ।
गायत्रीं तु जपन् कश्चिन्मालां ग्रथ्नाति तान्त्रिकः ।।२७६।।
न हीत्थं ग्रथनं क्वापि मन्त्रशास्त्रे निरूपितम् ।
अशुचिर्न स्पृशेदेनां करभ्रष्टां न कारयेत् ।।२७७।।

मेरुतन्त्रे—

येन मन्त्रेण या माला कृता तं तु जपेत् तया ।
अन्यमन्त्रजपाच्छापो देवतायाः प्रजायते ।।२७८।।
दृढसूत्रं नियुञ्जीत जपे त्रुट्यति नो यथा ।
जीर्णे सूत्रे पुनः सूत्रं ग्रन्थयित्वा शतं जपेत् ।।२७९।।

पुरश्चरणचन्द्रिकायाम्—

प्रमादात् पतिते हस्ताच्छतमष्टोत्तरं जपेत् ।
तावन्निषिद्धं संस्पर्शे क्षालयित्वा यथोदितम् ।।२८०।।

मेरुतन्त्रे—

तर्जन्या न स्पृशेत् सूत्रं कम्पयेन्नैव धूपयेत् ।
न स्पृशेद्वामहस्तेन करभ्रष्टां न कारयेत् ।।२८१।।
अक्षाणां चालनेऽङ्गुष्ठश्चान्यमक्षं न संस्पृशेत् ।
जपकाले सदा विद्वान्मेरुं चैव न लङ्घयेत् ।।२८२।।
परिवर्त्तनकाले तु संघट्टं नैव कारयेत् ।
कलिः खटखटाशब्दे दोलमाने चलेन्मतिः ।।२८३।।
चलिते चैव विद्वेषः स्फुटिते व्याधिसम्भवः ।
हस्तच्युते महाविघ्नः सूत्रच्छेदे विनाशकृत् ।।२८४।।

क्रियासंग्रहे—

छिन्ने सूत्रे तु मालायाः पुनः संस्कारमाचरेत् ।
अष्टोत्तरसहस्रं तु जपेद्वाऽष्टोत्तरं शतम् ।।२८५।।

शैवागमे—

यदा संत्रुट्यते माला ग्रन्थयित्वा च पूर्ववत् ।
प्रतिष्ठितायां तस्यां तु मन्त्रं जप्यादनन्यधीः ।।२८६।।

अन्यत्रापि—

त्रुटिता चेत् स्वयं माला प्रायश्चित्तं समाचरेत् ।
गजान्तकसहस्रं तु जपहोमं समाचरेत् ।।२८७।।
पुनः संग्रथनं कृत्वा प्राणस्थापनपूर्वकम् ।
तदा माला सिद्धिदा स्यान्नान्यथा शाङ्करं वचः ।।२८८।।

अग्निदग्धे जपेल्लक्षं नष्टे भग्ने द्विलक्षकम् ।
चौरनीते षट्सहस्रं पतिते तु शतं जपेत् ।।२८९।।

पुरश्चरणचन्द्रिकायाम्—

अङ्गुष्ठस्थामक्षमालां चायलेन्मध्यमाग्रतः ।
तर्जन्या न स्पृशेत् सोऽयं मुक्तिदो गणनक्रमः ।।२९०।।
भुक्तौ मुक्तौ तथा हृष्टौ मध्यमायां जपेत् सुधीः ।
अङ्गुष्ठानामिकाभ्यां तु जपेदुत्तमकर्मणि ।।२९१।।
तर्जन्यङ्गुष्ठसंयोगाद्विद्वेषोच्चाटने जपः ।
कनिष्ठाङ्गुष्ठसंयोगाज्जपेन्मारणकर्मणि ।।२९२।।
अन्यकाले इमां मालां पूजयित्वा तु गोपयेत् ।
मूलं प्रकाशयेद्विद्वान्न तन्मन्त्रं कदाचन ।।२९३।।
अक्षमालां च मुद्रां च गुरोरपि न दर्शयेत् ।
भूतराक्षसवेतालाः सिद्धगन्धर्वचारणाः ।।२९४।।
हरन्ति प्रकटं यस्मात् तस्माद्गुप्तं जपेत् सुधीः ।

अथ स्त्रीशूद्राणां मालासंस्कारः मेरुतन्त्रे—

शूद्रार्थं वा स्त्रियामर्थे मालासंस्कार उच्यते ।।२९५।।
गणेशसूर्यविष्ण्वीशदुर्गाः संपूज्य भक्तितः ।
मालायामथ तां मालां ह्सौँ बीजेनाभिमन्त्रिताम् ।।२९६।।
अष्टोत्तरशतं पञ्चगव्ये तां स्थापयेत् त्र्यहम् ।
चतुर्थे तु समुद्धृत्य क्षालयेदस्त्रमन्त्रतः ।।२९७।।
हृन्मन्त्रेण ग्रन्थयित्वा स्थण्डिले तां निधापयेत् ।
तस्मादुत्तोल्य तां मालां स्थापयेद्धेमपात्रके ।।२९८।।
पञ्चामृतेन संस्नाप्य शीतलेन जलेन च ।
चन्दनेन सुगन्धेन कस्तूरीकुङ्कुमादिभिः ।।२९९।।
अभिषेकं ततः कुर्याद्ध्सौँ मन्त्रेण साधकः ।
नव ग्रहान् पूजयित्वा दिक्पालाँश्चापि पूजयेत् ।।३००।।

अत्रापि मातृकावर्णैर्मूलमन्त्रेण च मालामभिमन्त्र्य तस्यां प्राणप्रतिष्ठापूर्वकमिष्टदेवतार्चनं पूर्ववत् कार्यमिति संप्रदायविदः ।

तथा—

तिलेन घृतयुक्तेन शक्तितो होमयेत् ततः ।
स्वर्णं तु दक्षिणां दद्याद्गुरवे मणिसंख्यकाम् ।।३०१।।
तन्मन्त्रजापिनो विप्रान् भोजयेद्वाऽथ वैदिकान् ।
अभावे स्वर्णपात्रस्य ग्राह्यमश्वत्थपत्रकम् ।।३०२।।
मालासंस्कार इत्युक्तो जपे स्यात् सिद्धिदायकः ।

अथ वाममार्गिणां मालासंस्कारस्तत्रैव—

कीकशादिकमालानां कौलिकानां च वामिनाम् ।।३०३।।
सिद्ध्यै वक्ष्यामि संस्कारं सर्वतन्त्रेषु गोपितम् ।
शिल्पिनं पूजयेदादौ वस्त्रगन्धानुलेपनैः ।।३०४।।
संहृष्टः कलयेन्मालां मन्त्रपूतं पिबेन्मधु ।
पञ्चाशन्मणिभिः कार्या ऋतुमत्या भगे क्षिपेत् ।।३०५।।
निशामेकां समुद्धृत्य कारणैः क्षालयेत् ततः ।
शुद्धोदैर्मूलमन्त्रेणाभिषिञ्चेद्विजयारसैः ।।३०६।।
प्रक्षाल्य धूपयेत् पश्चात् प्रोतयेदिष्टसूत्रकैः ।
सूत्रं स्वेष्टजपे नीलं कृष्णां मारणकर्मणि ।।३०७।।
मोहने हरितं स्तम्भे धूमाभं द्विषि तालभम् ।
शान्तौ पुष्टौ सितं द्वेषे रक्तमुच्चाटने भवेत् ।।३०८।।
वश्ये पीतं कषायं तु विक्षेपकरणे मतम् ।
चक्रपूजां ततः कुर्यात् साष्टोत्तरसहस्रकम् ।।३०९।।
हुनेन्मद्यपलाभ्यां च मूलमन्त्रेण साधकः ।
ततो वलिं यथान्यायं महिषादेः प्रदापयेत् ।।३१०।।
शक्तिश्च साधकाश्चाँपि भोजयेन्मणिसंख्यकान् ।
एवं संसाधितां मालां पशवे न प्रदापयेत् ।।३११।।

अथ करमाला बालातन्त्रे—

तर्जनी मध्यमाऽनामा कनिष्ठा चेति ताः क्रमात् ।
तिस्रोऽङ्गुल्यस्त्रिपर्वाणो मध्यमा चैकपर्विका ।।
पर्वद्वयं मध्यमाया मेरुत्वेनोपकल्पयेत् ।।३१२।।

तन्त्रान्तरे —

अनामामध्यमारभ्य कनिष्ठानुक्रमेण च ।
तर्जनीमूलपर्यन्ता करमाला प्रकीर्त्तिता ।।३१३।।

सनत्कुमारोऽपि—

**अनामामध्यमारभ्य कनिष्ठादित एव च ।**
**तर्जनीमूलपर्यन्तं जपेद् दशसु पर्वसु ।।३१४।।**
**अनामामूलमारभ्य कनिष्टादित एव च ।**
**तर्जनीमध्यपर्यन्तमष्टपर्वसु संजपेत् ।।३१५।।**

अयमुत्तरः श्लोकश्चाष्टोत्तरशतसंख्यजपे कर्त्तव्ये शतजपोत्तरमष्टजपपरः । इदं च वैष्णवविषयकम् । शक्तिविषये तु—

**आरभ्यानामिकामूलात् प्रादक्षिण्यक्रमेण तु ।**
**मध्यमामूलपर्यन्तं जपेदष्टसु पर्वसु ।।३१६।।**
**अनामामध्यमं पर्व मेरुं कृत्वा न लङ्घयेत् ।**
**तर्जन्यग्रे तथा मध्ये यो जपेत् तत्र मानवः ।।**
**चत्वारि तस्य नश्यन्ति आयुर्विद्या यशो धनम् ।।३१७।।**

इति सिद्धान्तसारे प्रोक्तम् । तत्रैव—

**अनामामूलमारभ्य प्रादक्षिण्यक्रमेण तु ।**
**तर्जनीमूलपर्यन्तं जपेन्नवसु पर्वसु ।।३१८।।**

इदं च द्वादशावृत्त्याऽष्टोत्तरशतसंख्यजपपरम् । श्रीविद्यायां तु यामले—

**अनामामध्यमायाश्च मूलाग्रं तु द्वयं द्वयम् ।**
**कनिष्ठायाश्च तर्जन्यास्त्रयं पर्व महेश्वरि ।।३१९।।**
**अनामामध्यमायाश्च मेरुः स्याद् द्वितयं शुभम् ।**
**प्रदक्षिणक्रमाद्देवि जपेत् त्रिपुरसुन्दरीम् ।।३२०।।** इति विशेष उक्तः ।

मेरुतन्त्रे—

**अङ्गुलीर्न वियुञ्जीत जपकाले कदाचन ।**
**अङ्गुलीनां वियोगेन च्छिद्रेषु स्रवते जपः ।।३२१।।**
**नोल्लङ्घयेच्च गणनां किंचित् संकोचयेत् तलम् ।**
**न दर्शयेत करं नो चेत् फलं गृह्णन्ति राक्षसाः ।।३२२।।**

पुरश्चरणचन्द्रिकायाम्—

**अङ्गुल्यग्रेषु यज्जप्तं यज्जप्तं मेरुलङ्घने ।**
**पर्वसन्धिषु यज्जप्तं तत्सर्वं निष्फलं भवेत् ।।३२३।।**

गणनाविधिमुल्लङ्घ्य यो जपेत् तु प्रमादतः ।
गृह्णन्ति राक्षसा यस्मान्नियतं गणयेद् बुधः ।।३२४।।

रुद्रयामले—

नाक्षतैर्हस्तपर्वैर्वा न धान्यैर्नैव पुष्पकैः ।
न चन्दनैर्मृत्तिकया जपसंख्यां न कारयेत् ।।३२५।।
लाक्षाकुसितसिन्दूरं गोमयं च करीषकम् ।
विलोड्य गुडिकां कृत्वा जपसंख्यां तु कारयेत् ।।३२६।।

मन्त्रतन्त्रप्रकाशे—

तत्राङ्गुलिजपं कुर्वन् साङ्गुष्ठाङ्गुलिभिर्जपेत् ।
अङ्गुष्ठेन विना कर्म कृतं तन्निष्फलं भवेत् ।।३२७।।

मुण्डमालायाम्—

नित्यं जपं करे कुर्यान्न तु काम्यं कदाचन ।
काम्यमपि करे कुर्याद्यदि माला न विद्यते ।।३२८।।

अथ मुद्राप्रकरणम्

तत्र मुद्रापदार्थ उक्तः कुलार्णवे—

मेरुतन्त्रेऽपि—

मुदं कुर्वन्ति देवाय ममांसिद्रावयन्ति च ।
तस्मान्मुद्रा इति ख्याता दर्शितव्या कुलेश्वरि ।।३२९।।
मुदं स्वरूपलाभाभ्यां देहद्वारेण चात्मनः ।
या अर्पयन्त्ययत्नेन मुद्रास्ताः शक्तयो मताः ।।३३०।।
मोदयन्ति ग्रहादिभ्यः पापौघं द्रावयन्ति च ।
मोदनं द्रावणं यस्मादतो मुद्राः प्रकीर्त्तिताः ।।३३१।।

यामले—

मोदनात् सर्वदेवानां द्रावणात् पापसन्ततेः ।
तस्मान्मुद्रेयमाख्याता सर्वकर्मार्थसाधिनी ।।३३२।।
अथ मुद्राः प्रवक्ष्यामि सर्वतन्त्रेषु गोपिताः ।
याभिर्विरचिताभिश्च मोदन्ते मन्त्रदेवताः ।।३३३।।
अर्चयेज्जपकाले च ध्याने काम्ये च कर्मणि ।
स्नाने चावाहने शङ्खे प्रतिष्ठायां च रक्षणे ।।३३४।।

नैवेद्ये च तथाऽन्यत्र तत्तत्कल्पप्रकाशिते ।
स्थाने मुद्रा दर्शितव्याः स्वस्वलक्षणलक्षिताः ।।३३५।।
आवाहनादिका मुद्रा नव साधारणा मताः ।
तथा षडङ्गमुद्राश्च सर्वमन्त्रेषु योजयेत् ।।३३६।।
एकोनविंशतिर्मुद्रा विष्णोरुक्ता मनीषिभिः ।
शङ्खचक्रगदापद्मवेणुश्रीवत्सकौस्तुभाः ।।३३७।।
वनमाला तथा ज्ञानमुद्रा विल्वाह्वया तथा ।
गरुडाख्या तथा मुद्रा विष्णोः सन्तोषवर्धिनी ।।३३८।।
नारसिंही च वाराही हयग्रीवी धनुस्तथा ।
वाणमुद्रा ततः पर्शुर्जगन्मोहनिका तथा ।।३३९।।
काममुद्रा परा ख्याता शिवस्य दश मुद्रिकाः ।
लिङ्गयोनित्रिशूलाख्या मालेष्टाभीमृगात्मिकाः ।।३४०।।
खट्वाङ्गा च कपालाख्या डमरुः शिवतोषकः ।
सूर्यस्य चैव पद्माख्या सप्त मुद्रा गणेशितुः ।।३४१।।
दन्तपाशाङ्कुशा विघ्नपर्शुलड्डुकसंज्ञकाः ।
बीजपूराह्वया मुद्राः विज्ञेया विघ्नपार्चने ।।३४२।।
पाशाङ्कुशवराभीतिखङ्गचक्रधनुःशराः ।
मौशली मुद्रिका दौर्गी मुद्राः शक्तेः प्रियङ्कराः ।।३४३।।
लक्ष्मीमुद्राऽर्चने लक्ष्मीवाग्वादिन्यास्तु पूजने ।
अक्षमाला तथावीणा व्याख्या पुरस्तकमुद्रिका ।।३४४।।
सप्तजिह्वाह्वया मुद्रा विज्ञेया वह्निपूजने ।
मत्स्यमुद्रा च कूर्माख्या लेलिहा मुण्डसंज्ञका ।।३४५।।
महायोनिरिति ख्याता सर्वसिद्धिसमृद्धिदा ।
शक्त्यर्चने महायोनिः श्यामादौ मुण्डमुद्रिका ।।३४६।।
मत्स्यकूर्माख्यलेलिहाः सर्वसाधारणे मताः ।
दशेमा मुद्रिका ज्ञेयास्त्रिपुरायाः प्रपूजने ।।३४७।।
संक्षोभद्रावणाकर्षवश्योन्मादमहाङ्कुशाः ।
खेचरी बीजयोन्याख्या त्रिखण्डा परिकीर्त्तिता ।।३४८।।

कुम्भमुद्राऽभिषेके स्यात् पद्ममुद्राऽऽसने तथा ।
कालकर्णी प्रयोक्तव्या विघ्नप्रशमकर्मणि ।।३४९।।
गालिनी च प्रयोक्तव्या जलशोधनकर्मणि ।
श्रीगोपालार्चने वेणुर्नृहरेर्नारसिंहिका ।।३५०।।
वराहस्य च पूजायां वाराहास्यां प्रदर्शयेत् ।
रामार्चने धनुर्बाणमुद्रे पर्शुस्तथाऽर्चने ।।३५१।।
पर्शुरामस्य विज्ञेया जगन्मोहनसंज्ञका ।
वासुदेवाह्वया ध्याने कुम्भमुद्राऽनुरक्षणे ।।३५२।।
सर्वत्र प्रार्थने चैव प्रार्थनाख्यां प्रयोजयेत् ।
उद्देशानुक्रमादासामुच्यन्ते लक्षणानि च ।।३५३।।

आवाहनादिका मुद्रा मातृकान्यासमुद्राश्च प्रागुक्तास्तदन्या इहोच्यन्ते । तत्रैव—

अङ्गुष्ठा ऋजवो हस्तशाखा
भवेन्मुद्रा हृदये शीर्षके च ।
अधोऽङ्गुष्ठा खलु मुष्टिः शिखायां
करद्वन्द्वाङ्गुलयो वर्मणि स्युः ।।३५४।।
नाराचमुष्टिर्धृतबाहुयुग्म-
काङ्गुष्ठतर्जन्युदितो ध्वनिस्तु ।
विष्वग्विभक्तः कथितास्तु मुद्रा
यत्राक्षिणी तर्जनिमध्यमे स्तः ।।३५५।।
नेत्रत्रयं तत्र भवेदनामा
षडङ्गमुद्राः कथिता यथावत् ।।३५६।।
वैष्णवीनां तु मुद्राणां कथ्यन्ते लक्षणान्यथ ।
वामाङ्गुष्ठं तु संगृह्य दक्षिणेन तु मुष्टिना ।।३५७।।
कृत्वोत्तानं ततो मुष्टिमङ्गुष्ठस्तुप्रसारयेत् ।
वमाङ्गुल्यस्तथाऽऽश्लिष्टाः संयुक्ताः संप्रसारिताः ।।३५८।।
दक्षिणाङ्गुष्ठसंसृष्टा मुद्रैषा शङ्खसंज्ञिका ।
हस्तौ तु संमुखौ कृत्वा संलग्नौ सुप्रसारितौ ।।३५९।।
कनिष्ठाङ्गुष्ठकौ लग्नौ मुद्रैषा चक्रसंज्ञका ।
अन्योन्याभिमुखौ हस्तौ कृत्वा तु ग्रथिताङ्गुली ।।३६०।।

अङ्गुल्यौ मध्यमे भूयः संलग्ने सुप्रसारिते ।
गदा मुद्रेयमाख्याता विष्णोः सन्तोषवर्धिनी ।।३६१।।
हस्तौ तु संमुखौ कृत्वा संनतावुन्नताङ्गुली ।
तलान्तर्निलिताङ्गुष्ठौ कृत्वैषा पद्ममुद्रिका ।।३६२।।
ओष्ठे वामकराङ्गुष्ठो लग्नस्तस्य कनिष्ठिका ।
दक्षिणाङ्गुष्ठसंयोगात् कनिष्ठा सुप्रसारिता ।।३६३।।
तर्जनीमध्यमानायाः किंचित् संकोच्य चालिताः।
वेणुमुद्रा भवेदेषा सुगुप्ता प्रेयसी हरेः ।।३६४।।
अन्योन्यस्पृष्टकरयोर्मध्यमानामिकाङ्गुलीः ।
अङ्गुष्टेन तु बध्नीयात् कनिष्ठामूलसंस्थिते ।।३६५।।
तर्जन्यौ कारयेदेषा मुद्रा श्रीवत्ससंज्ञका ।
अनामापृष्ठसंलग्नां दक्षिणस्य कनिष्ठिकाम् ।।३६६।।
कनिष्ठयाऽन्यया बद्ध्वा तर्जन्या दक्षया तथा ।
वामानामां च बध्नीयाद्दक्षिणाङ्गुष्ठमूलके ।।३६७।।
अङ्गुष्ठमध्यमे वामे संयोज्य सरलाः पराः ।
चतस्रोऽप्यग्रसंलग्ना मुद्रा कौस्तुभसंज्ञका ।।३६८।।
स्पृशेत् कण्ठादिपादान्तं तर्जन्यङ्गुष्ठया तथा ।
करद्वयेन माला चेन्मुद्रेयं वनमालिका ।।३६९।।
तर्जन्यङ्गुष्ठकौ शक्तावग्रतो हृदि विन्यसेत् ।
वामहस्ताम्बुजं वामजानुं मूर्ध्नि प्रविन्यसेत् ।।३७०।।
ज्ञानमुद्रा भवेदेषा रामचन्द्रस्य प्रेयसी ।
अङ्गुष्ठं वाममुद्दण्डितमितरकराङ्गुष्ठकेनाथ बद्धा
तस्याग्रं पीडयित्वाऽङ्गुलिभिरपि च ता वामहस्ताङ्गुलीभिः ।
बद्ध्वा गाढं हृदि स्थापयतु विमलधीर्व्याहरन्मारबीजं
विल्वाख्या मुद्रिकैषा स्फुटमिह कथिता गोपनीया विधिज्ञैः ।।३७१।।
हस्तौ तु विमुखौ कृत्वा ग्रन्थयित्वा कनिष्ठिके ।
मिथस्तर्जनिके श्लिष्टावङ्गुष्ठकौ तथा ।।३७२।।
मध्यमे नामिके द्वे तु द्वौ पक्षाविव चालयेत् ।
एषा गरुडमुद्राख्या विष्णोः सन्तोषवर्धिनी ।।३७३।।

जानुमध्ये करौ कृत्वा चिबुकौष्ठौ समावृतौ ।
हस्तौ च भूमिसंलग्नौ कम्पमानः पुनः पुनः ।।३७४।।
मुखं विवृतकं कुर्याल्लेलिहानश्च जिह्विकाम् ।
नारसिंही भवेदेषा मुद्रा तत्प्रीतिवर्धिनी ।।३७५।।
अङ्गुष्ठाभ्यां च करयोरथाक्रम्य कनिष्ठिके ।
अधोमुखीभिः सर्वाभिर्मुद्रेयं नृहरेर्मता ।।३७६।।
देवोपरि करं वामं कृत्वोत्तानमधः सुधीः ।
नामयेदिति संप्रोक्ता मुद्रा वाराहसंज्ञिका ।।३७७।।
दक्षहस्तं चोर्ध्वमुखं वामहस्तमधो मुखम् ।
अङ्गुल्यग्रं तु संयुक्तं मुद्रा वाराहसंज्ञिका ।।३७८।।
वामहस्ततले दक्षा अङ्गुलीस्तास्त्वधोमुखीः ।
संरोप्य मध्यमां तासामुन्नाम्याधो विकुञ्चयेत् ।।३७९।।
हयग्रीवप्रियां मुद्रा तन्मूर्त्तेरनुकारिणी ।
वामस्य मध्यमाग्रं तु तर्जन्यग्रेण योजयेत् ।।३८०।।
अनामिकां कनिष्ठां च तस्याङ्गुष्ठेन पीडयेत् ।
दर्शयेद्वामके स्कन्धे धनुर्मुद्रेयमीरिता ।।३८१।।
दक्षमुष्ठिस्थतर्जन्या दीर्घया बाणमुद्रिका ।।३८२।।

यद्वा ज्ञानार्णवे—

यथा हस्तगतं चापं तथा हस्तं प्रिये कुरु ।
चापमुद्रेयमाख्याता वामहस्ते त्ववस्थिता ।।३८३।।
कल्पद्रुमा धनुर्मुद्रा यशःकीर्त्तिविवर्धिनी ।
यथा हस्तगतो वाणस्तथा हस्तं कुरु प्रिये ।।३८४।।
बाणमुद्रेयमाख्याता रिपुवर्गनिकृन्तिनी ।
तले तलं तु करयोस्तिर्यक् संयोज्य चाङ्गुलीः ।।३८५।।
संहताः प्रसृताः कुर्यान्मुद्रा परशुसंज्ञका ।
ऊर्ध्वस्थाङ्गुष्ठमुष्टी द्वे मुद्रा त्रैलोक्यमोहिनी ।।३८६।।
हस्तौ तु संपुटीकृत्वा प्रसृताङ्गुलिकौ तथा ।
तर्जन्यौ मध्यमापृष्ठे अङ्गुष्ठौ मध्यमास्थितौ ।।३८७।।

कामुमुद्रेयमुदिता सर्वदेवप्रियङ्करी ।
महादेवप्रियाणां च कथ्यन्ते लक्षणान्यथ ।।३८८।।
उच्छ्रितं दक्षिणाङ्गुष्ठं वामाङ्गुण्ठेन बन्धयेत् ।
वामाङ्गुलीभिर्दक्षाभिरङ्गुलीभिश्च बन्धयेत् ।।३८९।।
लिङ्गमुद्रेयमाख्याता शिवसान्निध्यकारिणी ।
मिथः कनिष्ठिके वद्ध्वा तर्जनीभ्यामनामिके ।।३९०।।
अनामिकोर्ध्वसंश्लिष्टदीर्घमध्यमयोरधः ।
अङ्गुष्ठाग्रद्वयं न्यस्य योनिमुद्रेयमीरिता ।।३९१।।
अङ्गुष्ठेन कनिष्ठां तु बद्ध्वा श्लिष्टाङ्गुलित्रयम् ।
प्रसारयेत् त्रिशूलाख्या मुद्रैषा परिकीर्त्तिता ।।३९२।।
अङ्गुष्ठतर्जन्यग्रे तु ग्रन्थयित्वाऽङ्गुलित्रम् ।
प्रसारयेदक्षमाला मुद्रेयं परिकीर्त्तिता ।।३९३।।
अधःस्थितो दक्षहस्तः प्रसृतावरमुद्रिका ।
ऊर्ध्वीकृतो वामहस्तः प्रसृतोभयमुद्रिका ।।३९४।।
मिलितानामिकाङ्गुष्ठं मध्यमाग्रे नियोजयेत् ।
श्लिष्टाङ्गुल्यश्रिते कुर्यान्मृगमुद्रेयमीरिता ।।३९५।।
पञ्चाङ्गुल्यो दक्षिणास्तु मिलिता ह्यूर्ध्वमुन्नताः ।
खट्वाङ्गमुद्रा विख्याता शिवस्यातिप्रिया मता ।।३९६।।
पात्रवद्वामहस्तं च कृत्वाऽङ्गे वामके तथा ।
निधायोच्छ्रितवत् कुर्यान्मुद्रा कापालिकी मता ।।३९७।।
मुष्टिं च शिथिलां बद्ध्वा ईषदुच्छ्रितमध्यमाम् ।
दक्षिणामूर्ध्वमुन्नम्य कर्णदेशे प्रचारयेत् ।।३९८।।
एषा डमरुमुद्राख्या सर्वविघ्नविनाशिनी ।
ततो गणेशमुद्राणामुच्यन्ते लक्षणान्यथ ।।३९९।।
उत्तानोर्ध्वमुखी मध्या सरला बद्धमुष्टिका ।
दन्तमुद्रा समाख्याता सर्वागमविशारदैः ।।४००।।
वाममुष्टिस्थतर्जन्या दक्षमुष्टिस्थतर्जनीम् ।
संयोज्याङ्गुष्ठकाग्रे तु तर्जन्यग्रे स्वके क्षिपेत् ।।४०१।।

एषा पाशाह्वया मुद्रा विद्वद्भिः परिकीर्त्तिता ।
ऋज्वीं च मध्यमां कृत्वा तर्जनी मध्यपर्वणि ।।४०२।।
संयोज्याकुञ्चयेत् किंचिन्मुद्रैषाऽङ्कुशसंज्ञिका ।
तर्जनीमध्यमानामाकनिष्ठाङ्गुष्ठमुष्टिका ।।४०३।।
अधोमुखी दीर्घरूपा मध्यमा विघ्नमुद्रिका ।
पर्शुमुद्रा निगदिता प्रसिद्धा लड्डुमुद्रिका ।।४०४।।
बीजपूराह्वया मुद्रा प्रसिद्धत्वादुपेक्षिता ।
शाक्तेयानां च मुद्राणां कथ्यन्ते लक्षणान्यथ ।।४०५।।
पाशाङ्कुशवराभीतिधनुर्बाणाः समीरिताः ।
कनिष्ठानामिके बद्धा स्वाङ्गुष्ठेनैव दक्षतः ।।४०६।।
शिलष्टाङ्गुली तु प्रसृते संसृष्टे खङ्गमुद्रिका ।
वामहस्तं तथा तिर्यक् कृत्वा चैव प्रसार्य च ।।४०७।।
आङ्कुञ्चिताङ्गुलिं कुर्याच्चर्ममुद्रेयमीरिता ।
मुष्टिं कृत्वा तु हस्ताभ्यां वामस्योपरि दक्षिणाम् ।।४०८।।
कुर्यान्मुशलमुद्रेयं सर्वविघ्नविनाशिनी ।
कृत्वा शिरसि संयोज्य दुर्गामुद्रेयमीरिता ।।४०९।।
चक्रमुद्रां तथा बद्ध्वा मध्यमे द्वे प्रसार्य च ।
कनिष्ठिके तथाऽऽनीय तदग्रेऽङ्गुष्ठकौ क्षिपेत् ।।४१०।।
लक्ष्मीमुद्रा परा ह्येषा सर्वसंपत्प्रदायिनी ।
वीणावादनवद्धस्तौ कृत्वा संचालयेच्छिरः ।।४११।।
वीणामुद्रेयमाख्याता सरस्वत्याः प्रियङ्करी ।
वाममुष्टिं स्वाभिमुखीं कृत्वा पुस्तकमुद्रिका ।।४१२।।
दक्षिणाङ्गुष्ठतर्जन्योरग्रलग्ने पदाङ्गुलीः ।
प्रसार्य संहितोत्ताना एषा व्याख्यानमुद्रिका ।।४१३।।
श्रीरामस्य सरस्वत्या अत्यन्तं प्रेयसी मता ।
मणिबन्धस्थितौ कृत्वा प्रसृताङ्गुलिकौ करौ ।।४१४।।
कनिष्ठाङ्गुष्ठयुगले मिलितां तु प्रसारयेत् ।
सप्तजिह्वाख्यमुद्रेयं वैश्वानरप्रियङ्करी ।।४१५।।

कनिष्ठाङ्गुष्ठकौ शक्तौ करयोरितरेतरम् ।
तर्जनीमध्यमानामाः संहता भुग्नवर्जिताः ।।४१६।।
मुद्रैषा गालिनी प्रोक्ता शङ्खस्योपरि चालिता ।
दक्षाङ्गुष्ठं पराङ्गुष्ठे क्षिप्त्वा हस्तद्वयेन तु ।।४१७।।
सावकाशात्मकां मुष्टिं कुर्यात् सा कुम्भमुद्रिका ।
मुष्टयोरूर्ध्वकृताङ्गुष्ठौ तर्जन्यग्रे तु विन्यसेत् ।।४१८।।
सर्वरक्षाकरी ह्येषा कुम्भमुद्रेयमीरिता ।
प्रसृताङ्गुलिकौ हस्तौ मिथःश्लिष्टौ तु सम्मुखौ ।।४१९।।
कुर्यात् स्वहृदये सेयं मुद्रा प्रार्थनसंज्ञिका ।
अञ्जल्यञ्जलिमुद्रा स्याद्वासुदेवाभिधा च सा ।।४२०।।
अङ्गुष्ठावुन्नतौ कृत्वा मुष्टयोः संलग्नयोर्द्वयोः ।
तावेवाभिमुखौ कुर्यान्मुद्रा सा कालकर्णिका ।।४२१।।
दक्षिणा निविडा मुष्टिर्नासिकार्पिततर्जनी ।
मुद्रा विस्मयसंज्ञा स्याद्विस्मयावेशकारिणी ।।४२२।।
मुष्टिरूर्ध्वीकृताङ्गुष्ठा दक्षिणा नादमुद्रिका ।
तर्जन्यङ्गुष्ठसंयोगादग्रतो बिन्दुमुद्रिका ।।४२३।।
अधोमुखे वामहस्ते ऊर्ध्वास्यं दक्षहस्तकम् ।
क्षिप्त्वाऽङ्गुलीरङ्गुलीभिः संग्रन्थ्य परिवर्त्तयेत् ।।४२४।।
एषा संहारमुद्रा स्याद्विसर्जनविधौ स्मृता ।
दक्षपाणिपृष्ठदेशे वामपाणितलं स्पृशेत् ।।४२५।।
अङ्गुष्ठौ चालयेत् सम्यग्मुद्रेयं मत्स्यरूपिणी ।
वामहस्तस्य तर्जन्या दक्षिणस्य कनिष्ठिकाम् ।।४२६।।
तस्य दक्षिणतर्जन्यां दक्षिणस्य कनिष्ठिकाम् ।
तथा दक्षिणतर्जन्यां वामाङ्गुष्ठं नियोजयेत् ।।४२७।।
उन्नतं दक्षिणाङ्गुष्ठं वामस्य मध्यमादिकाः ।
अङ्गुलीर्योजयेत् पृष्ठे दक्षिणस्य करस्य च ।।४२८।।
वामस्य पितृतीर्थेन मध्यमानामिके तथा ।
अधोमुखे च ते कुर्याद्दक्षिणस्य करस्य च ।।४२९।।

कूर्मपृष्ठसमं कुर्याद्दक्षपाणिं च सर्वतः ।
कूर्ममुद्रेयमाख्याता देवताध्यानकर्मणि ।।४३०।।

पृष्ठे क्रोडे इत्यर्थः।

अन्तराङ्गुष्ठमुष्टिं तु कृत्वा वामकरस्य च ।
मध्यमाग्रं तु दक्षस्य तथाऽलम्ब्य प्रयत्नतः ।।४३१।।
मध्यमेनाथ तर्जन्या अङ्गुष्ठाग्रे तु योजयेत् ।
दक्षिणं योजयेत् पाणिं वाममुष्टौ तु साधकः ।।४३२।।
दर्शयेद्दक्षिणे भागे मुण्डमुद्रेयमुच्यते ।
त्तर्जनीमध्यमानामाः समं कुर्यादधोमुखम् ।।४३३।।
अनामायां क्षिपेद्वद्धामृज्वीं कृत्वा कनिष्ठिकाम् ।
लेलिहा नाम मुद्रेयं जीवन्यासे प्रकीर्त्तिता ।।४३४।।
तर्जन्यनामिकामध्ये कनिष्ठाक्रमयोगतः ।
करयोर्योजयेच्चैव कनिष्ठामूलदेवताम् ।।४३५।।
अङ्गुल्यग्रे तु निःक्षिप्य महायोनिः प्रकीर्त्तिता ।
वामकेश्वर तन्त्रोक्ताः प्रकाश्यन्तेऽत्र मुद्रिकाः ।।४३६।।
श्रृणु देवि प्रवक्ष्यामि मुद्राः सर्वार्थसिद्धिदाः ।
याभिर्विरचिताभिस्तु सान्निध्यं त्रैपुरं भवेत् ।।४३७।।
परिवृत्य करौ स्पृष्टावङ्गुष्ठौ करायेत् समौ ।
अनामान्तर्गते कृत्वा तर्जन्यौ कुटिलाकृती ।।४३८।।
कनिष्ठिके नियुञ्जीत निजस्थाने महेश्वरी ।
त्रिखण्डेयं समाख्याता त्रिपुराध्यानकर्मणि ।।४३९।।
मध्यमामध्यगे कृत्वा कनिष्ठाङ्गुष्ठरोधिते ।
तर्जन्यौ दण्डवत् कृत्वा मध्यमोपर्यनामिके ।।४४०।।
एषा च प्रथमा मुद्रा सर्वसंक्षोभकारिणी ।
एतस्या एव मुद्राया मध्यमे सरले यथा ।।४४१।।
क्रियते परमेशानि सर्वविद्राविणी तथा ।
मध्यमातर्जनीभ्यां च कनिष्ठानामिके समे ।।४४२।।
अङ्कुशाकारमुद्राभ्यां मध्यमे परमेश्वरि ।
अङ्गुष्ठं तु नियुञ्जीत कनिष्ठानामिकोपरि ।।४४३।।

इयमाकर्षणी मुद्रा त्रैलोक्याकर्षणी परा ।
पुटाकारौ करौ कृत्वा तर्जन्यावङ्कुशाकृती ।।४४४।।
परिवर्त्त्य क्रमेणैव मध्यमे तदधोगते ।
क्रमेण देवि तेनैव कनिष्ठानामिकादयः ।।४४५।।
संयोज्या निविडाः सर्वा अङ्गुष्ठावग्रदेशतः ।
मुद्रेयं परमेशानि सर्ववश्यकरी मता ।।४४६।।
संमुखौ तु करौ कृत्वा मध्यमामध्यगेऽन्त्यजे ।
अनामिके तु सरले तद्बहिस्तर्जनीद्वयम् ।।४४७।।
दण्डाकारौ ततोऽङ्गुष्ठौ मध्यमानखदेशगौ ।
मुद्रैषोन्मादिनी नाम क्लेदिनी सर्वयोषिताम् ।।४४८।।
अस्यास्त्वनामिका युग्ममधः कृत्वाऽङ्कुशाकृती ।
तर्जन्यावपि तेनैव क्रमेण विनियोजयेत् ।।४४९।।
इयं महाङ्कुशा मुद्रा सर्वकामार्थसाधिनी ।
सव्यं दक्षिणदेशे तु सव्यदेशे तु दक्षिणम् ।।४५०।।
बाहुं कृत्वा महादेवि हस्तौ संपरिवर्त्त्य च ।
कनिष्ठानामिके देवि मुक्त्वा ते तु क्रमेण तु ।।४५१।।
तर्जनीभ्यां समाक्रान्ते सर्वोर्ध्वमपि मध्यमे ।
अङ्गुष्ठौ च महेशानि सरलावपि कारयेत् ।।४५२।।
इयं सा खेचरीनाम्ना पार्थिवस्थानयोजिता ।
परिवर्त्त्य करौ स्पृष्टावर्धचन्द्राकृती प्रिये ।।४५३।।
तर्जन्यङ्गुष्ठयुगलं युगपत कारयेत् ततः ।
अधःकनिष्ठावष्टब्धे मध्यमे विनियोजयेत् ।।४५४।।
तथैव कुटिले योज्ये सर्वाधस्तादनामिके ।
बीजमुद्रेयमचिरात् सर्वसिद्धिप्रवर्धिनी ।।४५५।।
मध्यमे कुटिले कृत्वा तर्जन्युपरिसंस्थिते ।
अनामिके मध्यगते तथैव हि कनिष्ठिके ।।४५६।।
सर्वा एकत्र संयोज्य अङ्गुष्ठपरिपीडिताः ।
एषा तु प्रथमा मुद्रा योनिमुद्रेति संज्ञिता ।।४५७।।

एता मुद्रा महेशानि त्रिपुराया मयोदिताः ।
पूजाकाले प्रयोक्तव्या यथानुक्रमयोगतः ।।४५८।।
बद्ध्वा तु योनिमुद्रां वै मध्यमे कुटिले कुरु ।
अङ्गुष्ठेन तदग्रे तु मुद्रेयं भूतिनी मता ।।४५९।।
वामहस्तेन मुष्टिं तु बद्ध्वा कर्णप्रदेशके ।
तर्जनी सरलां कृत्वा भ्रामयेन्मनुवित्तमः ।।४६०।।
सौभाग्यदण्डिनी मुद्रा न्यासकालेऽपि सूचिता ।
अन्तरङ्गुष्ठमुष्ट्या तु निबद्ध्य तर्जनीमिमाम् ।।४६१।।
रिपुजिह्वाग्रहा मुद्रा न्यासकाले च सूचिता ।
मध्यमानामिकाङ्गुष्ठाः संलग्नाद्या अधोमुखाः ।।४६२।।
अन्याप्रसारिताङ्गुल्यो गोमुखी सा प्रकीर्त्तिता ।
त्यक्तप्रदेशिनी मुष्टी सूची मुद्रेति कीर्त्तिता ।।४६३।।
रक्षा मुद्रेति सैवोक्ता समन्ताद्भ्रमणं यदि ।
द्वौ करौ पृष्ठसंलग्नौ भ्रामयेद् ग्रन्थिताङ्गुली ।।४६४।।
छोटिकेति समाख्याता प्रणामे तां प्रदर्शयेत् ।
अङ्गुष्ठो भैरवस्थानं चण्डिकायास्त्वनामिका ।।४६५।।
अतस्ताभ्यां तर्पणीयं यत एतत् तयोः प्रियम् ।
अङ्गुष्ठानामिकायोगाद्वामहस्तस्य पार्वति ।।४६६।।
तत्त्वमुद्रा समाख्याता तर्पणे तां नियोजयेत् ।

यामले—

अङ्गुष्ठानामिकाभ्यां तु दक्षहस्तेन तर्पयेत् ।।४६७।।

समयाचारे—

अङ्गुष्ठतर्जनीमध्ये शुद्धिं संगृह्य वामतः ।
वामेन दक्षिणेनापि देवीं संतर्पयेत् सुधीः ।।४६८।।

एतद्वचनत्रयं च मार्गभेदेन व्यवस्थापनीयम् ।

तत्त्वं तर्पणमात्रं तु वामहस्तेन दक्षिणे ।
दक्षहस्तेन वामेऽपि विशेषः परिकीर्त्तितः ।।
दक्षवामक्रियायुक्तः कौलश्चोभयमिश्रितः ।।४६९।।

इति प्राग्लिखितप्रामाणाद्दक्षिणमार्गिणां दक्षहस्तेन पूजनं वामहस्तेन पूजनं तर्पणम् । वाममार्गिणां वामहस्तेन पूजनं दक्षहस्तेन तर्पणम् । कौलिकानां तु देवतर्पणे करयोरैच्छिको विकल्प इति विवेकात् । तर्पणे च कामनाभेदे-नाङ्गुलिभेद उक्तस्तत्रान्तरे—

अङ्गुष्ठानामिकाभ्यां तु वश्यकर्मणि तर्पयेत् ।
अङ्गुष्ठमध्यमाभ्यां तु तर्पयेच्छान्तिकर्मणि ।।४७०।।
तर्जन्यङ्गुष्ठयोगेन तर्पयेदभिचारिके ।
कनिष्ठाङ्गुष्ठयोगेन स्तम्भने तर्पयेत् प्रिये ।।४७१।।

तन्त्रान्तरे—

मिथः पृष्ठार्पितौ हस्तावन्योन्यग्रथिताङ्गुली ।
कृत्वा बद्ध्वा परावृत्य नत्वा सा स्यात् क्षमापिनी ।।४७२।।

भैरवतन्त्रे—

योनिश्च भूतिनी चैव बीजाख्या दैत्यधूपिनी ।
लेलिहानेति संप्राप्ताः पञ्च मुद्राः प्रकीर्त्तिताः ।।४७३।।

आद्यास्तिस्रः प्रागुक्ताः । अन्त्ययोर्लक्षणे तु तत्रैव—

परिवर्त्त्य करौ कृत्वा कनिष्ठाकृष्टमध्यमाम् ।
अनामयोर्युगं चाधस्तर्जनीयुगलं पृथक् ।।४७४।।
अन्योन्यं निविडं बद्ध्वा अङ्गुष्ठाग्रे अनामिकाः ।
दैत्यानां धूमकेत्वाख्या मुद्रैषा कथिता प्रिये ।।४७५।।
वक्त्रं विस्फारितं कृत्वाऽप्यधो जिह्वां च चालयेत् ।
पार्श्वस्थमुष्टियुगलं लेलिहानेति कीर्त्तिता ।।४७६।।

इति मुद्राप्रकरणम् सम्पन्नम्

अथ नियमाः कुलार्णवे—

नियमव्यतिरेकेण यद्यत् कर्म करोति यः ।
किञ्चिदस्य न फलं सिद्ध्यत्यक्रमदोषतः ।।४७७।।
न्यूनातिरिक्तकर्माणि न फलन्ति कदाचन ।
यथाविधि कृतानीह तत्कर्माणि फलन्ति हि ।।४७८।।
तद्विधानकृतं कर्म जपहोमार्चनादिकम् ।
देवताप्रीतिदं भूयाद् भुक्तिमुक्तिफलप्रदम् ।।४७९।।

यामले—

ब्राह्मे मुखं चोत्थाय संस्मृत्य गुरुपादुकाम् ।
प्रातःकृत्यं विधायाथ कृत्वा शौचादिकं ततः ।।४८०।।
दन्तान् प्रधाव्य तीर्थादौ गत्वा स्नानं समाचरेत् ।
सन्ध्यामुपास्य विधिवद्देवर्षिपितृतर्पणम् ।।४८१।।
समाप्य दत्वा दानानि मौनी जपगृहं व्रजेत् ।
नित्यार्चनं ततः कृत्वा नित्यहोमं विधाय च ।।४८२।।
कृत्वा नैमित्तिकीं पूजां विधिवज्जपमाचरेत् ।

तथा—

एवं कृत्वा साधकेन्द्राः सिद्ध्यन्ति देवतार्चनात्[१] ।।४८३।।

स्वतन्त्रतन्त्रे—

नित्यनैमित्तिकं काम्यं सापेक्षं पूर्वपूर्वतः ।
अन्यथा तु भवेद् व्यर्थं कुर्यादावश्यकं ततः ।।४८४।।

तन्त्रान्तरे—

त्रिसन्ध्यमर्चयेद्देवं भक्तिं कृत्वा विधानतः ।

पुरश्चरणचन्द्रिकायाम्—

संपूज्यैवं जपं कुर्यान्न मन्त्रं केवलं जपेत् ।।४८५।।

गौतमः—

शक्त्या त्रिषवणं[२] स्नानमथ वा द्वे सकृच्च वा ।
त्रिसन्ध्यं प्रजपेन्मन्त्रं पूजनं तत्समं भवेत् ।।४८६।।
एकदा वा भवेत पूजा न जपेत् पूजनं विना ।
जपान्ते च भवेत् पूजा पूजान्ते वा जपेन्मनुम् ।।४८७।।

अन्यत्रापि—

मन्त्रं साधयमानस्तु त्रिसन्ध्यं देवमर्चयेत् ।
द्विसन्ध्यमेकसन्ध्यं वा न मन्त्रं केवलं जपेत् ।।४८८।।

मुण्डमालायाम्—

यदि पूजाद्यशक्तः स्याद्द्रव्याभावेन सुन्दरि ।
केवलं जपमात्रेण पुरश्चर्या विधीयते ।।४८९।।

---

१. एवं कुर्यात् साधकेन्द्रस्त्रिसन्ध्यं देवतार्चनम् ३ पु. पाठः ।
२. त्रैकालिकम् ।

स्त्रीणां विशेषमाह यामले—

नियमः पुरुषे ज्ञेयो न योषित्सु कदाचन ।।४९०।।

वीरतन्त्रे—

न न्यासो योषितां चात्र न ध्यानं न च पूजनम् ।
केवलं जपमोत्रेण मन्त्राः सिद्ध्यन्ति योषिताम् ।।४९१।।

चन्द्रिकायाम्—

देवी चित्तगता कार्या कार्यं च हृदयं स्थिरम् ।
मन्त्रजपान्नपानीयैः कुर्यात् पानादिभोजनम् ।।४९२।।
नित्यं नैमित्तिकं कुर्यात् सङ्गमं साधुभिः सह ।
स्नायात् तु पञ्चगव्येन केवलामलकेन वा ।।४९३।।
आज्येन दध्ना क्षीरेण तिलकल्केन वा कृतम् ।
पुरश्चर्याविधौ तद्वत् स्नानं कुर्याद् विशुद्धये ।।४९४।।
अस्नातस्य फलं नास्ति न चातर्पयतः पितॄन् ।

कुम्भसम्भवः—

गुरुदेवात्ममन्त्राणामैकभावेन चिन्तनम् ।।४९५।।

योगिनीहृदये—

शयीत कुशशय्यायां शुचिवस्त्रधरः सदा ।
प्रत्यहं क्षालयेच्छय्यामेकाकी निर्भयः स्वपेत् ।।४९६।।

कुलार्णवे—

भूशय्या ब्रह्मचर्यं च मौनमाचार्यसेवनम् ।
नित्यपूजा नित्यदानं देवतास्तुतिकीर्त्तनम् ।।४९७।।
नैमित्तिकार्चनं चैव विश्वासो गुरुदेवयोः ।
जपनिष्ठा द्वादशैते धर्माः स्युर्मन्त्रसिद्धिदाः ।।४९८।।

तन्त्रान्तरे—

मनःसंहरणं शौचं मौनं मन्त्रार्थचिन्तनम् ।
अव्ययत्व[1]मनिर्वेदो जपसम्पत्तिकारकम् ।।४९९।।

मेरुतन्त्रे—

मनोनिरोधो मन्त्रार्थचिन्तनं नित्यकर्म च ।
नैमित्तिकं शौचमौने बालस्य दमनं तथा ।।५००।।

---

१. अव्यग्रत्वम् २-३ पु. पाठः ।

भूमिशय्या त्रिषवणं स्नानं प्रत्याह्निकार्चनम् ।
नित्यदानं गुरोः पादपूजाऽऽहारनियन्त्रणा ।।५०१।।
स्नानं च पञ्चगव्येन पवित्रकरधारणम् ।
त्रिसन्ध्यावन्दनं पञ्च यज्ञास्तर्पणकं तथा ।।५०२।।

यामले—

एवमुक्तविधानेन विलम्बं त्वरितं विना ।
उक्तसंङ्ख्यं जपं कुर्यात् पुरश्चणसिद्धये ।।५०३।।
देवतागुरुमन्त्राणामैक्यं संभावयन् धिया ।
जपेदेकमनाः प्रातःकालान्मध्यन्दिनावधि ।।५०४।।
यत्सङ्ख्यया समारब्धं तत्कर्त्तव्यमहर्निशम् ।
यदि न्यूनाधिकं कुर्याद्व्रतभ्रष्टो नवेन्नरः ।।५०५।।

मध्यन्दिनावधीत्यवधिमात्रबोधकं न तु नियमपरम् । अन्यथा मध्याह्नकाले कदा चिज्जपसङ्ख्याया अपूर्त्तौ नियमभङ्गः स्यादिति तन्त्रसारकृतः ।

सिद्धान्तसारे—

वशीकृतेन्द्रियग्रामो भक्तियुक्तः प्रसन्नधीः ।
अधःशायी ब्रह्मचारी निशाशी प्रजपेन्मनुम् ।।५०६।।

अथ वर्ज्यानि—

आलस्यं जृम्भणं निद्रां क्षुतं निष्ठीवनं भयम् ।
नीचसंस्पर्शनं कोपं ज़पकाले विवर्जयेत् ।।५०७।।

मेरुतन्त्रे—

त्यजेद्विंशतिकर्माणि सिद्धिविघ्नकराणि च ।
लोभं क्रोधं च मात्सर्यं कामं द्वेषं च ताडनम् ।।५०८।।
दम्भमुच्चाटनाभ्याङ्गाप्रियमिथ्यावचस्तथा ।
गीतं वाद्यं मधुच्छायां विभीतककरञ्जयोः ।।५०९।।
मांसं प्रतिग्रहं माल्यं ताम्बूलं पापिभाषणम् ।
एतानि वर्जयेद्विद्वान् ... ... ...।।५१०।। इति ।

कुलार्णवे—

स्त्रीशूद्रपतितव्रात्यनास्तिकोच्छिष्टभाषणम् ।
असत्यभाषणं जिह्मभाषणं परिवर्जयेत् ।।५११।।

सत्येनापि न भाषेत जपहोमार्चनादिषु ।
अन्यथाऽनुष्ठितं सर्वं भवत्येव निरर्थकम् ।।५१२।।
नैरन्तर्यविधिः प्रोक्तो न दिनं व्यतिलङ्घयेत् ।
दिवसातिक्रमात् पुंसां मन्त्रसिद्धिर्भवेन्न हि ।।५१३।।

पुरश्चरणचन्द्रिकायाम्—

त्यजेदुष्णोदकस्नानमनिवेदितभोजनम् ।

तन्त्रान्तरे—

भोजनं कांस्यपात्रे च दिवाभोजनमेव च ।।५१४।।

योगिनीतन्त्रे—

कौटिल्यं क्षीरमभ्यङ्गमनिवेदितभोजनम् ।
असंकल्पितकृत्यं तु वर्जयेन्मर्दनादिकम् ।।५१५।।

पुरश्चरणचन्द्रिकायाम्—

वर्जयेद्गीतवाद्यादि श्रवणं नृत्यदर्शनम् ।
अभ्यङ्गं गन्धलेपं च पुष्पधारणमेव च ।।५१६।।
मैथुनं तत्कथालापं तद्गोष्ठी परिवर्जयेत् ।
अस्नातांश्च द्विजान् शूद्रान् स्त्रियो नैव स्पृशेत् तथा ।।५१७।।
प्राणिहिंसां न कुर्वीत पुरश्चरणकृद्द्विजः ।
गोशुश्रूषादिकं तत्ततकल्पोक्तं विधिवच्चरेत् ।।५१८।।
विहाय वह्निं न हि वस्तु किंचिद्-
ग्राह्यं परेभ्यः सति संभवे च ।
असंभवे तीर्थबहिर्विशुद्धात्
पर्वातिरिक्ते प्रतिगृह्य जप्यात् ।।५१९।।
तत्रासनमुत्थानुदिनं विशुद्धा
द्याचेत यावद्दिनमात्रभक्ष्यम् ।
गृह्णाति रागादधिकं न सिद्धिः
प्रजायते कल्पशतैर्मनु ।।५२०।।

अत्र तिलतैलाभ्यङ्गस्तु गृहस्थानां न निषिद्धः—

तिलतैलं मन्त्रपूतं पावनं देवदुर्लभम् ।
मर्दयित्वा गृहस्थेन स्नानं कार्यं हि सर्वदा ।।५२१।।

इति मेरुतन्त्र वचनात् । ऋतुकाले निजस्त्रीसंभोगोऽपि न निषिद्धः।

ऋतुकालं विना मन्त्री न स्वस्त्रियमपि स्पृशेत् ।

इति गौतमीयतन्त्रवचनात् ।

यामले—

अपवित्रकरो नग्नः शिरसि प्रावृतोऽपि वा ।।५२२।।
प्रलपन् प्रजपेद्यावत् तावन्निष्फलमुच्यते ।
विड्मूत्रोत्सर्गशङ्कादियुक्तः कर्म करोति यः ।।५२३।।
जपार्चनादिकं सर्वमपवित्रकरं प्रिये ।
मलिनाम्बरकेशादिमुखदौर्गन्ध्यसंयुतः ।।५२४।।
यो जपेत् तं दहत्याशु देवता गुप्तिसंस्थिता ।

तथा—

नैकवासा जपेन्मन्त्रं बहुवासाकुलोऽपि वा ।।५२५।।
उष्णीषी कञ्चुकी नग्नो मुक्तकेशोऽङ्गनावृतः ।
अपवित्रकरोऽशुद्धः प्रलपन्न जपेत् क्वचित् ।।५२६।।
अनासनः शयानो वा गच्छन् भुञ्जान एव वा ।
रथ्यायामशिवस्थाने न जपेत् तिमिरालये ।।५२७।।
उपानद्गूढयानो वा यानशय्यागतस्तथा ।
प्रसार्य न जपेत् पादावुत्कटासन एव च ।।
व्यग्रतां मनसश्चैव साधकः परिवर्जयेत् ।।५२८।।

अथ प्रायश्चित्तानि

मेरुतन्त्रे—

सकृदुच्चरिते शब्दे प्रणवं समुदीरयेत् ।
प्रोक्ते पामरशब्देऽपि प्राणायामं सकृच्चरेत् ।।५२९।।
बहुप्रलापे चावश्यं न्यस्याङ्गानि ततो जपेत् ।
क्षुतेऽप्येवं तथाऽस्पृश्यस्थानानां स्पर्शने तथा ।।५३०।।
मौनत्यागे जपेन्मत्रं वैष्णवं वा स्मरेद्धरिम् ।
पतितान्त्यजसंदर्शे तेजोवन्तं निरीक्षयेत् ।।५३१।।

तेजोवन्तश्च—

सूर्योऽग्निश्चन्द्रमाश्चैव मुनयो भानि तारकाः ।।
विद्वान् गौर्ब्राह्मणश्चेति ... ...।।५३२।। इति तत्रैवोक्ताः ।

अन्यत्रापि—

पतितानामन्त्यजानां दर्शने भाषणे श्रुते ।
क्षुतेऽधोवायुगमने जृम्भणे जपमुत्सृजेत् ।।५३३।।
तथा तस्य च तत्प्राप्तौ प्राणायामं षडङ्गकम् ।
कृत्वा सम्यग्जपेच्छेषं यद्वा सूर्यादिदर्शनम् ।।५३४।।
मार्जारं कुक्कुटं क्रौञ्चं श्वानं शूद्रं खरं कपिम् ।
दृष्ट्वाऽऽचम्याचरेत् कर्म स्पृष्ट्वा स्नानं विधीयते ।।५३५।।

साधनसमुच्चये—

जपकाले यदाऽकस्मान्म्लेच्छानां दर्शनं भवेत् ।
तदाऽऽचम्य हरिं स्मृत्वा तेजोवन्तं विलोक्य च ।।५३६।।
गायत्रीं विष्णुमन्त्रं वा शतमष्टोत्तरं जपेत् ।
स्वप्नेऽपि यदि जायेत म्लेच्छादीनां च दर्शनम् ।।५३७।।
कामिन्या सह सङ्गम्य रेतसो वा च्युतिर्भवेत् ।
दीपं दत्वा विष्णुगेहे गायत्री शतधा जपेत् ।।५३८।।

तथा—

शुचिर्भूत्वा जपेन्मत्रं नाशुचिर्जपमाचरेत् ।।५३९।।

मानसजपे तु नायं नियमः । तदुक्तं तन्त्रान्तरे—

अशुचिर्वा शुचिर्वाऽपि गच्छँस्तिष्ठन् स्वपन्नपि ।
मन्त्रैकशरणो विद्वान् मनसैवं सदाऽभ्यसेत् ।।५४०।।
न दोषो मानसे जाप्ये सर्वदेशेऽपि सर्वदा ।
जपनिष्ठो द्विजश्रेष्ठोऽखिलयज्ञफलं लभेत् ।।५४१।। इति ।

मेरुतन्त्रे—

दैवादसत्यभाषी चेत् स रौद्रं पौरुषं जपेत् ।
वहुवस्त्रैकवस्त्रो वा मुक्तकेशोऽङ्गनावृतः ।।५४२
उष्णीषी कञ्चुकी नग्नः शिरसि प्रावृतोऽपि वा ।
चिन्ताव्याकुलचित्तो वा क्रुद्धो भ्रान्तः क्षुधान्वितः ।।५४३।।
उपानद्गूढपादो वा यानशय्यागतस्तथा ।
शयानो वाऽधौतपादः पश्चाद्वा दक्षिणामुखः ।।५४४।।
म्लानवस्त्रोऽर्धवस्त्रश्च तथा द्विगुणवस्त्रकः ।
च्युतवस्त्रो रक्तवस्त्रः स्निग्धवस्त्रो द्विकच्छकः ।।५४५।।

बहिः कच्छोऽनुत्तरीयो विकच्छोऽनेककच्छकः ।
कौपिनी प्रौढपादश्च तथाऽऽसी पीतवस्त्रवान् ।।५४६।।
जपाशक्तः प्रमादाच्चेद्राक्षसैर्गृह्यते फलम् ।
तत्कारणं परित्यज्य तज्जपं पुनराचरेत् ।।५४७।।
स्नात्वाऽऽर्द्रवासा मौनेन दशकुम्भमितं जलम् ।
श्रोत्रियस्य गृहे दद्यात् परनार्यां सहस्रकम् ।।५४८।।

सिद्धान्तसंग्रहे—

अज्ञानात् स्वस्त्रियं गत्वा धेनुमेकां पयस्विनीम् ।।५४९।।
दद्याद्विप्राय धेनूनां परस्त्रीगमने शतम् ।

अथपुरश्चरणार्थं भूमिपरिग्रहः । मेरुतन्त्रे पूर्वोक्तस्थानान्युक्तानि—

एवं विचार्य मतिमान् कुर्याद्भूमिपरिग्रहम् ।
पृथ्वीं वराहं संपूज्य भूसुतस्य बलेन च ।।५५०।।
ब्रूयादमुकमन्त्रस्य पुरश्चरणसिद्धये ।
मयेयं गृह्यते भूमिर्मन्त्रोऽयं सिद्ध्यतामिति ।।५५१।।
न्याग्रोधोदुम्बराश्वत्थप्लक्षान्यतरवृक्षजान् ।
वितस्तिप्रमितान् वृत्तान् गृह्णीयात् कीलकान् दश ।।५५२।।
अष्टौ निखातयेदष्टदिशास्वीशानपूर्वयोः ।
मध्ये निखन्यान्नवममूर्ध्वबुद्ध्या तथाऽप्यधः ।।५५३।।
पश्चान्नैर्ऋत्ययोर्मध्ये त्वस्त्रमन्त्रेण कीलयेत् ।
पूजां तथाऽस्त्रमन्त्रेण तेष्वस्त्रं च प्रपूजयेत् ।।५५४।।
क्षेत्रे च कीलिते मन्त्री न विघ्नैः परिभूयते ।
दिक्पालेभ्यो माषभक्तवलिं दिक्षु प्रकल्पयेत् ।।५५५।।
क्षेत्रमध्ये क्षेत्रपालं पूजयेच्च गणेश्वरम् ।
तृतीयं वास्तुपुरुषं तेभ्यो दद्याद्बलित्रयम् ।।५५६।।

यामले—

पुण्यक्षेत्रादिकं गत्वा कुर्याद्भूमिपरिग्रहम् ।।५५७।।

तथा—

भूमेः परिग्रहं कृत्वा परिमाणाच्च सर्वतः ।
ग्रामे क्रोशमितं स्थानं नगरे तद्द्वयं स्मृतम् ।।५५८।।

नदीपर्वततीर्थादौ परिमाणेन वर्जितम् ।
आहारादिविहारार्थं तावती भूमिमाक्रमेत् ।।५५९।।
क्षीरवृक्षमयान् कीलानस्त्रमन्त्राभिमन्त्रितान् ।
निखनेद्दशदिग्भागे तेष्वस्त्रं च प्रपूजयेत् ।।५६०।।

माहेश्वरीये—

ये चात्र विघ्नकर्त्तारो दिवि भुव्यन्तरिक्षगाः ।
विघ्नाभूताश्च ये चान्ये मम मन्त्रस्य सिद्धिषु ।।५६१।।
मयैतत् कीलितं क्षेत्रं परित्यज्य विदूरतः ।
अपसर्पन्तु ते सर्वे निर्विघ्नं सिद्धिरस्तु मे ।।५६२।।
पठित्वेत्येवमस्त्रेण निखनेत् कीलकान् सुधीः ।
कीलेषु तेषु विधिवत् पूजयेदस्त्रदेवताम् ।।५६३।।
क्षेत्रपालादिकान् मध्ये पूजयेद्विधिवित्तमः ।
दिक्पतिभ्यो वलिं दत्वा ततः क्षेत्रं समाश्रयेत् ।।५६४।।

तथा—

स्वबीजं पूर्वमुच्चार्य सम्बुद्धयन्तं सुरं ततः ।
इमं पदं माषभक्तबलिं गह्णपदद्वयम् ।।
ठद्वयान्तो दशानां च दिक्पालानां वलेर्मनुः ।।५६५।।

दिक्पालबीजानि तु—

लँ रँ मँ क्षँ वँ यँ सँ हँ आँ अँ—इति ।

मेरुतन्त्रे—

जपस्थाने ततः कुर्यात त्रिकोणं वर्तुलं बहिः ।
तद्बहिश्चतुरस्त्रं च तत्र क्षेत्रे समर्चयेत् ।।५६६।।
इहागच्छेत्यादिवाक्यैस्त्रिकोणादग्रतः पुनः ।
अन्नोदकादिसंपूर्णं बलिपात्रं निधापयेत् ।।५६७।।
वामिभिर्माहिषो देयः कौलिकैर्वर्करस्तथा ।
अविः सिद्धान्तिभिस्तत्र निवेद्यो मनुनाऽमुना ।।५६८।।

वर्करश्छागः। अविर्मेषः । क्षेत्रपालवलिदानमन्त्र उक्तः प्रथमतन्त्रे—

क्षेत्रपालं च संपूज्य वलिं दद्याद्यथाविधि ।
पूर्वमेहि द्वयं पश्चाद्विदुषि स्यान्मुरुद्वयम् ।।५६९।।

भञ्जयद्वितयं भूयो नर्त्तयद्वितयं पुनः ।
ततो विघ्नपदद्वन्द्वं महाभैरवतत्परम् ।।५७०।।
क्षेत्रपालवलिं गृह्णद्वयं पावकसुन्दरी ।
वलिमन्त्रोऽयमाख्यातः सर्वसिद्धिफलप्रदः ।।५७१।।

गणेशवलिदानमन्त्रस्तु दीक्षाप्रकरणोक्त एव ग्राह्यः । वास्तुवलिदानमन्त्रो यथा—

तारो वास्तोष्पते चेमं माषभक्तवलिं ततः ।
गृह्णद्वयान्ते स्वाहा च वास्तोर्वलिमनुः स्मृतः ।।५७२।।

वीरचूणामणौ तु वीरकल्पे विशेष उक्तः—

ऋषिच्छन्दा[1]दि विन्यस्य दिग्देवेभ्यो बलिं हरेत् ।
असिताङ्गभैरवब्राह्मीपदं ङेन्तं समालिखेत् ।।५७३।।
बलि गृह्ण द्विधा कुर्याद् द्विठान्तो दिग्वलेर्मनुः ।
असिताङ्गो रुरुचण्डः क्रोध उन्मत्तभैरवः ।।५७४।।
कपाली भीषणश्चैव संहारश्चाष्ट भैरवाः ।
ब्राह्मी माहेश्वरी पश्चात् कौमारी वैष्णवी तथा ।।५७५।।
वाराही च तथेन्द्राणी चामुण्डा तदनन्तरम् ।
महालक्ष्मीः समाख्याता स्वस्वबीजाद्यनुक्रमात् ।।५७६।।
धूपदीपैः समभ्यर्च्य पश्चात् कीलं निवेशयेत् ।
प्रणवं पूर्वमुच्चार्य माया लक्ष्मीश्च मन्मथः ।।५७७।।
इन्द्राण्यै पदमुच्चार्य चामुण्डे च पदं ततः ।
विच्चे इति पदं पश्चादिदं क्षेत्रं च कीलय ।।५७८।।
रक्षरक्षपदं पश्चात् कालिकेति समालिखेत् ।
वह्निजायान्तमन्त्रोऽयं पूर्वादिक्रमशो न्यसेत् ।।५७९।।
मूलमन्त्र समुच्चार्य आग्नेय्यै पदमुच्चरेत् ।
याम्यै इति पदं पश्चान्नैर्ऋत्यै च मनुं पुनः ।।५८०।।
वारुण्यै वायवी चेति कौवेरीशानभैरवी ।
आदौ मन्त्रं समुच्चार्य पुनर्देवीं वदेत् प्रिये ।।५८१।।
वलिं दद्यात् क्रमेणैव दिग्विदिक्षु वलिं हरेत् ।
प्रणवं पूर्वमुद्धृत्य हल्लेखाबीजमुद्धरेत् ।।५८२।।

---

१. तान्त्रिकोऽयं प्रयोगः ।

वटुकाय पदं पश्चादापदुद्धारणाय च ।
कुरुद्वयं समुच्चार्य मायां तारं समुद्धरेत् ।।५८३।।
वह्निजायान्वितो मन्त्रो वटुकस्य वलिं हरेत् ।
आग्नेय्यां वलिमुत्सृज्य माया लक्ष्मीश्च मन्मथः ।।५८४।।
वाराही बीजमुद्धृत्य बीजं पञ्चान्तकं पुनः ।
गणपतये पदं पश्चाद्वरवरदं तथा पुनः ।।५८५।।
सर्वजनं वदेच्चैव वदेन्मे वशमानय ।
अन्ते बह्निवधूं दद्याद् गणनाथमहामनुः ।।५८६।।

वाराहीबीजं ग्लौँ इति ।

रौद्रं त्रिगुणमुद्धृत्य नारायणं तथोद्धरेत् ।
बीजं सूक्ष्मेशमुद्धृत्यामरेशं बीजमुद्धरेत् ।।५८७।।
ङेन्तं तु क्षेत्रपालं तु वलिं गृह्णद्वयं ततः ।
वह्निजायान्वितो मन्त्रः क्षेत्रपालस्य कीर्त्तितः ।।५८८।।
वायुबीजं त्रिधाऽऽलिख्य अनन्तो माधवस्तथा ।
वर्त्तुलाक्षीमथोद्धृत्य योगिनीभ्यस्तथैव च ।।
वह्निजायान्वितो मन्त्रो वायव्यां योगिनीवलिः ।।५८९।।

रौद्रः शकारः[१]। त्रिगुणम् त्रिवारम् । नारायणं आँ। सूक्ष्मेशः इँ। अमरेश उँ । वायुबीजं यकारः । अनन्त आकारः । माधव इकारः । वर्त्तुलाक्षी उकारः ।

क्षकारं कालमारूढं तदन्ते माऽनलाक्षरम् ।
सर्वविघ्नपदं कृद्धयः सर्वेभ्यो भूत उद्धरेत् ।।५९०।।
भ्यो वर्म फट् समुद्धृत्य वलि गृह्णद्वयं ततः ।
द्विठान्तः सिद्धिदः प्रोक्तः सर्वभूतवलिं हरेत् ।।५९१।।

कालो मकारः । मा ईकारः । अनलाक्षरं रेफः । तेन क्ष्म्रीँ इति ।

ओदनं पायसं क्षीरं मत्स्यमांसैस्तथैव च ।
मोदकं पूलिकापूपं वटकं त्रिविधा सुरा ।।५९१।।
हृद्यौदनादि पक्वान्नमाज्यं मधु सशर्करम् ।
सर्वत्र विधिवत् कुर्याद्दुग्धेनोत्सर्गमाचरेत ।।५९२।।इति ।।

यामले—

क्षेत्रं समाश्रयेद्यस्तु क्षेत्रपालार्चनं विना ।
वाध्यते स महाविघ्नैस्तस्मात् क्षेत्रेशमर्चयेत् ।।५९३।।

---

१. रौद्रं सकारः २-४ पु. पा. ।

अत्रायं विशेषः । यस्य क्षेत्रस्य नामाद्यवर्णो तस्य क्षेत्रपालस्य नामाद्यः स एव क्षेत्रपालस्तस्मिन् क्षेत्रे पूज्यः । क्षेत्रपाला उक्तास्तन्त्रान्तरे ।

अजरश्चापकुम्भश्च इडारम्भस्तथैव च ।
ईन्द्रर्त्तिश्च उल्कास्य ऊष्माद ऋपुसूदनः ।।५९४।।
ॠमुक्तो लृप्तकायश्च लृपाद एकदंष्ट्रकः ।
ऐरावतश्च ओद्याम्बुरौषधीशोऽन्तवाहकः ।।५९५।।
अस्तकोऽप्यर्थवाहश्च कमलश्च खराननः ।
गोमुखश्चैव घण्टालो ङणमश्चन्द्रधारकः ।।५९६।।
छटाटोपो जटालाख्यो झङ्कारो ञमटेश्वरः ।
टङ्कपाणिस्तथा चान्यष्ठाण्डबन्धश्च डामरः ।।५९७।।
ढेढकर्णो णवीकान्तस्तन्त्रीजिह्वस्तु थाविरः ।
दन्तुरो धनदश्चैव नागकर्णः प्रचण्डकः ।।५९८।।
फेत्कारो वीरसिद्धिश्च भ्रुकुटिर्मेघभासुरः ।
युगान्तो गौरवश्चैव लम्बोष्ठश्च वसन्तकः ।।५९९।।
शुकमुण्डः षडालास्यः सुमनो हूनकस्तथा ।
क्षपान्तकश्च पञ्चाशद्वर्णस्थाः क्षेत्रपालकाः ।।६००।।

एकलिङ्गादौ क्षेत्रपालविशेषास्तत्रैवोक्ताः—

शेषा वर्णविहीनास्तु क्षेत्रपालास्तथैव च ।
एकलिङ्गे च हुँकारः श्मशाने च भयावहः ।।६०१।।
महालक्ष्मीवने घोरो ज्वालामुखो वनोत्सवे ।
एकवृक्षवने वाऽथ विडालवदनो वसेत् ।।६०२।।
घण्टारवो गुह्यवासः पद्मखण्डे जरामरः ।
सङ्गमे भूरिधारौघः पद्मखण्डे जरामरः ।।६०३।।
निर्जरि श्रवणे वह्नौ निधाने मणिभद्रकः ।
रसक्षेत्रे धनाध्यक्षो यज्ञवाटेषु क्रोष्टकः ।।६०४।।
अरण्ये शम्बरं विद्यादुद्याने मकरस्तथा ।
चतुःषष्टिर्महाविद्याः पालयित्वा जगत् स्थिताः ।।६०५।।
तत्तत्क्षेत्रे सदा काले वलिपूजां निवेदयेत् ।।६०६।।

अथ कूर्मचक्रम् ।




यामले—

क्षेत्रमध्यं समाश्रित्य कूर्मचक्रं विचिन्तयेत् ।
कूर्मचक्रमविज्ञाय यः कुर्याज्जपयज्ञकम् ।।
तज्जपस्य फलं नास्ति सर्वानर्थाय कल्पते ।।६०७।।

मेरुतन्त्रे—

कूर्मचक्रमविज्ञातुर्महाविघ्नोऽभिजायते ।

सारसंग्रहे—

तच्चतुर्धा स्थितं लोके तत्प्रकारस्तथोच्यते ।।६०७।।
प्रथमस्तु परः कूर्मचक्रो देशगतस्तथा ।
ग्रामगो गृहगश्चेति चतुर्धा स व्यवस्थितः ।।६०८।।

तन्त्रराजे—

व्यञ्जनं देशकूर्मे स्याद् गृहकूर्मे स्वरास्तथा ।
ग्रामकूर्मे तद्द्वितयं परकूर्मे न तद्द्वयम् ।।६०९।।

गौतमीये—

देशं ग्रामं गृहं वाऽपि नवधा विभजेन्नरः ।
प्रागादिपश्चिमान्तं तु कादिमान्तानि विन्यसेत् ।।६१०।।
अक्षराण्यथ यादीनि तथाऽष्टौ कोष्ठयोर्न्यसेत् ।
ईशद्वयमधो मध्ये स्वरान् प्रागादि विन्यसेत् ।।६११।।

शसान्तास्तु दिशः पश्चान्नामाद्यक्षरतो भवेत् ।
तन्मुखं पार्श्वयोः पाणी कुक्षी पादौ ततस्ततः ।।
पुच्छमेकमथो मध्यं पृष्ठमेवं षडङ्गवान् ।।६१२।।

मेरुतन्त्रे—

परदेशग्रामगृहभेदात् कूर्मश्चतुर्विधः ।
वृत्तद्वयं प्रकुर्वीत नवकोष्ठकभेदितम् ।।६१३।।
कवर्गाद्याः सप्त लेख्याः पूर्वाशादिषु लक्षकौ ।
ऐशान्यां विलिखेन्मध्ये वृत्तकोष्ठे द्वयं द्वयम् ।।६१४।।
स्वराणां पूर्वतो लेख्यं श्रीबीजं मध्यकोष्ठके ।
प्राङ्मुखः परकूर्मस्तु सर्वदैव प्रजायते ।।६१५।।
देशनामादिमो वर्णो यस्यां दिशि व्यवस्थितः ।
देशकूर्ममुखं तस्यां दिशि स्याद् ग्रामकूर्मके ।।६१६।।
मुखद्वयं तु विज्ञेयं स्वराद् व्यञ्जनतस्तथा ।
गृहकूर्मस्य वदनमुदग्द्वारमुखं भवेत् ।।६१७।।
मुखस्य पार्श्वयोः पाणी कुक्षौ पादौ ततस्ततः ।
पुच्छमेकमथो मध्ये पृष्ठमेवं षडङ्गवान् ।।६१८।।

यामले—

दीपस्थानं समाश्रित्य कृतं कर्म शुभावहम् ।
चतुरस्त्रां भुवं भित्त्वा कोष्ठानां नवकं लिखेत् ।।६१९।।
पूर्वादिकोष्ठे विलिखेत् सप्त वर्गाननुक्रमात् ।
लक्ष्मीशस्वरान् युग्मक्रमाच्चैव लिखेत् ततः ।।६२०।।
दिक्षु पूर्वादितो यत्र क्षेत्राख्याद्यक्षरं स्थितम् ।
मुखं तस्य तु जानीयाद्धस्तावुभयतः स्थितौ ।।६२१।।
कोष्ठे कुक्षौ उभे पादौ द्वौ शिष्टं पुच्छमीरितम् ।
क्रमेणानेन विभजेन्मध्यस्थमपि साधकः ।।६२२।।
मुखस्थो लभते सिद्धिं करस्थः स्वल्पजीवनः ।
उदासीनः कुक्षिसंस्थः पादस्थो दुःखमाप्नुयात् ।।
पुच्छस्थः पीडयते मन्त्री बन्धनोच्चाटनादिभिः ।।६२३।।

गौतमः—

मुखे सर्वार्थसिद्धिः स्यात् करयोरल्पसिद्धयः ।
कुक्षौ तु नित्यं नैष्फल्यं पादयोर्नैव सिद्धयः ।।६२४।।
पुच्छे मृत्युस्तु नियतः पृष्ठे सर्वार्थसिद्धयः ।
तस्मात् तत् साधु विज्ञाय कुर्यात् सर्वं जपादिकम् ।।६२५।।

गृहकूर्मे गृहनामज्ञानप्रकारस्तु ज्योतिःशास्त्रे—

विस्तार आयामगुणैश्च भक्ते यच्छेषमायः स भवेद्ध्वजादिः ।।६२६।।
ध्वजो धूम्रश्च सिंहःश्वा सारमेयः खरो गजः ।
ध्वाङ्क्षश्चेति क्रमेणैव दायाष्टकमुदाहृतम् ।।६२७।।

प्रकारान्तरमपि—

विस्तारं च तथाऽऽयाममेकीकृत्य त्रिधा पुनः ।
मन्त्रसाधकगेहानामेकं चेत् प्रथमाक्षरम् ।।
किं तदा पुण्यतीर्थेन पुण्यक्षेत्राटनेन वा ।।६२८।।

प्रयोजनमिति शेषः ।

मेरुतन्त्रे—

क्षेत्रसाधकमन्त्राणामेकमेवाद्यमक्षरम् ।
यदि स्यात् स ध्रुवं मन्त्रः सर्वसिद्धिफलप्रदः ।।६२९।।

गौतमीये—

मन्त्राक्षरेण मैत्रश्च दीपनाम्नो भवेद्यदि ।
साधकस्य च नाम्ना च किं न सिद्ध्यति मन्त्रिणः ।।६३०।।
पञ्चाशद्वर्णरूपेण क्षेत्रेशा विभुविग्रहाः ।
तस्मात् तत् सगुणं क्षेत्रं सिद्धये स्यान्न चान्यथा ।।६३१।।
विगुणश्चेन्मुखस्थोऽपि न तेन सिद्धिमाप्नुयात् ।
तस्माच्चक्रं विचार्यैव मित्रं च सर्वसिद्धिदम् ।।६३२।।
यस्मिन् देशे द्वीपपतिः सगुणं नाममन्त्रयोः ।
तत्र यत्नेन गन्तव्यं सपीठो दुर्लभो मतः ।।६३३।।

कालिकोद्भवे—

स्थानसाधकयोर्नाम्नोरमैत्रं यत्र विद्यते ।
तदक्षशास्त्रतो ज्ञात्वा तत्तत् स्थानं परित्यजेत् ।।६३४।।

मैत्रामैत्रमुक्तं तन्त्रान्तरे—

अरित्वमद्वयस्योक्तं गकारेण परस्परम् ।
ऋद्वयस्य चकारेण मकारस्य खकारतः ।।६३५।।
ऌद्वयस्य यकोरेण पकारस्य च ऌद्वये ।
ओद्वयस्य षकारेण षकारस्यौयुगेन तु ।।६३६।।
जकारस्य ढकारेण ऊकारस्य खकारतः ।
उकारस्य तकारेण फकारस्य धकारतः ।।६३७।।
मकारस्य च रेफेण यकारस्य सकारतः ।
अरित्वमेषां वर्णानामन्येषां मित्रभावना ।।६३८।।
स्थानसाधकयोर्नाम्नोररित्वं यत्र विद्यते ।
तदक्षशास्त्रतो ज्ञात्वा साधको यत्नतस्त्यजेत् ।।६३९।।
यथा गर्गस्य वैरी स्यादट्टहासं महापुरम् ।
औड्डियानं षण्मुखस्य ऋजुभट्टस्य चक्रकम् ।।६४०।।
जयन्ती ढङ्कणस्यारिः खधार ऊझकस्य च ।
उकदेवस्य ताराख्यं फजेर्घूमाख्यमेव च ।।६४१।।
भद्रस्य रम्यकं सोमनगरं यज्ञशर्मणः ।
एवं क्रमेण विज्ञाय रिपुस्थानं त्यजेद्बुधः ।।६४२।।

मेरुतन्त्रे—

महारित्वे जीवनाशो वैरे स्याद्धननाशनम् ।
किञ्चिद्वैरे सुखाल्पत्वं तदिदानीं निगद्यते ।।६४३।।
अगौ ऋधौ झपौ जहौ मखौ जथौ इवौ उतौ ।
फधौ भरौ यसौ चेति महारी परिकीर्त्तितौ ।।६४४।।
ऋच्छौ ओद्वयषौ तद्वज्जटौ ऊषौ वधौ ढलौ ।
वैरं तु पञ्चमे वर्गे तत्किञ्चित् कटयोर्भवेत् ।।६४५।।
चटयोः पययोश्चापि तढयोर्ढशयोरपि ।
एकवर्गे यदा प्रीतिः स्ववर्गं द्विगुणं कुरु ।।६४६।।
स्थानवर्गयुतं तष्टमष्टभिश्चाय उच्यते ।
स्थानवर्गो द्विगुणितः स्ववर्गश्चाष्टशेषितः ।।६४७।।

स्थानाय उभयोः कार्यमन्तरं यस्य शेषकम् ।
यावत् स्थितं सोऽर्थदः स्यात् साधकोऽर्थप्रदो न सः ।।
वैरं तु पञ्चमे ... ... ... ...।।६४८।। इति ।

तदुक्तं ज्योतिःशास्त्रेऽपि—

अकचटतपयशवर्गाः खगेशमार्जारसिंहशुनाम् ।
सर्पाखुगजावीनां निजपञ्चमवैरिणामष्टौ ।।६४९।।

स्ववर्गादेर्द्विगुणीकरणादौ स्वरज्ञानप्रकारोऽपि तत्रैवोक्तः—

गजशरर्त्तयुगाश्वमहीगुणा
द्विसहिता मघवादिदिशः क्रमात् ।
गृहपतेरभिधापुरदिङ्मिता
नवहृता भवनस्य दशा च सा ।।६५०।। इति ॥

तन्त्रान्तरे—

रिपुत्वे निश्चिते तस्य द्वितीयार्णादि शोधयेत् ।
इत्थं स्थानगृहं कृत्वा तत्र मन्त्री वलिं हरेत् ।।६५१।।

गौतमीये—

द्वीपनाथं लिखेन्मध्ये पूजयेत तं विभावयेत् ।।६५२।।

तन्त्रे—

पूर्वादिनवकोष्ठेषु क्षेत्रेशाँस्तत्र पूजयेत् ।
अमृतः प्रथमे प्रोक्तो द्वितीये वृषभस्तथा ।।६५३।।
शैलराजस्तृतीये स्याच्चतुर्थ वासुकिः स्मृतः ।
अर्थकृत् पञ्चमे प्रोक्तः शक्तिकृत् षष्ठ ईरितः ।।६५४।।
पद्मयोनिः सप्तमे स्यान्महाशङ्खोऽष्टमे स्मृतः ।
छायाछत्रगणः प्रोक्तो नवमे मन्त्रिनायकैः ।।६५५।।

मेरुतन्त्रे—

अमृतो वृषभः शैलराजो वासुकिरेव च ।
अर्थकृच्छक्तिकृत् पर्वकाष्ठादौ वलिनाऽर्चयेत् ।।६५६।।
पद्मयोनिं महाशङ्खं छायाख्यं चापि मध्यमे ।
कूर्मपृष्ठे गृहं कृत्वा गृहस्थो जपमाचरेत् ।।६५७।।

यामले—

महापीठेषु शाक्तेषु कामरूपादिकेषु च ।
यदि कुर्यात् पुरश्चर्यां तदा कूर्मं न चिन्तयेत् ।।६५८।।

कामरूपादिपीठान्युक्तानि योगिनीहृदयादौ—

कामरूपं[1] च काशी च नैपालं पौण्ड्रवर्धनम् ।
काश्मीरं कान्यकुब्जं च पूर्णशैलं तथाऽर्बुदम्[2] ।।६५९।।
आम्रातवेश्वरैकाम्र त्रिस्रोतः[3] कामकोटकम् ।
कैलासं भृगुनगरं केदारश्चन्द्रपूरकम् ।।६६०।।
श्रीपीठमोङ्कारपीठं जालन्धरं च मालवम् ।
कुलान्तकं देवीकोटं गोरर्णं मारुतेश्वरम् ।।६६१।।
अट्टहासं च विरजं राजगृहं महापथम् ।
कोलागिरिर्मेलापुरं कालेश्वरं जन्तिका ।।६६२।।
उज्जयिनी विचित्रं[4] च क्षीरकं हस्तिनापूरम् ।
उड्डीशं च प्रयागाख्यं षष्ठीमाया जलेश्वरम् ।।६६३।।
मलयश्चैव श्रीशैलो मेरुर्गिरिवरस्तथा ।
माहेन्द्रं वामनं चैव हिरण्यपुरमेव च ।।६६४।।
महालक्ष्मीरुड्डियानं छायाछत्रमतः परम् ।
एते पीठाः समुद्दिष्टा मातृकारूपमास्थिताः ।।६६५।।

तन्त्रातरे । दाक्षायिण्या इत्यधिकृत्य—

योनेर्हृदो गुदाद्वामनेत्राद्वामश्रुतेरथ ।
दक्षकर्णात् तथा घ्राणाद्वामवक्षोरुहादपि ।।६६६।।
दक्षगण्डान्नखेभ्यश्च बलीपरिसरादथ ।
नाभेस्तथाऽङ्गुलीभ्यश्च दन्तेभ्यो दक्षपाणितः ।।६६७।।
वामगण्डान्मस्तकाच्च बाहोर्दक्षस्तनादपि ।
स्कन्धाच्च दक्षिणात् कक्षाद्वामकक्षात् तथोदरात् ।।६६८।।
तत ऊर्ध्वं बलेर्मध्यबलेस्तलबलेरथ ।
ततो वस्तेर्नितम्बाच्च जघनाद्दक्षिणोरुतः ।।६६९।।

---

१. कापुरस्थितमिति पाठः । २. अर्बुदं शैलविशेषः ।
३. त्रिस्रतो गङ्गा । ४. योगीनीति पाठः ।

वामोरुतो दक्षिणाच्च जानुतो वामजानुतः ।
जङ्घाकाण्डात् ततो दक्षाद्वामाच्च दक्षगुल्फतः ।।६७०।।
वामगुल्फाद्दक्षनेत्राद्दक्षाद्वामाच्च पार्ष्णितः ।
रक्तात् पित्तात् तथा मेदोजिह्वामज्जाभ्य एव च ।।६७१।।
दक्षिणात् पादुकाङ्गुष्ठाद्वामादपि च तेजसः ।
नाडीततेश्च छायायाः केशपाशादिति क्रमात् ।।६७२।।
तत्तत्स्थानेषु पतितात् सर्वसिद्धिकराणि वै ।
पीठानि चैकपञ्चाशत् कामरूपादिकानि च ।।६७३।।
अकारादिक्षकारान्तवर्णरूपाणि जज्ञिरे ।
अङ्गान्तरास्थिलोमभ्यो भूषणानां च संहतेः ।।
उपपीठान्यसंख्यानि प्रादुर्भूतानि सर्वतः ।।६७४।।

मेरुतन्त्रे—

कुरुक्षेत्रे प्रयागे च गङ्गासागरसङ्गमे ।
महाकाले च काश्यां च कूर्मस्थानं न चिन्तयेत् ।।६७५।।

गौतमीये—

पर्वते सिन्धुतीरे वा पुण्यारण्ये नदीतटे ।
यदि कुर्यात् पुरश्चर्यां तत्र कूर्मं न चिन्तयेत् ।।६७६।।

यामले—

अट्टाट्टके शक्तिपीठे तीर्थे क्षेत्रेषु वा पुनः ।
अरण्ये पर्वते पुण्ये कूर्मचक्रं न चिन्तयेत् ।।६७७।।

पुरश्चरणचन्द्रिकायाम्—

कूर्मचक्रमिति प्रोक्तं मन्त्राणां सिद्धिसाधनम् ।
मुखं तस्य समाश्रित्य वातालयसहां कुटीम् ।।६७८।।
चतुरस्रां चतुर्हस्तां हस्तोन्नतसुवेदिकाम् ।
चन्द्रातपपताकाद्यैस्तोरणैरप्यलङ्कृताम् ।।६७९।।
विविक्तामभिलिप्तां च प्राकारेणाभिवेष्टिताम् ।
निर्ममेच्च ततः कुर्यादेकभक्तं शुभे दिने ।।६८०।।
प्रातः स्नात्वा च गायत्र्या अयुतं प्रयतो जपेत् ।
ज्ञाताज्ञातस्य पापस्य क्षयार्थं प्रथमं ततः ।।६८१।।

गायत्री स्वेष्टदेवस्य । तदुक्तं मेरुतन्त्रे—

शुभे मुहूर्ते नक्षत्रे तिथौ स्नात्वा यथाविधि ।
विप्रान् सन्तर्प्य यत्नेन भोजनाच्छादनादिभिः ।।६८२।।
भूवित्तवस्त्रभूषाद्यैः संतोष्य गुरुमात्मनः ।
आरभेत पुरश्चर्यां तदनुज्ञा पुरः सरम् ।।६८३।।

सिद्धान्तसारे—

प्रातःकृत्यादिपूजान्तं कृत्वा तु जपमारभेत् ।।६८४।।

यामले—

प्रातःकृत्यमकृत्वा तु यो देवीं भक्तितोऽर्चयते ।
विफला तस्य पूजा तु शौचहीना यथा क्रिया ।।६८५।।

तत्रादौ प्रातःकृत्यं कुर्यात् । तदुक्तं सिद्धान्तसारे—

मुहूर्त्ते ब्राह्मणो विद्वान् मुक्तस्वापो निराकुलः ।
तल्पादुत्थाय शुक्लेऽब्जे शिरःस्थे श्रीगुरुं स्मरेत् ।।६८६।।

मेरुतन्त्रे—

निशायां: पश्चिमे यामे स्मरेदिष्टां च देवताम् ।
उत्थाय दक्षिणाङ्गेन वामपादं न्यसेद्भुवि ।।६८७।।
ततो गृहाद्बहिर्गत्वा कृत्वाऽऽवश्यकमादरात् ।
रात्रिवासः परित्यज्य वाससी परिधाय च ।।
आचम्य शुद्धदेहः सन् .... ...।।६८८।। इति ।

पुरश्चरणचन्द्रिकायाम्—

कृत्वाऽवश्यक्रियां धीर उपविश्यासने शुभे ।

यामले—

वद्धपद्मासनो मन्त्री समकायशिरोधरः ।।६८९।।

मेरुतन्त्रे—

ततः स्वमस्तके चिन्त्यं सहस्त्रदलपद्मकम् ।
कर्पूराभं स्मरेत् तत्र श्रीगुरुं निजरूपिणम् ।।६९०।।
सुप्रसन्नं लसद्भूषामण्डितश्वेतचन्दनम् ।
वराभयज्ञानमुद्रापुस्तकव्यावृतैः करैः ।।६९१।।
युक्तं श्वेताम्बरं शान्तं श्वेतपुष्पविभूषितम् ।
वामाङ्कगतया शक्त्याऽऽलिङ्गितं रक्तवर्णया ।।६९२।।

रक्तवस्त्राभरणया रक्तचन्दनमालया ।
वामे लीलाकमलयाऽऽलिङ्गन्त्या दक्षिणेन च ।।६९३।।
ध्यायेदन्तर्मुखं शान्तं योगिनं शिवरूपिणम् ।

कालानलतन्त्रे—

शुद्धस्फटिकसंकाशमज्ञानतिमिरापहम् ।।६९४।।
शुभांशुशुद्धसंकासं क्षौमद्वयविराजितम् ।
गन्धानुलेपनं शान्तं वराभयकरद्वयम् ।।६९५।।
वामोरुशक्तिसंयुक्तं रक्ताम्बरविभूषया ।
स्वशक्त्या दक्षहस्तेन धृतचारुकलेवरम् ।।६९६।।
वामे धृतोत्पलया च रक्तया च सुशोभितम् ।
परानन्दरसोंल्लासलोचनद्वयपङ्कजम् ।।६९७।।

मेरुतन्त्रे—

तत्पादपद्मयुगलश्रुतपीयूषधारया ।
अभिषिक्तः स्वस्य देहं एवं शिष्यो विचिन्तयेत् ।।६९८।।
अर्चयेद्गन्धपुष्पाद्यैर्वाह्यस्थैर्मानसैश्च वा ।
नामभिस्तस्य संकेतसंसिद्धैर्गुरुकीर्त्तिकैः ।।
प्रणम्येत्थं हृन्मनुना भावयेत् तल्लयं हृदि ।।६९९।।

तन्त्रान्तरे—

तदाज्ञां च समादाय संस्मरेदिष्टदेवताम् ।
मूलादिब्रह्मरन्ध्रान्तं कुण्डलीरूपतः स्थिताम् ।।७००।।
तडित्कोटिप्रभादीप्तां विशतन्तुतनीयसीम् ।
सार्धं त्रिवलयाकारां प्रसुप्तभुजगाकृतिम् ।।७०१।।

श्यामापद्धतौ—

प्रसुप्तभुजगाकारां मूलाधारनिवासिनीम् ।
सुषुम्णावर्त्मनोत्थाप्य परदेवीस्वरूपिणीम् ।।७०२।।
आनीय ब्रह्मरन्ध्रान्तं योजयेच्छम्भुना सह ।
सामरस्यं ततस्तस्या विभाव्य च विचक्षणः ।।
सुधावृष्टिं ततः कृत्वा पूर्वस्थाने नियोजयेत् ।।७०३।।

मेरुतन्त्रे—

ततस्तु मूलाधारादि ब्रह्मरन्ध्रान्तमुद्यतम् ।
तेजोदण्डं सुषुम्णान्तः सहस्ररविसन्निभम् ।।७०४।।
तदात्मकं मूलमन्त्रं ध्यात्वा तं तेजसा वृतम् ।
स्वशरीरं विचिन्त्येति प्राणायामत्रयं चरेत् ।।७०५।।
मूलमन्त्रेण मन्त्रस्य ऋष्यादिन्यासमाचरेत् ।
अङ्गन्यासान् विधायाथ हृदि देवं विचिन्तयेत् ।।७०६।।
मानसैरुपचारैस्तु पूजयित्वा मनुं जपेत् ।
यथाशक्त्याऽथ देवाय तं जपं च समर्पयेत् ।।७०७।।
स्तुत्वा प्रणम्य देवाज्ञां श्लोकैरेभिश्च याचयेत् ।।७०८।।

त्रैलाक्यचैतन्यमयादिदेव
श्रीशङ्कर त्वच्चरणाज्ञयैव ।
प्रातः समुत्थाय तव प्रियार्थं
संसारयात्रामनुवर्त्तयिष्ये ।।७०९।।
संसारयात्रामनुवर्त्तमानं
त्वदाज्ञया शङ्कर देवदेव ।
स्पर्द्धातिरस्कारकलिप्रमादा-
भयानि मां माऽभिभवन्तु नाथ ।।

इति संप्रार्थ्य देवेशम् ....   ....   .....।।७१०।।इति ।

अथाजपाविधिः । तदुक्तं वीरचूडामणौ—

हंसाख्याराधनं वक्ष्ये मन्त्रिणां हितकाम्यया ।
यस्य विज्ञानमात्रेण सर्वज्ञो भुवि जायते ।।७११।।
हंसात्मिकां भगवतीं जीवो जपति सर्वदा ।
अस्याः स्मरणमात्रेण जीवन्मुक्तो भवेन्नरः ।।७१२।।
ऋषिर्हंसः समाख्यातः परहंसश्च देवता ।
अव्यक्ता छन्दो गायत्री विनियोगश्च सिद्धिदः ।।७१३।।

सुरेन्द्रसंहितायाम्—

ऋषिर्हंसोऽव्यक्तपूर्वा गायत्री छन्द उच्यते ।
देवता परमादिस्तु हंसो हँ बीज उच्यते ।।७१४।।

अः शक्तिः कीलकः सोऽहं प्रणवस्तत्त्वमेव हि ।
उदात्तः स्वर इत्येवं मनोरस्य प्रकीर्त्तितः ।।
मोक्षार्थे विनियोगः स्यादेवं कुर्यात् सदा नरः ।।७१५।।

वीरचूडामणौ—

सूर्यात्मने च हृद्देवि सोमात्मने शिरस्तथा ।
निरञ्जने शिखा ज्योतिर्निराभासा तथा परे ।।७१६।।
अव्यक्तं नेत्रयोर्न्यस्य अनन्तोऽस्त्रे फडं यजेत् ।
एवं न्यासविधिं कृत्वा गणेशादौ समर्पयेत् ।।७१७।।

सुरेन्द्रसंहितायाम्—

हंसात्मिकां भगवतीं जीवो जपति सर्वदा ।
हकारेण बहिर्याति सकारेण विशेत् पुनः ।।७१८।।
अस्याः संबोधमात्रेण जीवन्मुक्तो भवेन्नरः ।
प्राणायामप्रभावेण जीवन्मुक्तस्तु जायते ।।७१९।।
एकविंशतिसाहस्रं षट्शताधिकमेव च ।
प्रजपेत् प्रत्यहं जीवो ब्रह्मानन्दमयीं पराम् ।।७२०।।
उत्पत्तिर्जप आरम्भो मृतिरस्य निवेदनम् ।
विना जपेन सततं जपो भवति सर्वदा ।।
एवं जपस्तु विज्ञातो गणेशादौ निवेदयेत् ।।७२१।।

योगशास्त्रे—

कुण्डलिन्याः समुद्भूता गायत्री प्राणधारिणी ।
प्राणविद्या महाविद्या यस्तां वेत्ति स योगवित् ।।७२२।।
हकारेण बहिर्याति शकारेण विशेत् पुनः ।
हंसो हंस इमं मन्त्रं जीवो जपति सर्वदा ।।७२३।।
षट्शतानि दिवा रात्रौ सहस्राण्येकविंशतिः ।
एतत्संख्यान्वितं मन्त्रं जीवो जपति सर्वदा ।।७२४।।
अजपानामगायत्री योगिनां मोक्षदायिनी ।
अस्याः संकल्पमात्रेण सर्वपापैः प्रमुच्यतें ।।७२५।।
अनया सदृशी विद्या अनया सदृशो जपः ।
अनया सदृशं ज्ञानं न भूतं न भविष्यति ।।७२६।।

हंसध्यानमुक्तं बालापद्धतौ—

**अग्नीषोमगरुद्वयं प्रणवकं बिन्दुत्रिनेत्रोज्ज्वलं**
**भास्वदुद्रमुखं शिवाङ्घ्रियुगलं पार्श्वस्थकालानलम् ।**
**उद्यद्भास्करकोटिकान्तिसदृशं हंसं जगद्व्यापिनं**
**नित्यानन्दमयं हृदम्बुजकुटीनीडे सदा भावयेत् ।।७२७।।**

तत्रैव—

**गणेश्वरो विधिर्विष्णुः शिवो जीवो गुरुस्तथा ।**
**षडेते हंसतामेत्य मूलाधारादिषु स्थिताः ।।७२८।।**

हंसतामेत्येति । सहस्रदलकमलकर्णिकावस्थितहंसरूपपरमामाभेदरूपं प्राप्यामित्यर्थः । एषा हंसैक्यभावना तत्रैवोक्ता—

**हंसो गणेशो विधिरेव हंसो हंसो हरिर्हंसमयश्च शम्भुः ।**
**हंसो हि जीवो गुरुरेव हंसो हंसोऽहमात्मा परमार्थरूपः ।।७२९।।**

हंसावस्थायामेषां स्थानभूतानि षड्वक्त्राण्युक्तानि योगसारे—

**गुदाच्च द्व्यङ्गुलादूर्ध्वं मेढ्राच्च द्व्यङ्गुलादधः ।**
**मूलाधारमिदं प्रोक्तं पीतवर्णं चतुर्दलम् ।।७३०।।**
**तोयवर्णादिभिर्वर्णैश्चतुर्भिः समलङ्कृतम् ।**
**गुदमेढ्रान्तरालस्थं मूलाधारं त्रिकोणकम् ।।७३१।।**

तथा—

**तदेव कामरूपाख्यं पीठं कामफलप्रदम् ।**
**स्वाधिष्ठानाह्वयं चक्रं लिङ्गमूले षडारकम् ।।७३२।।**
**बालार्कवर्णपृष्ठादिषडक्षरसमन्वितम् ।**
**नाभिदेशे स्थितं चक्रं दशारमणिपूरकम् ।।७३३।।**
**नीलप्रभाण्डादिवर्णैर्दशभिः समलङ्कृतम् ।**
**द्वादशारं महाचक्रं हृदयेनाहताह्वयम् ।।७३४।।**
**क्रोधीशाद्यक्षरोपेतमिन्द्रगोपसमप्रभम् ।**
**तदेतत् पूर्णगिर्याख्यं पीठं तव वरानने ।।७३५।।**
**कण्ठेदेशे विशुद्धाख्यं यच्चक्रं षोडशारकम् ।**
**धूम्रप्रभं षोडशभिः श्रीकठादिस्वरैर्युतम् ।।७३६।।**

**पीठं जालन्धरं नाम तिष्ठत्यत्रामरेश्वरि ।**
**आज्ञा नाम भ्रुवोर्मध्ये द्विदलं[1] चक्रकेशरम् ।।७३७।।**
**अन्त्यवर्णद्वयोपेतं शरच्चन्द्रसमद्युतिम् ।**
**उद्यानाख्यं महापीठमुपरिष्ठात् प्रतिष्ठितम् ।।७३८।।**
**सहस्रारं महापद्मं विसर्गाधः प्रतिष्ठितम् ।**
**अधोमुखं सर्ववर्णयुक्तमारक्तकेशरम् ।।७३९।।**
**एतदेव हि कैलाशसंज्ञकं चक्रमुच्यते ।**
**यत्र नित्योदितश्चन्द्रस्त्रिशृङ्गोऽमृतवर्षणः ।।७४०।।**

तथा—

**सहस्रारं तु देवेशि हंसरूपी परः शिवः ।**
**स्थानान्येतानि देवेशि शक्तिर्येषु प्रकाश्यते ।।७४१।।**

मूलाधारादौ गणेशादिध्यानमुक्तं बालार्चनपद्धतौ—

**वशषसदलयुक्ते सम्यगाधारपद्मे**
**तरुणमरुणगात्रं वारणास्यं त्रिनेत्रम् ।**
**अभयवरदहस्तं[2] चारुपाशाङ्कुशोद्यत्-**
**कररुचिरसमन्यं चिन्तयेदादिमूर्तिम् ।।७४२।।**

स्वाधिष्ठाने ब्रह्मध्यानं यथा—

**बभमयरल[3]संज्ञैरक्षरैः क्लृप्तपद्मे**
**सुरुचिरमुपदिष्टे पङ्कजैः सन्निधानम् ।**
**अभयवरदहस्तं कुण्डिकां चाक्षमालां**
**दधतममलमूर्तिं चिन्तयेद्विश्वयोनिम् ।।७४३।।**

मणिपूरचक्रे विष्णुध्यानं यथा—

**डाद्यैः फान्तगतैः प्रकल्पितदले पद्मे निविष्टं हरिं**
**मार्त्तण्डद्युतिमादिपूरुषमजं नारायणं चिन्मयम् ।**
**हस्तन्यस्तगदारिशङ्खकमलं पीताम्बरं कौस्तुभं**
**श्रीवत्साङ्कितमिन्द्रनीलसदृशं ध्यायेज्जगन्मोहनम् ।।७४४।।**

---

१. चक्रमुत्तममिति ४ पु. पा. ।
२. सिद्धिलक्ष्म्या समेतं दधत वरदमूर्त्तिं भावयेच्छ्रीगणेशम् इति ४ पु. पा. ।
३. युक्तं लिङ्गमूलस्थपद्मे इति ४ पु. पा. ।

अनाहतचक्रे शिवध्यानं यथा—

**काद्यैष्ठान्तगतैः प्रकल्पितदले पङ्केरुहे पार्वती-**
**कान्तं पूर्णशशाङ्ककोटिसदृशं प्रख्यं कपर्दोज्ज्वलम् ।**
**शान्तं टङ्कमृगाभयास्पदकरं नागादिभूषोज्ज्वलं**
**ग्रैवेयाङ्गदहारकुण्डलधरं चर्माम्बरं चिन्तयेत् ।।७४५।।**

विशुद्धचक्रे जीवात्मध्यानं यथा—

**मूर्त्यङ्गेषु निविष्टमङ्गरहितं शान्तं रुचा भासुरं**
**व्याप्ताशेषचराचरं गुणमयं भावेन सच्चिन्मयम् ।**
**मूर्त्तामूर्त्तममूर्त्तमेकममलं ज्योतिःप्रदीपोपमं**
**साक्षात्षोडशपत्रवर्णकमले जीवं परं चिन्तयेत् ।।७४६।।**

आज्ञाचक्रे गुरुध्यानं यथा—

**हक्षार्णद्वयचारुपत्रकमले दिव्ये जगत्कारणे**
**विश्वोत्तीर्णमनेकदेहनिलयं स्वच्छन्दमात्मेच्छया ।**
**तत्तद्योग्यतया स्वदेशिकतनुं भावैकसच्चिन्मयं**
**प्रत्यक्षाक्षरविग्रहं गुरुवरं ध्यायेत् परं दैवतम् ।।७४७।।**

सहस्रदलकमले परमात्मध्यानं यथा—

**विश्वव्यापिनमादिदेवममलं नित्यं परं निष्कलं**
**नित्योद्बुद्धसहस्रपत्रकमले लिप्यक्षरैर्मण्डिते ।**
**नित्यानन्दमनन्तपूर्णपरचित्सत्तास्फुरत्तात्मकं**
**स्मृत्वाऽऽत्मानमनुप्रविश्य कुहरे स्वच्दन्दतः सर्वतः ।।७४८।।**

एषां शक्तयोऽपि तत्रैवोक्ताः —

**शक्तिः सिद्धिर्गणेशस्य ब्रह्मणश्च सरस्वती ।**
**लक्ष्मीर्नारायणस्यापि पार्वती च पिनाकिनः ।।७४९।।**
**अविद्या चैव जीवस्य गुरोर्ज्ञानं परापरम् ।**
**मोक्षबीजात्मिका विद्या शक्तिश्च परमात्मनः ।।७५०।।**
**एवं ध्यात्वा परात्मानमिष्टदेवीस्वरूपिणम् ।**
**निवेदयेद्यथासंख्यं क्रमेणैवाजपाजपम् ।।७५१।।**
**षट्शतानि गणेशाय ब्रह्मणे षट्सहस्रकम् ।**
**विष्णवे षट्सहस्रं च षट्सहस्रं पिनाकिने ।।७५२।।**

**सहस्रमात्मने चैव गुरवे च सहस्रकम् ।**
**परात्मने सहस्रं च यथाविधि निवेदयेत् ।।७५३।।**

यथाविधि इति मानसैरुपचारैरभ्यर्च्य—

**सिद्धिशक्तिसहिताय गणेशाय षट्शहस्रसंख्याकमजपाजपमहं निवेदयामि नमः ।**

एवम्—

**सरस्वतीशक्तिसहिताय ब्रह्मणे षट्सहस्रसंख्याकमजापाजपमहं निवेदयामि नमः ।**

एवम्—

**लक्ष्मीशक्तिसहिताय[1] विष्णवे षट्सहस्रसंख्याकमजपाजपमहं निवेदयामि नमः ।**

एवम्—

**पार्वतीशक्तिसहिताय महेश्वराय षट्सहस्रसंख्याकमजपाजपमहं निवेदयामि नमः ।**

एवम्—

**अविद्याशक्तिसहिताय जीवात्मने सहस्रसंख्याकमजपाजपमहं निवेदयामि नमः ।**

एवम्—

**परापरज्ञानशक्तिसहिताय गुरवे सहस्रसंख्याकमजपाजपमहं निवेदयामि नमः ।**

एवम्—

**सूर्यकोटिप्रकाशाय चन्द्रकोटिसुशीतलाय विद्याशक्तिसहिताय परमात्मने सहस्रसंख्याकमजपाजपमहं निवेदयामि नमः ।**

इत्येवं निवेदयेदित्यर्थः ।

ताराविषये तु वीरचूडामणौ—

**आज्ञायां विद्युदाभायां शुभ्रौ दक्षौ नियोजयेत् ।**
**परमात्मनि पराशक्तौ सहस्रं च समर्पयेत् ।।७५४।।**
**कर्पूरद्युतिसंराजत्सहस्रदलपङ्कजे ।**
**नीलात्मकं गुरुं ध्यायेत् सहस्रं च समर्पयेत् ।।७५५।।**

१. नारायणाय-इति २-३ पु. पा. ।

इति विशेष उक्तः । तथा—

ततः स्तुत्वा च नत्वा च संकल्प्य च विधानतः ।
तदाज्ञां च समादाय कुर्यादावश्यकीः क्रियाः ।।७५६।।

सकल्प्येति—

अद्यतनसूर्योदयादारभ्य श्वस्तनसूर्योदयपर्यन्तं श्वासोच्छ्वासरूपेण षट्शताधिकैकविंशतिसहस्रसंख्याकमजपागायत्रीजपमहं करिष्ये ।

इति संकल्प्येत्यर्थः ।

मेरुतन्त्रे—

प्रार्थयित्वा वरान् श्वासयुक्तं पादं निधापयेत् ।।७५७।।
समुद्रमेखले देवि पर्वतस्तनमण्डले ।
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ।।७५८।।

अथ शौचविधिस्तत्रैव—

ततो गृहाद् वहिर्याम्यां नैर्ऋतीं वा दिशं व्रजेत् ।
पदे पदे स्मरेदस्त्रं दूरे यायान्निजालयात् ।।७५९।।
अतीत्य वाणमात्रां तु भुवं ग्रामाद्विलोक्य च ।
कीटतोयादिरहितं शौचस्थानमिदं पठेत् ।।७६०।।
उत्तिष्ठन्त्वृषयो देवा गन्धर्वा यक्षराक्षसाः ।
परितस्त्यज्यतां स्थानं विण्मूत्रोत्सर्जनाय मे ।।७६१।।
अनेन मनुना लोष्टतृणैरुद्वास्य देवताः ।
कुर्यान्मलच्युतिं तत्र वाससा कं प्रवेष्ट्य च ।।७६२।।
खं दिशश्च न पश्येत शौचमुद्धृत्य वारिभिः ।
एका लिङ्गे गुदे सप्त दश वामकरे तथा ।।७६३।।
उभयोः सप्त दातव्यास्तिस्रोऽङ्घ्योपि मृत्तिकाः ।
मूत्रोत्सर्गे वामहस्ते लिङ्गे पञ्च च मृत्तिकाः ।।७६४।।
त्रिः करद्वितये चैका पादयोरथ वाऽऽचरेत् ।
गन्धलेपक्षयकरं मनोग्लानिहरं परम् ।।७६५।।
कुर्याद् द्वादशगण्डूषान् पुरीषोत्सर्जनोत्तरम् ।
मूत्रत्यागे तु चतुर आचमेत् त्रिस्ततः परम् ।।७६६।।

अथ दन्तधावनविधिस्तत्रैव—

अर्कन्यग्रोधखदिरकरम्भककुभादिजम् ।
कनिष्ठाग्रसमस्थौल्यं प्रगुणं द्वादशाङ्गुलम् ।।७६७।।
क्लीमुक्त्वा कामदेवाय सर्वजनप्रियाय च ।
नमोऽन्तस्थितिवर्णोऽयं मन्त्रो दन्तविशोधने ।।७६८।।
प्रक्षाल्य दन्तकाष्ठं च शुद्धदेशे पुरस्त्यजेत् ।
वक्त्रं मूलाणुना नित्यं क्षालयेत् सिद्धिहेतवे ।।७६९।।

तन्त्रान्तरे—

मन्त्रार्थं संस्मरँस्तीर्थं गत्वा स्नानं समाचरेत् ।

अथ स्नानविधिः—तदुक्तं मेरुतन्त्रे—

अथ पूजाहोमकर्मसिद्धये स्नानमुच्यते ।।७७०।।
शङ्कुनास्त्राभिजप्तेन शुचिस्थानात् तु मृतिकाम् ।
गृहोत्वाऽस्त्रेण संसिच्य यायाज्जलनिकेतनम् ।।७७१।।

तन्त्रान्तरे—

दर्भाँस्तिलान् गोमयं च समादाय व्रजेत् ततः ।
तर्जन्या रजतं धार्यं स्वर्णं धार्यमनामया ।।
एष एवं कुशः प्रोक्तो न दर्भा वनसंभवाः ।।७७२।।

रुद्रयामले—

त्रयो दर्भाः समुद्दिष्टाः सुवर्णै रजतैः कुशैः ।
तत्र शाक्ते द्वयं वाद्यमन्येषां तु त्रयो मताः ।।७७३।।
सुवर्ण रजतं चैव जपपूजादिकर्मसु ।
कुशकार्यकरं प्रोक्तं न तु वन्यकुशाः कुशाः ।।७७४।।

मेरौ—

तत्रादौ जलकूलं तु क्षालयेदस्त्रवारिणा ।
मृदं कृत्वा त्रिधा तत्र एकभागोपगं ततः ।।७७८।।
निधाय गोमयं दर्भांस्तिलाँश्चाप्यभिमन्त्रितान् ।
मृत्तिकागोमयाभ्यां च कट्यन्तं स्नानमाचरेत् ।।७७९।।
बहिरुद्धृततोयेन मलस्नानं ततः परम् ।
विधाय वैदिकं स्नानं तदङ्गतर्पणं तथा ।।७८०।।

ततस्तान्त्रिकस्नानस्य विधिरस्त्रेण मृत्तिकाम् ।
समादायास्त्रमन्त्रेण मन्त्रयित्वा तृणादिकम् ।।७८१।।
शिखामन्त्रेणापहृत्य त्रिर्मूलेनाभिमन्त्रयेत् ।
मूर्धादिपादपर्यन्तं विलिप्य प्रणमेज्जलम् ।।७८२।।
आधारः सर्वभूतस्य विष्णोरतुलतेजसः ।
तद्रूपाश्च ततो जातास्ता आपः प्रणमाम्यहम् ।।७८३।।
संमुखीकरणीं मुद्रां बुद्ध्वा प्राणं निरुद्ध्य च ।
निमज्ज्य तूष्णीमुत्थाय नाभिमात्रे जले स्थितः ।।७८४।।
तान्त्रिकस्नानसंकल्पं मासोल्लेखादिपूर्वकम् ।
कृत्वा तु मूलमन्त्रेण प्राणायामत्रयं चरेत् ।।७८५।।
विन्यस्य च षडङ्गानि कल्पयेत् तीर्थमग्रतः ।
चतुरस्रे हस्तमात्रे तज्जले परिकल्पिते ।।७८६।।
ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे ।
तेन सत्येन देवेश तीर्थं देहि दिवाकर ।।७८७।।
इति सूर्यं प्रार्थयित्वा क्रोमित्यङ्कुशमुद्रया ।
भित्वाऽर्कमण्डलं तस्मात् तीर्थान्यावाहयेदिह ।।७८८।।
गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु ।।७८९।।
एवमुक्त्वा तु तीर्थानि तस्मिँस्तोये नियोजयेत् ।
मूलमन्त्रेणाथ तीर्थशक्तिं तत्र समाह्वयेत् ।।
अर्कस्य मण्डलं धात्वा तन्मन्त्रेण च पूजयेत् ।।७९०।।
सर्वानन्दमयीमशेषदुरितध्वंसां मृगाङ्कप्रभां
त्र्यक्षामूर्ध्वकरद्वयेन दधतीं पाशं श्रृणिं वामतः ।
अन्तश्चामृतपूर्णहिमकलशौ मुक्ताक्षमालां वरां
गङ्गां सिन्धुसरिदद्वयादिसहितां श्रीतीर्थशक्तिं भजे ।।७९१।।

तीर्थशक्तिमन्त्रस्तन्त्रान्तरे—

आकाशा वह्निमारूढा बिन्दुनादविभूषिताः ।
षड्दीर्घस्वरसंभिन्ना सर्वानन्दमये पदम् ।।७९२।।

संबुद्ध्यन्तां तीर्थशक्तिमेह्येहि बह्निगेहिनी ।
एकविंशाक्षरः प्रोक्तस्तीर्थशक्तेर्महामनुः ।।७९३।।

मेरुतन्त्रे—

तज्जलं गाङ्गमन्त्रेण मन्त्रयेदष्टवारकम् ।
ततो नमो भगवति ब्रूयादम्बे ततोऽऽम्बिके ।।७९४।।
अम्बालिके महामालिन्येह्येहि भगवत्यथ ।
अरोषतीर्थालवाले मायाश्रीबीजमुच्चरेत् ।।७९५।।
शिवजटाधिरूढे च गङ्गे गङ्गाम्बिके द्विठः ।
गङ्गाविद्येयमाख्याता त्रिपञ्चाशद्भिरक्षरैः ।।७९६।।
भुवनेश्या समालोड्यामृतीकृत्य सुधाणुना ।
कवचेनावगुण्ठ्याथ संरक्ष्यास्त्रेण मन्त्रवित् ।।७९७।।
मूलेन देवतां तत्र साङ्गां सावरणां तथा ।
समावाह्य जले ध्यात्वा तत्पादद्वयनिर्गतम् ।।७९८।।
ध्यात्वा तीर्थं स्मरन्मूलमन्त्रं स्नायाज्जले त्रिशः ।
हृदि देवं स्मरन् पश्चात् सिञ्चेत् कं कुम्भमुद्रया ।।७९९।।
त्रिभिः श्लोकैर्मूलमन्त्रं तारकं बीजपूर्वकैः ।
सिसृक्षोर्निखिलं विश्वं मुहुः शुक्रं प्रजापते ।।८००।।
मातरः सर्वभूतानामापो देव्यः पुनन्तु माम् ।
अलक्ष्मीर्मलरूपा याः सर्वभूतेषु संस्थिताः ।।८०१।।
क्षालयन्ति निजं स्पर्शादापो देव्यः पुनन्तु माम् ।
यन्मे केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्धनि ।।८०२।।
ललाटे कर्णयोरक्ष्णोस्तमापो घ्नन्तु वो नमः ।
ततः स्वाहात्ममूलेन त्रिराचमनमारचरेत् ।।८०३।।

गन्धर्वतन्त्रे—

मूलं पठन्मूर्ध्नि तोयं मुद्रया कुम्भसंज्ञया ।
क्षिप्त्वा वारत्रयं पश्चादाचामेत् साधकाग्रणीः ।।८०४।।
आत्मविद्याशिवैस्तत्त्वैः .... .... इति ।

कुम्भमुद्रा वक्ष्यते मेरुतन्त्रे—

त्रिधा देवं च संतर्प्य तोयमध्यात् तटे व्रजेत् ।।८०५।।

धौतं वस्त्रयुगं धृत्वा प्रक्षाल्योरू करौ तथा ।
मृद्भिस्तत आचामेदेवं स्नानविधिः स्मृतः ।।८०६।।

अथ मन्त्रस्नानविधिस्तत्रैव—

मन्त्रस्नानं प्रकर्त्तव्यं शीतयोर्देशकालयोः ।
तोयाभावेऽगमे दुर्गे कार्येऽस्वास्थ्ये च वार्द्धके ।।८०७।।
प्रक्षाल्य पादावाचम्य प्रोद्धृतेन तु वारिणा ।
स्थानं दश दिशः प्राग्वत् संशोध्योपविशेत् ततः ।।८०८।।
अस्त्रं हस्ततले न्यस्य क्रमान्न्यासाँस्ततश्चरेत् ।
मातृकादीँस्तथा मूलमन्त्रन्यासानशेषतः ।।८०९।।
न्यासान्ते संस्पृशेत् तोयं मन्त्रस्नानमिदं वरम् ।
केवलादुदकस्नानात् संस्कारपरिवर्जितात् ।।८१०।।
प्रभासादिषु तीर्थेषु यत् फलं स्नातकस्य तु ।
ज्ञेयं दशगुणं तस्मान्मन्त्रस्नानस्य निश्चयात् ।।८११।।

अथ ध्यानस्नानं तत्रैव—

ध्यानस्नानमथो वक्ष्ये द्वाभ्यामपि परं च यत् ।
खस्थितं पुण्डरीकाक्षं मन्त्रमूर्त्तिं प्रभुं स्मरेत् ।।८१२।।
तत्पादोदकजां धारां निपतन्तीं स्वमूर्धनि ।
चिन्तयेत् सूक्ष्मरन्ध्रेण प्रविशन्तीं स्वकां तनुम् ।।८१३।।
तया संक्षालयेत् सर्वमेतद्देहगतं मलम् ।
तत्क्षणाद्विरजा मन्त्री जायते स्फटिकोपमः ।।८१४।।
इदं स्नानवरं मन्त्रस्नानाच्छतगुणं मतम् ।
मनसा यस्तु संशुद्धः सशुद्धः सर्वकर्मसु ।।८१५।।

पुण्डरीकाक्षमित्युपलक्षणम् । यस्य या देवता स तां स्मरेदिति वदन्ति। अथ मानसस्नानं तत्रैव—

अथ मानसिकं स्नानं मनसा मूलमन्त्रतः ।
प्राणायामं प्रकुर्वीत दृष्टतीर्थेषु भावतः ।।८१६।।

शैवागमेऽपि—

मनसा मूलमन्त्रेण प्राणायामपुरस्सरम् ।
कुर्वीत मानसं स्नानं सर्वत्र विहितं च यत् ।।८१७।।

मेरुतन्त्रे—

यद्वा शिवात्मकैर्मन्त्रैः कृत्वा तीर्थं शिवात्मकम् ।
मार्जनं संहितामन्त्रैः शिवस्नानमितीरितम् ।।८१८।।
स्नानपूर्वाः क्रियाः सर्वाः शुद्धाः सिद्धिं प्रयान्ति च ।
तस्मात् स्नानं पुरा कुर्यादिष्वेकं देहशक्तितः ।।८१९।।

अथ तिलकधारणविधिस्तत्रैव—

ततस्तु तिलकं कुर्याज्जातेर्वा दैवतस्य वा ।
यद्यच्छुभफलं तीर्थं मृद्भिर्वा भक्तिभावतः ।।८२०।।
ब्राह्मणस्योर्ध्वपुण्ड्रः स्यात् क्षत्रियस्य त्रिपुण्ड्रकम् ।
अर्धचन्द्रं तु वैश्यस्य शूद्राणां वर्त्तुलाकृतिः ।।८२१।।
ऊर्ध्वपुण्ड्रं मृदा कुर्यात् त्रिपुण्ड्रं चापि भस्मना ।
केशरेण च कस्तूर्या शेषे शीतं यथारुचि ।।८२२।।
वैष्णवस्योर्ध्वपुण्ड्रं स्यात् त्रिपुण्ड्रं शिवसेवितुः ।
अर्धचन्द्रो गणेशस्य देवीभक्तस्य वर्त्तुलम् ।।८२३।।
नारायणपरोयस्तु चन्दनस्य त्रिशूलकम् ।
भाले बिभर्त्ति वन्द्योऽसौ ब्रह्मविष्णुशिवात्मकम् ।।८२४।।

अथ विभूतिधारणविधिस्तत्रैवोक्तः—

भूतिदातुर्विभूतिः स्याद्विधिना विधृता यदि ।
यथाकथञ्चिद्विधृता भस्मसात्कुरुते जनम् ।।८२५।।
शिवाग्रे भस्म संग्राह्यमग्निहोमोद्भवं तु यत् ।
वैवाह्यग्न्युद्भवं वाऽपि पङ्कं शुचि सुगन्धि च ।।८२६।।
कपिलायां सकृच्छ्रेष्ठं गृहीतं गगने पतत् ।
न क्लिन्नं नापि कठिनं न दुर्गन्धिं न चोषितम् ।।८२७।।
उपर्यधः परित्यज्य गृह्णीयात् पतितं यदि ।
पिण्डीकृत्य शिवाग्नौ तु तत् क्षिपेन्मूलमन्त्रतः ।।८२८।।
अपक्वमपि पक्वं च संत्याज्यमसितं सितम् ।
आदाय वाससाऽऽलोडय भस्माधारे विनिःक्षिपेत् ।।८२९।।
भस्मसंग्रहणं कुर्याद्देवेऽनुद्वासिते सति ।
उद्वासने कृते यस्माच्चण्डभस्म प्रजापते ।।८३०।।

यद्वा द्विजा भस्म कुर्युः सव्येनानीय गोमयम् ।
वामेन पात्रे संयोज्याघोरमन्त्रेण निर्दहेत् ।।८३१।।
पुरुषेण समुद्धृत्य ईशानेन विशोधयेत् ।
इत्थं तु संस्कृतं भस्म अग्निरित्यादिमन्त्रितः ।।८३२।।
त्तद्रुद्रायेति यजुषा मन्त्रयेदुद्रसंख्यया ।
प्रणवाद्यैश्चतुर्थीहृदन्तैर्नामभिरंशकैः ।।८३३।।
पञ्चवर्णाद्यक्षराद्यैः भालांसोदरहृत्सु च ।
त्रिपुण्ड्रधारणं कुर्यात् मूर्ध्नि पञ्चाक्षरेण च ।।८३४।।
एभिश्च नामभिर्धार्यं पुनर्भस्म द्विजादिभिः ।
ब्रह्मा ललाटे विज्ञेयो हृदये हव्यवाहनः ।।८३५।।
नाभौ स्कन्दो गले पूषा रुद्रो दक्षिणबाहुके ।
आदित्यो बाहुमध्ये च शशी च मणिबन्धके ।।८३६।।
वामदेवो वामबाहौ बाहुमध्ये प्रभञ्जनः ।
मणिबन्धे च वसवः पृष्ठदेशे हरिः स्मृतः ।।८३७।।
शम्भुः ककुदि संप्रोक्तः परमात्मा शिरःस्मृतः ।
कस्तूर्यादिकसंयुक्तं भस्म शाक्तस्तु धारयेत् ।।८३८।।
अद्विजैर्मूलमन्त्रेण शिवपञ्चाक्षरेण च ।
त्रिपुण्ड्रं कारयेद्भाले ब्रह्मविष्णुशिवात्मकम् ।।८३९।।
मध्याङ्गुलिभिरादाय तिसृभिर्मूलमन्त्रितम् ।
अनामामध्यमाङ्गुष्ठैरथ वा स्यात् त्रिपुण्ड्रकम् ।।८४०।।

अथ सन्ध्याविधिः भैरवीतन्त्रे—

आचम्य प्राङ्मुखो भूत्वा उपविश्य च मन्त्रवित् ।
वैदिकीं तान्त्रिकीं कुर्यात् ततः सन्ध्यां समाहितः ।।८४१।।

मेरुतन्त्रे—

वक्ष्येऽथ तान्त्रिकीं सन्ध्यां मूलेनाचमनत्रयम् ।
शिखां बध्वा च मूलेन प्राणायामत्रयं चरेत् ।।८४२।।
अङ्गानि विन्यसेद्देहे करन्यासपुरःसरम् ।
अमृतीकृत्य पुरतो जलं च धेनुमुद्रया ।।८४३।।

अभिमन्त्र्य च मूलेन सप्तवारं ततः परम् ।
अकारादिक्षकारान्तैर्मातृकार्णैः सबिन्दुभिः ।।८४४।।
प्रत्यर्णं प्रोक्षयेन्मूर्ध्नि कुशैर्मूलेन च त्रिधा ।
देवं ध्यात्वाऽथ मनुविद्वानुमण्डलसंस्थितम् ।।८४५।।
आदाय तोयमामन्त्र्य बीजैर्भूतात्मकैस्तथा ।
लँ वँ रँ हँ इति च तान्येतैः सप्तधा जलम् ।।८४६।।
मन्त्रयित्वा पुनःसप्तवारं मूलेन मन्त्रयेत् ।
तज्जलं वामहस्तेन धार्यं तत्स्नुतबिन्दुभिः ।।८४७।।
दक्षहस्तेन संप्रोक्ष्य कं पठन्मूलमन्त्रकम् ।
हस्तव्यत्यासतो वामाचारी सेचनमाचरेत् ।।८४८।।
नासामाश्लिष्य शिष्टेन तेजोरूपेण तेन तु ।
प्रविश्यान्तर्गतं सर्वं मलं संशोध्य निर्गतम् ।।८४९।।
दक्षनासापुटेनैतत् स्मृत्वा दक्षिणहस्तकम् ।
वामभागे वज्रशिलां ध्यात्वाऽस्त्रेण च तत् क्षिपेत् ।।८५०।।
प्रक्षाल्य हस्तावाचम्य मूलमन्त्रेण मन्त्रवित् ।
गायत्र्य वाऽथ मूलेन दद्यादर्घत्रयं ततः ।।८५१।।
रविमण्डलसंस्थाय स्वेष्टदेवाय तर्पयेत् ।
जलेन मूलमन्त्रान्ते ह्यमुकं तर्पयामि च ।।८५२।।
उक्त्वा त्रिधा तर्पणीयं वामकैः कारणेन तु ।
इष्टदेवस्य गायत्रीमष्टाविंशतिसंख्यकाम् ।।८५३।।
जपेदभावे ब्राह्मी तु वैदिकं मतमाश्रितः ।
तान्त्रिकः शिवगायत्रीं जपेत् साऽथ निरूप्यते ।।८५४।।

अथ शिवगायत्री—

ॐ तन्महेशाय विद्महे वाग्विशुद्धाय धीमहि तन्नः शिवः प्रचोदयात् । इति ।

तन्त्रान्तरे—

ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात्—इति शिवगायत्री उक्ता ।

अथ गणेशगायत्री यामले—

ॐ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्ती प्रचोदयात् ।

अथ सूर्यगायत्री मेरुतन्त्रे—

ॐ सप्ततुरगाय विद्महे सहस्रकिरणाय धीमहि तन्नो रविः प्रचोदयात् ।

इयं तु सूर्यगायत्री जपतामिष्टदायिनी ।
भग्नानां राजपुत्राणां क्षत्रतेजोविधायिनी ।।८५५।।

अथ विष्णुगायत्री तत्रैव—

ॐ नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयात् ।

अथ नृसिंहगायत्री तच्चरणार्चनपद्धतौ—

ॐ नृसिंहाय विद्महे तीक्ष्णदंष्ट्राय धीमहि तन्नः कृष्णः प्रचोदयात् ।

अथ सुदर्शनगायत्री तत्रैव—

ॐ सुदर्शनाय विद्महे महाज्वालाय धीमहि तन्नश्चक्रः प्रचोदयात् ।

अथ हयग्रीवगायत्री तत्रैव—

ॐवागीश्वराय विद्महे हयग्रीवाय धीमहि तन्नो हंसः प्रचोदयात् ।

अथ श्यामागायत्री कुमारीतन्त्रे—

कालिकायै पदं चोक्त्वा विद्महे तदनन्तरम् ।
श्मशानवासिनी ङेन्ता धीमहीति ततो वदेत् ।।८५६।।
तन्नो घोरे पदं प्रोच्य प्रवदेच्च प्रचोदयात् ।
अस्याः प्रसादमात्रेण महापातककोटयः ।।
सद्यः प्रलयमायान्ति साधकस्य च नान्यथा ।।८५७।।

तथा—

महापातकयुक्तोऽपि प्रजपेद् दशधा यदि ।
सत्यं सत्यं महादेवि मुक्तो भवति तत्क्षणात् ।।८५८।।

भैरवतन्त्रे तु—

कामोपराक्षिणादान्तो दक्षिणा ङेयुता पुनः ।
विद्महे कूर्चबीजं च चामुण्डा ङेयुता ततः ।।८५९।।
धीमहीति वदेत् तन्नः काली प्रचोदयात् ततः ।
गायत्र्येषा मया प्रोक्ता सर्वतन्त्रेषु गोपिता ।।
यां विना सकला विद्या न सिद्ध्यन्ति कदाचन ।।८६०।।इत्युक्तम् ।

अथ नक्षत्रविद्यायाः कालिकार्णवे—

ऐँ भगवत्येकजटे विद्महे च पदं ततः ।
विकटदंष्ट्रे धीमहि तन्नस्तारे प्रचोदयात् ।।८६१।।

मालिनीतन्त्रे—

महोग्रायै च विद्महे तारायै धीमहि प्रिये ।
तन्नो देवी च शब्दान्ते धियो यो नः प्रचोदयात् ।।८६२।।

वीरचूडामणौ—

वाग्भवं च समुच्चार्य एकजटायै विद्महे ।
देवीं स्त्रीँ च समुच्चार्य नीलसरस्वत्यै धीमहि ।।
हृल्लेखां च समुच्चार्य ततस्तारे प्रचोदयात् ।।८६३।।

त्रिपुरसुन्दर्या ज्ञानार्णवे—

वाग्भवं त्रिपुरादेव्यै विद्महे तदनन्तरम् ।
कामबीजं समुच्चार्य कामेश्वर्यै च धीमहि ।।
तन्नः क्लिन्ने पदं चोक्त्वा वदेत् पश्चात् प्रचोदयात् ।।८६४।।

भेरव्यास्तत्रैव—

त्रिपुरां च तथा ङेन्तां विद्महे पदमुद्धरेत् ।
भैरव्यै च ततश्चोक्त्वा धीमहीति ततो वदेत् ।।८६५।।
ततो देवीपदं चोक्त्वा प्रचोदयादुदीरयेत् ।
गायत्री त्रैपुरा ख्याता वाग्भवाद्यं समुद्धरेत् ।।८६६।।

भुवनेश्वर्यास्तन्त्रान्तरे—

मायाबीजं समुच्चार्य भुवनेश्वर्यै च विद्महे ।
आद्यायै पदमुच्चार्य धीमहि तदनन्तरम् ।।
तन्नो देवी पंद प्रोच्य ततो देयं प्रचोदयात् ।।८६७।।

अथ छिन्नमस्तायास्तत्रान्तरे—

वैरोचन्यै विद्महे च छिन्नमस्तायै च धीमहि ।
तन्नो देवीपदं चोक्त्वा योजनीयं प्रचोदयात् ।।८६८।।

अथ धूमावत्याः—

धूमिति बीजमुच्चार्य धूमावती विद्महे ।
विवर्णा देवीपदतो धीमहि पदमुद्धरेत् ।।

अथ मातङ्ग्याः—

धूमादेव्यास्तु गायत्री तन्नो घीरे प्रचोदयात् ।।८६९।।

अथ श्यामागायत्री—

**ॐ शुकप्रियायै विद्महे श्रीकामेश्वरयै धीमहि तन्नः श्यामा प्रचोदयात् ।**

अथ वगलामुख्याः—

**स्थिरमायां समुच्चार्य वगलापदतो मुखी ।**
**विद्महे दुष्टपदतः स्तम्भनीपदमुच्चरेत् ।।**
**धीमहीति पदस्यान्ते तन्नो देवी प्रचोदयात् ।।८७०।।**

अथ लक्ष्मीगायत्री—

**महालक्ष्मीपदं प्रोच्य विद्महे तदनन्तरम् ।**
**महाश्रियै पदं चोक्त्वा धीमहीति पदं वदेत् ।।**
**तन्नः शब्दाच्छ्रीपदं च ततो दद्यात् प्रचोदयात् ।८७१।।**

गौरीगायत्री मेरुतन्त्रे—

**ॐ सुभगायै विद्महे काममालिन्यै धीमहि तन्नो गौरी प्रचोदयात् ।**

अथ गुह्यकालीगायत्री महाकालसंहितायाम्—

**क्रमेण वक्ष्ये गायत्रीं तत्तन्मन्त्रजपाय हि ।**
**त्रिपदा सा च विज्ञेया त्रिका त्रिपदिकाऽपि च ।।८७२।।**
**पदद्वयं ङेन्तमादौ शेषे चैव सुवन्तकम् ।**
**त्रिकत्रिपदिकस्यापि विशेषं वच्मि किं चन ।।८७३।।**
**सर्वादौ विद्महे ह्येवं मध्ये धीमहि चेत्यपि ।**
**सुवन्तीयपदस्यान्ते पदमेकं प्रचोदयात् ।।**
**तत्पूर्वं तत इत्येवमित्युद्धारो मयोदितः ।।८७४।।**

तथा—

**रावात् कपालिनी सिद्धिः कराली तदनन्तरम् ।**
**शेषे गुह्या भारतीयषोडशार्णस्य वै मनोः ।।८७५।।**
**करालिनी वधूवीजान्मुण्डमालिन्यतः परम् ।**
**देवी भवेत् सर्वशेषे गायत्री च्यावनी त्वियम् ।।८७६।।**
**फेत्कारिण्युग्रचण्डा च विकटदंष्ट्रा ततः परम् ।**
**शेषे चण्डी च हारीतोपासिता त्रिपदा त्वियम् ।।८७७।।**

तथा—

**अट्टाट्टहासिनी ह्यादौ घोरदंष्ट्रा ततः परम् ।**
**शेषे घोरा रामचन्द्रोपासिता त्रिपदा स्मृता ।।८७८।।**

अथ कामकलागायत्री तत्रैव—

ॐ अनङ्गाकुलायै विद्महे मदनातुरायै धीमहि तन्नः कामकलाकाली प्रचोदयात् ।

दुर्गागायत्री तन्त्रान्तरे—

ॐ कात्यायन्यै विद्महे कन्याकुमारी धीमहि तन्नो दुर्गा प्रचोदयात् ।

अथ कामगायत्री मेरुतन्त्रे—

ॐ कामदेवाय विद्महे पुष्पबाणाय धीमहि तन्नोऽनङ्गः प्रचोदयात् ।

अथ गरुडगायत्री तत्रैव—

सर्पभीतिहरीं वक्ष्ये गायत्रीं सर्वकामदाम् ।

ॐ सुपर्णाय विद्महे पक्षिराजाय धीमहि तन्नो गरुडः प्रचोदयात् ।

अथ हनुमद्गायत्री तन्त्रान्तरे—

हँ हनुमते विद्महे आञ्जनेयाय धीमहि तन्नो वीरः प्रचोदयात् ।

मेरुतन्त्रे—

.... .... .... मूलमष्टोत्तरं शतम् ।
जपित्वा चार्पयेद्देवे स्तुत्वा नत्वेष्टदेवताम् ।।८७९।।
सूर्यमण्डलतो देवं विन्यसेद्धृदये स्वके ।
ततो गुरुं च प्रणमेदिति सन्ध्या तु तान्त्रिकी ।।८८०।।
त्रिकालमेवं कर्त्तव्या सन्ध्यालोपात् फलं न हि ।
दैवतो यदि लोपश्चेत् तदा मूलं शतं जपेत् ।।
प्रायश्चित्ताय तां कृत्वा कुर्वीत समयागताम् ।।८८१।।

शैवागमेऽपि—

सन्ध्यालोपो न कर्त्तव्यः शम्भोराज्ञैवमेव हि ।
दीक्षितः सन्ध्यया हीनो न दीक्षाफलमाप्नुयात् ।।८८२।।

गौतमीये—

संक्षेपसन्ध्यामथ वा कुर्यान्मन्त्री ह्यशक्तितः ।
सायं प्रातश्च मध्याह्ने कृष्णं ध्यात्वा जपेन्मनुम् ।।८८३।।

कृष्णमित्युपलक्षणं स्वेष्टदेवतां ध्यात्वेत्यर्थः ।

सन्ध्यायां पतितायां वा गायत्रीं दशधा जपेत् ।।८८४।।

अथ तर्पणं मेरौ—

वैदिकं तर्पणं कृत्वा ततस्तान्त्रिकमाचरेत् ।
प्राणायामत्रयं कृत्वा मूलेन न्यासमाचरेत् ।।८८५।।
ऋष्यादित्रितयस्याथ पुरतो धेनुमुद्रया ।
वँ जपन्नमृतीकृत्य जलं तत्र सचक्रकम् ।।८८६।।
साङ्गं सावरणं देवं ध्यात्वा मूलं समुच्चरेत् ।
अमुकं तर्पयामीति प्रोच्य चाष्टोत्तरं शतम् ।।८८७।।
तदर्धमथवा विंशदष्टयुक्तं मुखाब्जके ।
देवस्यामृतबुद्ध्या तत्तीर्थतोयैः प्रतर्पयेत् ।।८८८।।
तदावरणदेवाँश्च तद्वदेकैकवारकम् ।
सन्तर्प्य देवं स्वहृदि तीर्थं सूर्ये विसर्जयेत् ।।८८९।।

नन्दिकेश्वरसंहितायाम्—

यावन्न दीयते चार्घं भास्कराय निवेदनम् ।
तावन्न पूजयेद्विष्णुं शङ्करं वा सुरेश्वरि ।।८९०।।

माहेश्वरीये—

संस्मृत्य भैरवं देवं मार्त्तण्डाख्यमुमापतिम् ।
मूलेन मनुना देवि सूर्यस्य मनुनाऽथ वा ।।८९१।।
मायाबीजं समुद्धृत्य सोऽहं तु विपरीतकम् ।
मार्त्तण्डभैरवं ङेन्तं प्रकाशशक्तिसंयुतम् ।।
एष तेऽर्घोऽग्निजायेति दद्यादर्घत्रयं सुधीः ।।८९२।।

मेरौ तु पूजागृहं गत्वा सूर्यार्घदानमुक्तं यथा—

गुरुं दिगीशांश्च खगान् नत्वा भाण्डकरं दधत् ।
जलपूर्णं व्रजेन्मौनी स्वेष्ठदेवं हृदि स्मरन् ।।८९३।।
एकान्तं निर्जनं यायान्मनोज्ञं दोषवर्जितम् ।
दिगन्तरं न वीक्षेत यावत् प्राप्नोति वै गृहम् ।।८९४।।
प्रदक्षिणं यज्ञवाटं कृत्वा पादौ च हस्तकौ ।
प्रक्षाल्याचम्य पूजाया गृहाद्दण्डान्तरे स्थितः ।।८९५।।
गृहे च द्वारदेशस्थः प्रणम्य मनसा गुरुम् ।
प्रणमेदिष्टदेवं स्वं दिक्पालानपि चेतसा ।।८९६।।

यत् पूर्वमर्जितं पापं तद्दिनेऽन्यदिनेऽपि वा ।
तत्पापस्यापनोदार्थं मन्त्रद्वयमुदीरयेत् ।।८९७।।
हे देव प्राकृतं चित्तं पापाक्रान्तमिदं मम ।
तन्निःसारय चित्तान्मे पापं फट् फट् च ते नमः ।।८९८।।
सूर्यः सोमो यमः कालो महाभूतानि पञ्च च ।
एते शुभाशुभस्येह कर्मणो नव साक्षिणः ।।८९९।।
हुँ फडिति ब्रुवन् क्रोधदृष्ट्या पश्येच्च पार्श्वयोः ।
एवं कृते प्रथमतः पापोत्सादनकर्मणि ।।९००।।
यत् स्यात्दृढतरं पापं तद्दूरे वाऽवतिष्ठते ।
अतीते पूजनस्थाने स्वं प्रयाति पुनश्च तत् ।।९०१।।
यत् स्यादल्पतरं पापं तन्नाशमुपगच्छति ।
पूजने त्यक्तपापस्य काममिष्टं क्षणाद्भवेत् ।।९०२।।
ततः प्रक्षाल्य पादौ च हस्तावाचम्य यत्नतः ।
दद्यादर्घं दिनेशाय तत्प्रकार इहोच्यते ।।९०३।।
गोमयेनोपलिप्तायां भूमौ कृत्वा तु मण्डलम् ।
सिन्दूरेण ततः पश्चादुपविश्य निजासने ।।९०४।।
प्राङ्मुखः प्रणमेदिष्टदेवतां भक्तितत्परः ।
प्राणायामत्रयं कृत्वा सूर्यमन्त्रेण मन्त्रवित् ।।९०५।।
ह्राँ ह्रीँ स इति सूर्यस्य त्र्यक्षरो मन्त्र उच्यते ।
विन्यस्य च तथेन्द्रादीन् ध्यात्वा सूर्यमनन्यधीः ।।९०६।।
पद्मद्वयाभयवरान् दधतं कराब्जै-
र्माणिक्यमौलिमरुणाङ्गरुचिं त्रिनेत्रम् ।
रक्ताम्बुजासनमशेषगुणैकसिन्धुं
भानुं समस्तजगतामधिपं भजामि ।।९०७।।
तत्तत्कल्पोक्तविधानेन पूजयेदुपचारकैः ।
पुरतो मण्डलं कृत्वा जलेन चतुरस्रकम् ।।९०८।।
निधाय तत्र साधारं सजलं ताम्रपात्रकम् ।
गन्धपुष्पाक्षतान् दर्भान् दूर्वासर्षपसंयुतान् ।।९०९।।

सतिलान्रक्तपुष्पाणि यवाँश्चापि प्रविन्यसेत् ।
सूर्यमन्त्रेण तत्पात्रं स्पृशन्नष्टोत्तरं शतम् ।।९१०।।
अभिमन्त्र्य च तत्पात्रं समुत्थाय करद्वयात् ।
मूर्धान्तं सूर्यमन्त्रेण दद्यादर्घं विचक्षणः ।।९११।।
ह्राँ ह्रीँ सः सग्रहराशिनक्षत्रपदमुच्चरेत् ।
ततश्च योगकरणपरिवृत्तासनेति च ।।९१२।।
संस्थित श्रीसूर्यायैष तेऽर्घं स्वाहा मनुः स्मृतः ।
चतुस्त्रिंशदक्षरोऽयं सूर्यस्यार्घनिवेदने ।।९१३।।
जपेत् ततो यथाश्यात्त्या सर्वमन्त्रमनन्यधीः ।
तदर्घाम्बुप्लुतं सूर्यं ध्यायेद्देशिकसत्तमः ।।९१४।।
स्तुत्वा प्रणम्य विसृजेन्मण्डलान्तं दिवाकरम् ।
तत उत्थाय विधिवद्द्वारपूजां समारभेत् ।।९१५।।

द्वारपूजाविधिस्तु दीक्षातरङ्गे उक्तः ।

अथ नित्यपूजाविधिः ।

क्रियासंग्रहे—

नित्यपूजामथो वक्ष्ये संक्षेपेण यथोदिताम् ।
पूजास्थानं समागम्य कुर्यादाचमनत्रयम् ।।
उपविश्यासने मन्त्री कुर्यात् संकल्पमादरात् ।।९१६।।

संकल्पस्तु—

अमुकदेवताप्रीतये तन्नित्यार्चनमहं करिष्ये-इत्येवंरूपः ।

तथा—

दद्यादर्घं दिनेशाय साक्षिणे सर्वकर्मणः ।
गुरुं गणपतिं नत्वा प्रणमेदिष्टदेवताम् ।।९१८।।
तालत्रयं पुरस्कृत्य बध्नीयाच्च दिशो दश ।
भूतशुद्ध्यादिकं कृत्वा प्राणायामं समाचरेत् ।।९१९।।
कुर्याच्च मातृकान्यासं मूलन्यासं तथैव च ।
हृदये देवतां ध्यात्वा मानसैरुपचारकैः ।।९२०।।
पूजयेद्देवतारूपमात्मानं मन्त्रवित्तमः ।
वाह्यस्थैरुपचारैश्च यजेन्नैवेद्यवर्जितैः ।।९२१।।

ततः कल्पोदिता मुद्रा दर्शयित्वा विधानवित् ।
अर्घादिकं च संस्थाप्य पूजाद्रव्याणि शोधयेत् ।।
यथोक्तां देवतां ध्यात्वाऽऽवाहयेन्मूलमन्त्रतः ।।९२२।।

मेरुतन्त्रे—

संस्थापनं सन्निधानं सन्निरोधं ततश्चरेत् ।
संमुखीकरणं चापि सकलीकरणं ततः ।।९२३।।
ततोऽवगुण्ठनं कार्यममृतीकरणं ततः ।
परमीकरणं कुर्यात् क्रमतः स्वस्वमुद्रया ।।९२४।।

क्रियासंग्रहे—

आवाहनादिका मुद्राः प्रदर्श्य स्थापयेदसून् ।
कल्पयेदुपचाराँश्च यथासंभवमादरात् ।।९२५।।
संपूज्य मूलमन्त्रेण प्रसूनाञ्जलिभिस्त्रिभिः ।
पूजयेद्विधिवन्मन्त्री यथोक्तावृतिदेवताः ।।९२६।।
साङ्गां सवाहनां सालङ्करणां च समुद्रिकाम् ।
सायुधां सपरीवारां देवतामर्चयेत् ततः ।।९२७।।
ततो जपेन्मूलमन्त्रमष्टोत्तरशतं सुधीः ।
तं जपं भक्तितो मन्त्री देवतायै निवेदयेत् ।।९२८।।
स्तुत्वा च विविधैः स्तोत्रैः साष्टाङ्गं प्रणमेद् भुवि ।
ततो वरान् प्रार्थयित्वा देवमुद्वासयेद्धृदि ।।९२९।।
निर्माल्यं शिरसि धार्यं देवतोच्छिष्टभोजिने ।
दत्वा भुञ्जीत नैवेद्यमेतन्नित्यार्चनं स्मृतम् ।।९३०।।

पूजायाः क्रममात्रमिदं दर्शितम् । अत्र यद्यत् कर्त्तव्यमुक्तं तत्तत् सर्वं दीक्षातरङ्गे द्रष्टव्यम् ।

अथ नित्यहोमविधिः

तदुक्तं सोमभुजगावल्याम्—

नाजप्तः सिद्ध्यते मन्त्रो नाहुतश्च फलप्रदः ।
नानिष्टो यच्छते कामान् तस्मात् त्रितयमाचरेत् ।।९३१।।
पूजया लभते पूजां जपात् सिद्धिर्न संशयः ।
विभूतिं चाग्निकार्येण सर्वसिद्धिं च विन्दति ।।९३२।।

ज्ञानार्णवे—

संकल्प्य परमेशानि नित्यहोमविधिं चरेत् ।।९३३।।

संकल्पस्तु—

अमुकदेवताप्रीतये एतावदाहुतीर्होष्यामि । इत्येवंरूपः ।

नीलतन्त्रे—

नित्यहोमं प्रवक्ष्यामि सवार्थं येन विन्दति ।
सपर्यां सम्यगापाद्य वलिं पूर्ववदाचरेत् ।।९३४।।
ततो जपं तर्पणं च स्मरेत् साधकसत्तमः ।
वलिं वैश्वादिकं चैव ब्राह्मणः समुपाचरेत् ।।९३५।।
विधिवदग्निमादाय क्रव्यादेभ्यो नमस्तथा ।
मूलमन्त्रं समुच्चार्य कुण्डे वा स्थण्डिलेऽपि वा ।।९३६।।
भूमौ वा संस्तरेद्वह्निं व्याहृतित्रितयेन तु ।
स्वाहान्तेन त्रिधा हुत्वा षडङ्गहवनं ततः ।।९३७।।
ततो देवीं समावाह्य मूलेन षोडशाहुतिम् ।
हुत्वा स्तुत्वा नमस्कृत्य विसृजेदिन्दुमण्डले ।।९३८।।

सारसंग्रहे—

इत्थं तु संहृते वह्नौ देवमावाह्य मन्त्रवित् ।
संपूज्य मूलमनुना पञ्चविंशतिमाहुतिम् ।।९३९।।
हुनेदाज्येन हविषा तिलैर्वा पायसैः शुभैः ।
तण्डुलैस्तिलसंमिश्रैः केवलैर्वाऽथ पुष्पकैः ।।९४०।।
अङ्गावरणदेवानामेकैकामाहुतिं हुनेत् ।
उद्वास्य देवं वह्निं च पूजास्थानं व्रजेत् ततः ।।९४१।।

अयं होमो नैवेद्यदानान्तरं पूजासमाप्त्यनन्तरं वा कार्यः ।

तदुक्तं माहेश्वरीये—

निवेदयित्वा नैवेद्यं वैश्वदेवं समाचरेत् ।
अर्चायां वा समाप्तायां होमं कुर्याद्विधानतः ।।
नित्ये नैमित्तिके काम्ये चैतदग्निमुखं स्मृतम् ।।९४२।। इति ।

अगस्त्यसंहितायाम्—

पूर्ववत् संस्कृते वह्नौ देवमावाह्य मन्त्रवित् ।

इति मेरुतन्त्रे चोक्तत्वादत्र वह्निसंस्कारः कर्त्तव्य एवेति श्रीविद्यापद्धतिकृतः ।

अग्न्याधानादिकं कर्म नित्यहोमे न विद्यते ।।९४३।।

इति वसिष्ठसंहितायावचनेन निषेधान्नित्यहोमे एवाग्निसंस्कारो नास्तीत्यन्ये। विधिनिषेधयोः श्रवणादैच्छिको विकल्पो यथा षोडशपञ्च-विंशाहुत्योरधिकल्प इति केचित्। सुधार्णवकृतस्तु-नीलतन्त्रोक्त एवात्र वह्नेः संस्कारः कर्त्तव्यो नाधिको विशेषवचनेने निषेधादित्याहुः ।

इति नित्यहोमविधिः ।

कुम्भसम्भवः

ततः सङ्कल्प्य कुर्वीत पुरश्चरणमादरात् ।।९४४।।

मेरुतन्त्रे—

प्रारभेत पुरश्चर्यां दीक्षोक्तदिवसे शुभे ।
प्रणम्यादौ गुरून् विप्रान् गणेशं परिपूज्य च ।।९४५।।
पुण्याहवाचनं कृत्वा कुशहस्तो वदेतिति ।
सूर्यः सोमो यमः कालः सन्ध्ये भूतान्यहः क्षपा ।।९४६।।
पवनो दिक्पतिर्भूमिराकाशं खेचरामराः ।
ब्राह्म्यशासनमाधाय कल्पन्तामिह सन्निधिम् ।।९४७।।
वदित्येत्थं ताम्रपात्रे कृत्वा कुशतिलाक्षतान् ।
उदङ्मुखस्तु संकल्पं कुर्यात् संवत्सरादिकान् ।।९४८।।
कामनान्तानुच्चरेत् तु त्रयोविंशतिसंख्यकान् ।
संवत्सरायने मासपक्षपञ्चाङ्गमेव च ।।९४९।।
नवग्रहस्थितिं घस्रभागं मौहूर्त्तिकं त्विति ।
स्वदेशभेदाँस्तत्तुल्यान् कामनासहितान् वदेत् ।।९५०।।
द्वीपेऽमुकेऽमुके खण्डेऽमुके वर्षे च नीवृति ।
अमुके चामुके क्षेत्रे गोत्रप्रवरमुच्चरेत् ।।९५१।।
स्वनामजातिनामान्तं द्विजाच्छर्म च वर्म च ।
गुप्ता दासोऽथामुकस्य मन्त्रस्य सिद्धिकामुकः ।।९५२।।
करिष्येऽहं पुरश्चर्यामेतत्संख्यजपात्मिकाम् ।
अद्यारभ्य दिनैरेतैरसति प्रतिबन्धके ।।९५३।।
करिष्ये इति संकल्पं मनसैव प्रकल्पयेत् ।
वदेद्वाचाऽभिलाषं च कर्मणा चोपपादयेत् ।।९५४।।

सनत्कुमारसंहितायाम्—

प्रणवं तत्सदद्येति मासपक्षतिथीरपि ।
अमुकगोत्रोऽमुकोऽहं मूलमुच्चार्य तत्परम् ।।९५५।।
सिद्धिकामोऽस्य मन्त्रस्य इयत्संख्याजपं ततः ।
दशांशं हवनं होमाद्दशांशं तर्पणं ततः ।
दशांशं मार्जनं तस्माद्दशांशं विप्रभोजनम् ।
पुरश्चरणमेवं हि करिष्ये प्रागुदङ्मुखः ।।९५६।।

नारदपञ्चरात्रे—

संपूज्याथ जपं कुर्याद्यावद्वै प्रहरद्वयम् ।।९५७।।

तन्त्रदीपे—

विधाय विधिवद्विद्वान् मण्डपं सुमनोहरम् ।
तस्मिन् कलशमारोप्य तीर्थतोयैः प्रपूजयेत् ।।९५८।।
निःक्षिप्य नवरत्नानि तत्र गन्धाष्टकं पुनः ।
आवाह्य पूजयेत् तत्र देवमावरणैः सह ।।९५९।।
कलशाग्रे जपेन्मन्त्री यावत् संख्या न पूर्यते ।
ततः पूर्णे समागत्य गुरुर्देवो विधानतः ।।९६०।।
अभिषिञ्चेच्छिष्यमूर्ध्नि कलशोदकवारिभिः ।
ततः शिष्यः प्रयत्नेन धनाद्यैस्तोषयेद्गुरुम् ।।९६१।।

दीक्षोक्तक्रमेण कलशं संस्थाप्य तत्र देवतामावाह्य यथाशक्तिसंपूज्य जपं कुर्यादित्यर्थः ।

पुरश्चरणचन्द्रिकायाम्—

एतान्यन्यानि पूजायां साधनानि बहून्यपि ।
उत्तमानि च मध्यानि न्यूनानि त्रिविधानि च ।।९६२।।
स्वस्थः समर्थः कुर्वीत उत्तमैरेव साधनैः ।
मध्यमो मध्यमैरेव न्यूनो न्यूनैस्तु साधनैः ।९६३।।
आपन्नश्चेत् समर्थोऽपि न्यूनैरेव समाचरेत् ।
पूजाकर्मविशेषेण देशकालानुसारतः ।।९६४।।
यथाशक्ति यथान्यायं यथालोकावगर्हितम् ।
पूजां विस्तरतः कर्त्तुं यो न शक्नोति साधकः ।।९६५।।

यदि वाह्येन्द्रवज्राद्यैः पूजयेदिष्टदेवताम् ।
अथ वा देवतामन्त्रं ध्यात्वा सम्यक् प्रपूजयेत् ।।९६६।।
अथ वा मानसीं कुर्यादात्मपूजामथापि वा ।
अथ वा केवलां पूजां वाह्यां कुर्याद्विचक्षणः ।।९६७।।

तथा—

पूर्वपूर्वस्य चाशक्त्या उत्तरोत्तरमाचरेत् ।
यद्येतदन्यथा कुर्यात् तदाऽनिष्टफलं स्मृतम् ।।९६८।।
प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तयेत् ।
न सांपरायिकं तस्य दुर्मतेर्जायते फलम् ।।९६९।।
इति विज्ञाय सामर्थ्यमेकं पन्थानमाचरेत् ।

कलशस्थापनाशक्तस्तु यन्त्रादौ पूजां कुर्यात् ।

तदुक्तं सिद्धान्तसारे—

कलशस्थापनाशक्तो यन्त्रादौ पूजनं चरेत् ।।९७०।।

आदिशब्देन प्रतिमाशिवलिङ्गशालग्रामादयः संगृह्यन्ते ।

तदुक्तं मेरुतन्त्रे—

गणेशसूर्यविष्णवीशदेवीनां पूजनं क्रमात् ।
दशस्थानानि देवानां पूजार्थं कल्पितानिं च ।।९७१।।
शिवलिङ्गे मणौ यन्त्रे शालग्रामे घटे रवौ ।
स्थण्डिलेऽग्नौ मूर्ध्नि हृदि स्थानेष्वेतेषु पूजयेत् ।।
भूमावेव कृता पूजा पुत्रायुर्धननाशिनी ।।९७२।।

तत्रैव—

ततः प्रणम्य च गुरुं पूजाचक्रं समुद्धरेत् ।
सुवर्णरचिते पीठे भूपाला वशवर्त्तिनः ।।९७३।।
रजतेन कृतं यन्त्रमायुरारोग्यकामदम् ।
ताम्रेण रचितं यन्त्रं सर्वैश्वर्यप्रदं मतम् ।।९७४।।
यन्त्रं तु स्फाटिकं स्वच्छं मनोभिलषितप्रदम् ।
माणिक्यरचितं यन्त्रं राज्यदं भुक्तिमुक्तिदम् ।।९७५।।
कृतं मरकतैर्यन्त्रं सर्वशत्रुविनाशनम् ।
लोहत्रयोद्भवं यन्त्रं सर्वशक्तिकरं मतम् ।।९७६।।

श्रीखण्डं शान्तिदं ज्ञेयं पुष्टिदं रक्तचन्दनम् ।
श्रीपर्णीपीठमुद्दिष्टं पूजार्थं धनराज्यदम् ।।९७७।।
वैद्रुमे बहुला संपद्भूर्यपत्रे चतुष्पदाः ।
गण्डकीभवपाषाणे भुक्तिर्मुक्तिरदूरतः ।।९७८।।
भूमौ सिन्दूररजसा रचितं सर्वकामदम् ।
सीसकांस्यादिषु कृते सम्पत्तिं सन्ततिं हरेत् ।।९७९।।
फलकायां पटे भित्तौ स्थापयेन्न कदाचन ।
स्थापितं यदि मोहेन नाशयेत् तद्धनं कुलम् ।।९८०।।
अब्ध्यङ्गुलसुविस्तारं प्राक्प्रत्यग्दक्षिणोत्तरम् ।
पलप्रमाणं कर्त्तव्यमर्चापीठं मनोहरम् ।।९८१।।
यवार्धोच्चं प्रकुर्वीत चतुरस्रं समन्ततः ।
तस्मिन् पीठे तु निर्माणं पूजाचक्रस्य कारयेत् ।।९८२।।

रत्नसागरे—

अब्ध्यङ्गुलेन स्वर्णस्य रजतस्य तथैव च ।
ताम्रस्य पूर्णसंख्यैव माणिक्यादौ यथेच्छया ।।९८३।।

मेरुतन्त्रे—

माणिक्यादिकपीठे तु मानन्यूनं न दोषकृत् ।
श्रीपर्णीचन्दनादीनामधिकं चेन्न दोषकृत् ।।९८४।।

एतद्भिन्ने तु रुद्रयामले—

एकतोलं द्वितोलं वा त्रितोलं वेदतोलकम् ।
स्वेच्छातोलं नरः कृत्वा प्रत्यवायं समश्नुते ।।९८५।।

स्वेच्छातोलमिति । तोलकचतुष्टयपरिमितेन स्वर्णादिना यन्त्रस्य निर्माणासंभवे स्वेच्छया तदधिकं न कुर्यादित्यर्थः ।

प्रसङ्गात् स्थिररेखयन्त्रप्रतिष्ठाविधिमाह मैरौ—

लग्ने शुभग्रहोपेतेऽनुकूलगुणशालिनि ।
प्रतिष्ठा कारयेदेषां स्वर्क्षतिथ्यादिकेक्षणे ।।९८६।।

तथा—

आदौ वेदोदितैर्मन्त्रैर्विप्रोऽग्न्युत्तारणं चरेत् ।
धातुनिर्मितयन्त्राणां मूर्त्तीनां च विशेषतः ।।९८७।।

अग्निः सप्तिं वाजमिति सप्तर्चा सप्तिरुच्यते ।
मुनिस्त्रिष्टुप छन्द उक्तं देवताऽग्निः प्रकीर्त्तितः ।।९८८।।
अग्निशब्देन रहितं सूक्तमेतच्छतं पठेत् ।
अभिषिञ्चेच्छुद्धतोयैस्ततः संपूर्णसूक्तकैः ।।९८९।।
अभिषिञ्चेच्छतावृत्त्याऽग्न्युत्तारणमिदं स्मृतम् ।

तथा—

क्षौद्राज्यदुग्धैः प्रथमं नारिकेलाम्भसा ततः ।।९९०।।
अभिषिञ्च्याथ तोयेन क्वथितेनाक्षरौषधैः ।
आवाह्याभ्यर्च्य तल्लग्ने चक्रं संस्थाप्य पूजयेत् ।।९९१।।
गन्धपुष्पैर्नवैर्धूपैर्दीपैर्नैवेद्यतर्पणैः ।
त्रिरात्रं पूजयेद्देवीं त्रिसन्ध्यं च यथाविधि ।।९९२।।

वामकेश्वरतन्त्रे—

भैरव्युवाच-

चक्रभेदं महादेव त्वत्प्रसादान्मया श्रुतम् ।
इदानीं श्रोतुमिच्छामि प्रतिष्ठाकर्मनिर्णयम् ।।९९३।।

श्रीशङ्कर उवाच-

शृणु देवि महाभागे जगत्कारिणि कौलिनि ।
यन्त्रप्रतिष्ठाकर्माङ्गसर्ववर्णविनिर्णयम् ।।९९४।।
स्नात्वा संकल्पयेन्मन्त्री गुरोरर्चनमाचरेत् ।
पञ्चगव्यं ततः कुर्याच्छिवमन्त्रेण मन्त्रितम् ।।९९५।।
तत्र चक्रं क्षिपेन्मन्त्री प्रणवेन समाकुलम् ।
तदुद्धृत्य ततश्चक्रं स्थापयेत् स्वर्णपीठके ।।९९६।।
स्पृष्ट्वा यन्त्रं कुशाग्रेण गायत्र्या चाभिमन्त्रयेत् ।
अष्टोत्तरशतं देवि देवताभावसिद्धये ।।९९७।।
आत्मशुद्धिं ततः कृत्वा षडङ्गैर्देवतां यजेत् ।
तत्रावाह्य महादेवीं जीवन्यासं च कारयेत् ।।९९८।।
उपचारैः षोडशभिर्महामुद्रादिभिस्तथा ।
फलैर्नैवेद्यताम्बूलैर्देवीं तत्र समर्चयेत् ।।९९९।।

पट्टसूत्रादिकं दद्याद्वस्त्रालङ्करणादिभिः ।
मुकुरं चामरं घण्टां यथायोग्यं महेश्वरि ।।१०००।।
सर्वमेतत् प्रयत्नेन दद्यादात्महिते रतः ।
ततो जपेत् सहस्रं च सकलेप्सितसिद्धये ।।१००१।।
वल्ल्यादिकं प्रदत्वा च प्रणमेच्चक्रराजकम् ।
अष्टोत्तरशतं हुत्वा संपाताज्यं विनिःक्षिपेत् ।।१००२।।
मूलमन्त्रं समुच्चार्य मन्त्री यन्त्राङ्गमाचरेत् ।।१००३।।
होमकर्मण्यशक्तश्चेद् द्विगुणं जपमाचरेत् ।
धेनुमेकां समानीय स्वर्णशृङ्गाद्यलङ्कताम् ।।
गुरवे दक्षिणां दद्यात् ततो देव्या विसर्जनम् ।।१००४।।

तदुक्तं शिवमन्त्रप्रसादः सिद्धान्तसंग्रहे—

पञ्चगव्येन संशोध्य स्नाप्य पञ्चामृतैः पृथक् ।
अष्टाभिस्तीर्थकलशैः स्नापयेन्मूलमन्त्रतः ।।१००५।।
ततोऽभिमन्त्रयेद्यन्त्रं गायत्र्या वक्ष्यमाणया ।
अष्टोत्तरशतं मन्त्री मूलेनापि तथैव च ।।१००६।।
यन्त्रराजाय विद्महे महायन्त्राय धीमहि तन्नो यन्त्रं प्रचोदयात् ।
ततो देवं समावाह्य प्राणान् संस्थाप्य मन्त्रवित् ।
उपचारैः षोडशभिः पूजयेदिष्टदेवताम् ।।१००७।।
अष्टोत्तरसहस्रं च संस्कृते हव्यवाहने ।
घृतेन जुहुयात् तत्र संपाताज्यं विनिःक्षिपेत् ।।१००८।।
ब्राह्मणान् भोजयेत् पश्चांत् साधको देवताधिया ।
एवं संसाधिते यन्त्रे देवः सन्निहितो भवेत् ।।१००९।।

मेरुतन्त्रे—

आवाह्याभ्यर्च्य तल्लग्ने चक्रं संस्थाप्य पूजयेत् ।
गन्धपुष्पैर्नवैधूपैर्दीपैर्नैवेद्यतर्पणैः ।।१०१०।।
त्रिरात्रं पूजयेद्देवीं त्रिसन्ध्यं च तथा निशि ।

वामाचारे कुलाचारे च यो विशेषस्तमाह—

मकारैः पञ्चभिर्युक्तं चरेयुर्वामिनोऽर्चनम् ।।१०११।।
निशायां शक्तिपूजां च दूतीयागं च कौलिकाः ।
एवं दिनत्रयं कृत्वा ततो नित्यक्रमं भजेत् ।।१०१२।।

एवं देवीप्रतिष्ठायां क्रमः सान्निध्यकारकः ।
स्त्रीशूद्राणां वामिनां च कौलिकानामयं विधिः ।।१०१३।।

तथा—

महापापं न कुर्वन्ति पशुवद्वेदमार्गगाः ।
अग्निः शुचिव्रततमः शुचिर्विप्रः शुचीरितम् ।।१०१४।।
अज्ञानतश्च लघुभिः सन्ध्यावन्दननाशितैः ।
पातकैस्तैर्न लिप्यन्ते तस्मात् ते पशवः स्मृताः ।।१०१५।।
वामेनोपासितं यन्त्रं तेषां दृष्टिपथे गतम् ।
तद्देवताक्षोभकरं विक्षिप्तः साधको भवेत् ।।१०१६।।
दक्षिणोपासितं यन्त्रं सूर्याग्निसमतेजसम् ।
पापिनां दृष्टिदहनमुलूकानां यथा रविः ।।१०१७।।
यथा नृभिर्दिनकरोदये सर्वं निरीक्ष्यते ।
दक्षसंस्थापितं यन्त्रं तथा पुण्यात्मनां मतम् ।।१०१८।।
सान्निध्यं सर्वदेवानामवश्यं मन्त्रतो भवेत् ।
मन्त्रस्तु बीजवत् प्रोक्तः प्रतिमाद्यं शरीरवत् ।।१०१९।।
सिद्धायामपि सामग्र्यां विना मन्त्रं फलं न हि ।

तथा—

दशाङ्गुलप्रमाणा वा तिथ्यङ्गुलमिताऽपि वा ।।१०२०।।
अभ्यर्च्य प्रतिमां विष्णोर्गृहेषु गृहमेधिभिः ।
पञ्चसूत्रसमायुक्तं शिवलिङ्गं समर्चयेत् ।।१०२१।।
गृहस्थानां भुक्तिमुक्तिधनारोग्यप्रदं तु तत् ।
लिङ्गस्य च विस्तारो यावांस्तावच्च दीर्घता ।।१०२२।।
लिङ्गस्य लिङ्गशालक्या जलहर्यास्तथैव च ।
लिङ्गपीठस्य पञ्चानां समता पञ्चसूत्रिका ।।१०२३।।

तत्रैव—

एकपीठे पृथक् पूजां विना यन्त्रं करोति यः ।
तन्त्रेण पूजयेद्यन्त्रं स दैवं शापमाप्नुयात् ।।१०२४।।
आवाह्य देवतामेकामर्चयेच्चान्यदेवताम् ।
अन्ययन्त्रेण पूजां वा देवता शापकारिणी ।।१०२५।।

पूजनं बहुमूर्त्तीनामेकपीठे भवेद्यदि ।
पृथक् चन्दनपुष्पाणि धूपदीपादि तन्त्रतः ।।१०२६।।

तन्त्रमपार्थक्यम् ।

खण्डिते स्फुटिते दग्धे भ्रष्टे मानविवर्जिते ।
व्यङ्गेऽनर्हपशुस्पृष्टे पतिते दुष्टभूमिषु ।।१०२७।।
अन्यमन्त्रार्चिते चैव पतितस्पर्शदूषिते ।
दशस्वेतेषु नो कुर्युः सन्निधानं दिवौकसः ।।१०२८।।

तत्रैव—

देवस्य मन्त्ररूपस्य यन्त्रव्याप्तिमजानताम् ।
कृतार्चनादिकं सर्वं व्यर्थं भवति शाम्भवि ।।१०२९।।

यन्त्रपदार्थ उक्तस्तत्रैव—

कामक्रोधादिदोषोत्थसर्वदोषनियन्त्रणात् ।
यन्त्रमित्याहुरेतस्मिन् देवस्तुष्यति पूजितः ।।१०३०।।

पुरश्चरणचन्द्रिकायाम्—

तत्तत्कल्पोक्तद्रव्येण विलिखेद्यन्त्रमुत्तमम् ।
सौवर्णे राजते ताम्रे पीठे भूर्जे परे भुवि ।।१०३१।।
विना यन्त्रेण चेत् पूजा देवता न प्रसीदति ।

यन्त्रलिखनद्रव्यमुक्तं मेरुतन्त्रे—

पूजायन्त्रं दक्षमार्गे तत्तद्गन्धाष्टकेन च ।।१०३२।।
लिखेद्वा केशरहिमरोचनाभिः समालिखेत् ।
वाममार्गे लिखेदाद्यपुष्पेण यदि यन्त्रकम् ।।१०३३।।
षण्मासं पूजनात् तत्र त्वरितं सिद्धिमाप्नुयात् ।
तदभावे तु रुधिरं महिषस्य प्रशस्यते ।।१०३४।।
तदभावे तु कुसुमं ग्राह्यं चैवापराजिताम् ।
तस्योर्ध्वभागे निःक्षिप्य घर्षितं रक्तचन्दनम् ।।१०३५।।

स्वतन्त्रतन्त्रे—

स्वर्णे वा राजते ताम्रे पाषाणे चाष्टधातुषु ।
स्वयम्भूकुसुमं कुण्डगोलोत्थरोचनागुरुः ।।१०३६।।
काश्मीरं मृगनाभिश्च कुलं च मलयोद्भवम् ।
एष गन्धः समाख्यातः सर्वदा चण्डिकाप्रियः ।।१०३७।।

एतेन गन्धयोगेन योनिचक्रं समालिखेत् ।

वीरपरमिदम् । रुद्रयामले—

ततः कुङ्कुमसिन्दूरैः कार्यं यन्त्रं तु योगिना ।।१०३८।।
सौवर्णे राजते ताम्रे स्फाटिके वैद्रुमै तथा ।
चक्रे यथोक्तविधिना पूज्या देवीनरोत्तमैः ।।१०३९।।

सारसंग्रहे—

ताम्रे द्वादशकं वर्षं स्फाटिकादौ तु सर्वदा ।
तेषां मध्ये स्फाटिकं तु सर्वसिद्धिप्रदं भवेत् ।।१०४०।।
यावज्जीवं सुवर्णं स्याद्रौप्यं द्वाविंशतिः प्रिये ।
ताम्रे द्वादशकं वर्षं तदर्धं भूर्जपत्रके ।।१०४१।।

इदं च स्थिररेखारूपयन्त्रपरम् ।

रुद्रायामलेऽपि—

ताम्रे लक्षगुणं प्रोक्तं रौप्ये कोटिगुणं भवेत् ।
सौवर्णेऽनन्तफलदं मण्यादौ किं वदामि ते ।।१०४२।।
विद्रुमे रचिते यन्त्रे पद्मरागेऽथ वा प्रिये ।
इन्द्रनीलेऽथ वैदूर्ये स्फाटिके मरकते तथा ।।१०४३।।
धनं पुत्रं तथा दारान् यशांसि लभते ध्रुवम् ।

गौरीयामले—

चातुर्विध्यं हि चक्रस्य प्रस्ताराश्च भवन्ति हि ।।१०४४।।
भूकूर्मपद्मप्रस्तारा मेरुश्चापि तथाविधः ।
निम्नरेखासमायोगो भूप्रस्तारो मयोदितः ।।१०४५।।
कूर्मपद्मकप्रस्तार ऊर्ध्वरेखं मयोदितम् ।

सौत्रामणीतन्त्रे—

ऋजुलेखे भवेल्लक्ष्मीर्वक्ररेखे दरिद्रता ।१०४६।।

कुलार्णवे—

आदिरूपाच्च विम्बस्य पूजायां च विशेषतः ।
साधकस्य च विश्वासाद्देवतासन्निधिर्भवेत् ।।१०४७।।

यामले—

एवं यन्त्रं विनिर्माय तत्र देवीं प्रपूजयेत् ।।१०४८।।

देवीमित्युपलक्षणम् । स्वेष्टदेवतामित्यर्थः । पूजाप्रकारस्तु दीक्षातरङ्गे एवोक्तः । कुलार्णवे—

मनोऽन्यत्र शिवोऽन्यत्र शक्तिरन्यत्र मारुतः ।
न सिद्ध्यति वरारोहे कल्पकोटिशतैरपि ।।१०४९।।
मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः ।
शतकोटिजपेनापि तस्य सिद्धिर्न जायते ।।१०५०।।
लुप्तबीजाश्च ये मन्त्रा न दास्यन्ति फलं प्रिये ।
मन्त्राश्चैतन्यसहिताः सर्वसिद्धिकराः स्मृताः ।।१०५१।।
चैतन्यरहिता मन्त्राः प्रोक्ता नैव फलप्रदाः ।
सूतकद्वयसंयुक्ता न च मन्त्राः फलप्रदाः ।।१०५२।।

मन्त्रार्थो गुरुमुखाद्बोध्यः । मन्त्रचैतन्यं वक्ष्यते । योनिमुद्रा द्वितीयतरङ्गे उक्ता । सूतकादिज्ञानप्रकारस्तत्रैव ।

जातसूतकमादौ स्यादन्ते च मृतसूतकम् ।
सूतकद्वयसंयुक्तो यो मन्त्रः स न सिद्ध्यति ।।१०५३।।
गुरुकुण्डलिनीध्यानं विवाहः परिकीर्त्तितः ।
द्विरागमो भवेत् स्नानं संयोगः सन्ध्यया भवेत् ।।१०५४।।
अर्घदानं भवेद्गर्भो गायत्री त्वष्टमासिकम् ।
भूतशुद्ध्यादिप्राणान्तं तत्रावयवकल्पनम् ।।१०५५।।
देही भवेन्मातृकायाः प्राणायामस्तु संस्क्रिया ।
ध्यानोच्चारे महेशानि बालकोत्पत्तिरीरिता ।।१०५६।।
मन्त्रोच्चारणतो देवि जातसूतकमीरितम् ।
जातसूतकदोषस्य शमनार्थं महेश्वरि ।।१०५७।।
दशविंशति पञ्चाशद्यथाशक्त्या जपेच्छिवे ।
इदमादौ समादिष्टं मृतिं संश्रृणु सादरम् ।।१०५८।।
अङ्गज्ञानं च तादात्म्यं तदनन्तरमीरितम् ।
विसर्जनं महेशानि मृतसूतकमीरितम् ।।१०५९।।
मृतसूतकशान्त्यर्थं दशविंशति वा जपेत् ।
तेन तस्य निवृत्तिर्हि भवत्येव न संशयः ।।१०६०।।

यद्वा—

ब्रह्मबीजं मनोर्दत्वा आद्यन्ते परमेश्वरि ।
सप्तवारं जपेन्मन्त्रं सूतकद्वयमुक्तये ।।१०६१।।

ब्रह्मबीजं प्रणवः । अथ मन्त्राणां स्वापप्रबोधकालौ पञ्चरात्रे—

स्वापकाले तु मन्त्रस्य जपो न च फलप्रदः ।
स्वापकालो वामवहो जागरो दक्षिणावहः ।।१०६२।।
आग्नेयस्य मनोः सौम्यमन्त्रस्यैतद्विपर्ययः ।
प्रबोधकालं जानीयादुभयोरुभयोरपि ।।१०६३।।
ज्ञेया मन्त्रास्तु आग्नेया विद्याःसौम्याःप्रकीर्त्तिताः ।

मन्त्रविद्ययोर्भेदस्तु प्रथमतरङ्गे उक्तः। अथ मन्त्रशिखाज्ञानं तन्त्रान्तरे—

शृणु देवि परं तत्त्वं सर्वज्ञानोत्तमोत्तमम् ।।१०६४।।
येन विज्ञातमात्रेण क्षिप्रं विद्या प्रसीदति ।
मूलकुण्डे तु या शक्तिर्भुजङ्गाकाररूपिणी ।।१०६५।।
तद्भ्रमावर्त्तवातोऽयं प्राण इत्याभिधीयते ।
तं त्यक्त्वाऽव्यक्तमधुरं कूजन्ती सहसोत्थिता ।।१०६६।।
गच्छन्ती ब्रह्मरन्ध्रेण प्रविशन्ती पुनस्तनुम् ।
यातायातक्रमेणैव तत्र कुर्यान्मनोलयम् ।।१०६७।।
तेन मन्त्रशिखा जाता सर्वमन्त्रप्रदीपिनी ।
तमःपूर्णे गृहे यद्वन्न किञ्चित् प्रतिभासते ।।१०६८।।
शिखोपदेशः सर्वत्र गोपितः परमेश्वरि ।
विना येन न सिद्धिः स्याद्वर्षकोटिशतैरपि ।।
तस्माद्यत्नेन कर्त्तव्यं शिखाया भावनं मनोः ।।१०६९।।

अथ मन्त्रचैतन्यं तत्रैव—

मन्त्ररूपी भवेद्देवो देवरूपी गुरुर्भवेत ।
गुरुरूपी भवेदात्मा आत्मरूपी मनुर्भवेत् ।।१०७०।।
इति ते कथितं देवि मन्त्रचैतन्यमुत्तमम् ।
यस्य विज्ञानमात्रेण अद्वैतं ज्ञानमुत्तमम् ।।१०७१।।

अथ कुल्लुका यामले—

**श्रीदेव्युवाच**

**अथ वै कुल्लुकोत्पत्तिं कथयस्व ममाधुना ।**
**कुल्लुका कीदृशी नाथ सेतुर्वा देव कीदृशः ।।१०७२।।**
**कीदृशो वा महासेतुनिर्वाणं त्वथ कीदृशम् ।**
**अन्यद्वा कथितं यन्मे कीदृशं तद्वद प्रभो ।।१०७२।।**

**श्रीशिव उवाच**

**रहस्यमपि ते देवि कथ्यते शृणु साम्प्रतम् ।**
**विना येन महेशानि निष्फलं तु जपादिकम् ।।१०७३।।**
**कुल्लुका च तथा सेतुर्महासेतस्तुथैव च ।**
**निर्वाणं कुण्डलीषष्टीसर्वोत्पत्तिं शृणु प्रिये ।।१०७४।।**
**विद्यानां कुलपूज्यत्वात् कुल्लुका तेन कीर्त्तिता ।**
**विद्यासम्बन्धिदोषाणां भक्षयन्ती यतः शिवे ।।१०७५।।**
**तेनेयं कुल्लुकानाम्नी सर्वतन्त्रेषु गोपिता ।**
**विद्यासिद्ध्यर्णवे देवि येन पारं प्रगच्छति ।।१०७६।।**
**तेन सेतुर्महेशानि विद्यामार्गः प्रकीर्त्तितः ।**
**महाविद्याप्तिसंदर्शो महासेतुर्महेश्वरि ।।१०७७।।**
**महाविद्यार्णवस्याथ चैतन्यस्य प्रदर्शकः ।**
**महासेतुर्महादेवि महाविद्यास्वरूपधृक् ।।१०७८।।**
**देवतायास्तु निर्वाणं चैतन्यं यच्च कीर्त्तितम् ।**
**निर्वाणं कथितं भद्रे विद्यावाङ्मातृकार्णकैः ।।१०७९।।**
**निर्वाणं परमेशानि चतुश्चरणरूपधृक् ।**
**निर्वाणं च महेशानि परब्रह्मात्मिका मता ।।१०८०।।**
**चतुर्थं कथितं भद्रे विद्याचरणमीरितम् ।**
**पञ्चमी कुण्डली देवी यथावदवधारय ।।१०८१।।**
**मूलाधारादाविलान्तं विसन्तुतनीयसीम् ।**
**सर्वदेवस्वरूपां च सर्ववर्णप्रदीपिनीम् ।। १०८२।।**

महाकुण्डलिनीं देवीं समलीं कुण्डलीं पराम् ।

श्रीदेव्युवाच

क्रमेण दशविद्यायाः कुल्लुकाया विधिं वद ।।१०८३।।

श्रीशिव उवाच

पञ्चाक्षरी कालिकायाः कुल्लुका परिकथ्यते ।
कालीकूर्चं च धूमायाः फडन्ताः परमेश्वरि ।।१०८४।।
अघोराख्य ऋषिः प्रोक्तो विराट्छन्दः प्रकीर्त्तितम् ।
देवता कुल्लुका काली बीजं मायाभिधं मतम् ।।१०८५।।
कामशक्तिस्तथा कूर्चं कीलकं परिकीर्त्तितम् ।
षडदीर्घाढ्येन कामेन षडङ्गन्यास ईरितः ।।१०८६।।
ध्यानपूजादिकं सर्वं कालिकावत् समाचरेत् ।
मायावधूस्तथा कूर्चं तारिणीकुल्लुका मता ।।१०८७।।
तारिणीकुल्लुकायाश्च विरूपाक्ष ऋषिः स्मृतः ।
उष्णिक्छन्दः समाख्यातं देवता नीलतारिणी ।।१०८८।।
कूर्चवीजं तथा माया शक्तिर्वधूश्च कीलकम् ।
मायया तु षडङ्गानि सर्वं नीलसरस्वती ।।१०८९।।

त्रिशक्तिरत्ने—

अजप्त्वा कुल्लुकामन्त्रमस्मृत्वा श्रीपतिं हरिम् ।
यो जपेत् तारिणीमन्त्रं नरके स विलीयते ।।१०९०।।
जपित्वा कुल्लुकामन्त्रमष्टोत्तरशतं सुधीः ।
प्रजपेत् तारिणी पश्चान्नान्यथा सिद्धिमाप्नुयात् ।।१०९१।।

कुलसर्वस्वनामसहस्रनामस्तोत्रकथनान्तरम्—

हरेर्नाम न गृह्णीयान्न स्पृशेत् तुलसीदलम् ।।१०९२।।

इति वचनं तु वीरपरमिति ज्ञेयम् । उक्तस्तोत्रोपात्तहरेर्नामग्रहणं तु वीरकल्पेऽपि न निषिद्धम् ।

यानि नामानि सन्त्यत्र प्रसङ्गान्मुरवैरिणः ।
ग्राह्याणि तानि कल्याणि नान्यानि तु कदा चन ।।१०९३।।

इति तत्रैवोक्तत्वात्।

यामले—

छिन्नायाश्च महेशानि कुल्लुकाऽष्टाक्षरी भवेत् ।
वज्रवैरोचनीये च अन्ते वर्म प्रकीर्त्तयेत् ।।१०९४।।

अतिकाल ऋषिः प्रोक्तो गायत्रीछन्द ईरितम् ।
हँबीजं हुं तथा शक्तिः कीलकं रोचनी मता ।।१०९५।।
शिवषड्दीर्घयुक्तेन षडङ्गन्यासमाचरेत् ।
ध्यानपूजादिकं सर्वं छिन्नावत् समुपाचरेत् ।।१०९६।।
सुन्दर्याः कुल्लुका देवि संप्रोक्ता द्वादशाक्षरी ।
वाग्भवं कामराजं च लज्जा च त्रिपुरेपदम् ।।१०९७।।
भगवतीति पदं प्रोच्य तदन्ते ठद्वयं वदेत् ।
सुन्दरीकुल्लुकायास्तु ऋषिरानन्दभैरवः ।।१०९८।।
गायत्रीछन्द आदिष्टं वाग्भवं बीजमीरितम् ।
लज्जा शक्तिर्महेशानि कामबीजं च कीलकम् ।।१०९९।।
देवता त्रिपुरेशी च षडङ्गं त्रिद्वयेन च ।
ध्यानपूजादिकं सर्वं सुन्दरीवत् समाचरेत् ।।११००।।
संपत्प्रदाया प्रथमं बीजं श्रीभैरवीमनौ ।
विकराल ऋषिः प्रोक्तः पङ्क्तिच्छन्दः प्रकीर्त्तितम् ।।११०१।।
देवता भैरवीनाम्ना कुल्लुका परिकीर्त्तितम् ।
हँ बीजं सँ महाशक्तिर्मत्र कीलकं मतम् ।।११०२।।
षड्दीर्घाद्व्येन बीजेन षडङ्गन्यासमाचरेत् ।
मातङ्गीवगलालक्ष्मीधूमोच्छिष्टाक्रमे शृणु ।।११०३।।
तारकूर्चनारसिंहेः पञ्चानां कुल्लुका मता ।
ऋषिर्भैरवनामा च यावच्छन्दांसि पार्वति ।।११०४।।
देवतासर्वबीजादिस्वस्वदेवक्रमेण च ।
ध्यानपूजादिकं सर्वं स्वदैवतवदाचरेत ।।११०५।।
इयं ते कथिता देवि संक्षेपात् कुल्लुका मया ।
अज्ञात्वा कुल्लुकामेतां जपते योऽधमः कुधीः ।।११०६।।
पञ्चत्वमाशु लभते सिद्धिहानिः प्रजायते ।
मन्त्राः पराङ्मुखा यान्ति मन्त्रहानिश्च जायते ।।११०७।।
तथा जपादिकं सर्व निष्फलं नात्र संशयः ।
तस्मात् सर्वप्रयत्नेन यो जपेन्मूर्ध्नि कुल्लुकाम् ।।११०८।।

रुद्रयामले—

कुल्लुकां मूर्ध्नि संचिन्त्य हृदि सेतुं विचिन्तयेत् ।
महासेतुं विशुद्धौ च सहस्रारे सतुद्धरेत् ।।११०९।।
मणिपूरे तु निर्वाणं महाकुण्डलिनीमधः ।

अथ सेतुः मेरुतन्त्रे—

मन्त्राणां प्रणवः सेतुर्द्विजानां परिकीर्त्तितः ।
चतुर्दशस्वरोऽन्येषां चन्द्रानुस्वारसंयुतः ।।१११०।।

यद्वा रुद्रयामले—

विप्राणां प्रणवः सेतुः क्षत्रियाणां तथैव च ।
वैश्यानां तु फडर्णः स्यान्माया शूद्रस्य कथ्यते ।।११११।।
अजप्त्वा हृदि देवेशि यो वै मन्त्रं समुच्चरेत् ।
सर्वोषामेव मन्त्राणामधिकारो न तस्य हि ।।१११२।।
महासेतुं च देवेशि सुन्दर्या भुवनेश्वरि ।
कालिकायाः स्वबीजं तु तारायाः कूर्चबीजकम् ।।१११३।।
अन्यासां तु वधूबीजं महासेतुर्वरानने ।
आदौ जप्त्वा महासेतुं जपेन्मन्त्रमनन्यधीः ।।१११४।।
धनैर्धनेशतुल्योऽसौ वाण्या वागीश्वरोपमः ।
बुद्धौ कृतान्तसदृशो नारीणां मदनोपमः ।।
जपकालो भवेत् तस्य सर्वकालो न संशयः ।।१११५।।

मेरुतन्त्रे—

निःसेतुकं यथा तोयं क्षणान्निम्नं प्रसर्पति ।
मन्त्रस्तथैव निःसेतुः क्षणात् क्षरति यज्वनाम् ।।१११६।।
तस्मात् सर्वत्र मन्त्रेषु चतुर्वर्णा द्विजादयः ।
पार्श्वयोः सेतुमादाय जपकर्म समाचरेत् ।।१११७।।

अथ निर्वाणं रुद्रयामले—

अथ वक्ष्यामि निर्वाणं शृणु सावहिताऽनघे ।
प्रणवं पूर्वमुच्चार्य मातृकाद्यं समुच्चरेत् ।।१११८।।
अथ मूलं महेशानि ततो वाग्भवमुच्चरेत् ।
मातृकां च समस्तां च पुनः प्रणवमुच्चरेत् ।।१११९।।

एवं पुटितमूलं तु प्रजपेन्मणिपूरके ।
एवं निर्वाणमीशानि यो न जानाति पामरः ।।११२०।।
वर्षकोटिशतेनापि सिद्धिस्तस्य न जायते ।
तस्मात् सर्वप्रयत्नेन यदुक्तं तन्महेश्वरि ।।११२१।।
तत्तदाचर्यविधिवज्जपेन्मन्त्रमनुत्तमम् ।
ऋषिश्छन्दो देवता च बीजं शक्तिश्च कीलकम् ।।११२२।।
भावयेद्यत्नतो देवि ततः स्वेष्टादिकं जपेत् ।
एवं यदि जपेन्मन्त्री मन्त्रराजमनुत्तमम् ।।११२३।।
षण्मासात् सिद्धिमाप्नोति नात्र कार्या विचारणा ।
साक्षात् स एव जगतामधीशो नात्र संशयः ।।११२४।।
स धन्यः स च विज्ञानी स एव मन्त्रतत्त्ववित् ।
स एव निर्वृतो भूमौ विहरेत् तु यथासुखम् ।।
तस्य दर्शनमात्रेण पलायन्ते च वैरिणः ।।११२५।।
एवं कृत्वा प्रणवपुटितं यो जपेन्मन्त्रराजं
तन्निर्वाणं भुवनमहिते कुल्लुकानां च जप्त्वा ।
तेषां तद्वन्निखिलभुवनं सिद्धयोऽष्टौ च हस्ते
स्नेहादुक्तं रहसि वचनं जन्मजन्मान्तरेषु ।।११२६।।

अथ जिह्वाशोधनमन्त्रः यामले—

अपरैकं प्रवक्ष्यामि जिह्वाशोधनमुत्तमम् ।
यन्न कृत्वा महादेवि जपपूजा वृथा भवेत् ।।११२७।।
अशुद्धजिह्वया देवि यो जपेत् स तु पापकृत् ।
तस्मात् सर्वप्रयत्नेनन जिह्वाशोधनमाचरेत् ।।११२८।।

श्रीदेव्युवाच

देवदेव महादेव शूलपाणे पिनाकधृक् ।
पृथक्पृथङ्महादेव कथयस्व दयानिधे ।।
शोधनं सर्वविद्यानां मुखस्य शोधनं शुभम् ।।११२९।।

श्रीशिव उवाच

श्रीबीजं प्रणवं लक्ष्मीतारं श्रीप्रणवं तथा ।
इदं षडक्षरी विद्या सुन्दर्या दशधा जपेत् ।।११३०।।

भैरवाख्यां शृणु चार्वङ्गि मुखशोधनमुत्तमम् ।
प्रणवं च ह्सौँ बीजं प्रणवं सुरवन्दिते ।।११३१।।
इमं हि त्र्यक्षरं मन्त्रं दशधा प्रथमं जपेत् ।
शृणु सुन्दरि श्यामाया मुखशोधनमुत्तमम् ।।११३२।।
निजबीजत्रयं देवि प्रणवत्रितयं पुनः ।
कामत्रयं[१] वह्निबिन्दुरतिबीजयुतं त्रिकम् ।।११३३।।
एषा नवाक्षरी विद्या जिह्वाशोधनकारिणी ।
तारायाः शृणु चार्वङ्गि अपूर्वं मुखशोधनम् ।।११३४।।
जीविनी भुवना लज्जा भुवनेशी ततः प्रिये ।
त्र्यक्षरीयं महाविद्या विज्ञेयाऽमृतवर्षिणी ।।११३५।।
दुर्गायाः शृणु चार्वङ्गि मुखशोधनमुत्तमम् ।
द्वादशस्वरमुद्धृत्य बिन्दुयुक्तं त्रिकं तथा ।।११३६।।
अपरैकं प्रवक्ष्यामि बगलामुखशोधनम् ।
वाग्भवं भुवनेशानि वाग्बीजं सुरवन्दिते ।।११३७।।
मातङ्ग्याः शोधनं देवि अङ्कुशं वाग्भवं तथा ।
बीजं चाङ्कुशमेतद्धि विज्ञेयं त्र्यक्षरीयकम् ।।११३८।।
लक्ष्म्याश्च शोधनं देवि श्रीबीजं कमलानने ।
प्रणवं दान्तमुद्धृत्य वामकर्णविभूषितम् ।।११३९।।
पुनः प्रणवमुद्धृत्य विज्ञेयं त्र्यक्षरी मता ।
वालादीनां च अन्यासां प्रणवं मुखशोधनम् ।।११४०।।
स्त्रीशूद्राणां महेशानि औकारेण तु शोधनम् ।
मुखशोधनमात्रेण जिह्वाऽमृतमयी भवेत् ।।११४१।।
अन्यथा मलविड्न्युक्ता जिह्वा भवति सर्वदा ।
भक्षणे दूषिता जिह्वा मिथ्यावाक्येन दूषिता ।।११४२।।
कलहैर्दूषिता जिह्वा तत्कथं प्रजपेन्मनुम् ।
तच्छोधनमनाचार्य न जपेत् पामरः क्वचित् ।।११४३।।
शैवशाक्तवैष्णवानां सर्वेषामप्यवश्यकम् ।
अन्यथा प्रजपेन्मन्त्रं मोहेन यदि भामिनि ।।११४४।।

---

१. कामाक्षरम् इति-३पु. पा. ।

सर्वं तस्य वृथा देवि मन्त्रसिद्धिर्न जायते ।
अन्ते नरकमाप्नोति भवेत् साऽपि न चान्यथा ।।११४५।।
देवो यदि जपेन्मन्त्रमकृत्वा मुखशोधनम् ।
पतनं तस्य वै देवि किं पुनर्मर्त्त्यवासिनाम् ।।११४६।।

गौतमीये—

पशुभावे स्थिता मन्त्राः केवला वर्णरूपिणः ।
स्वस्वध्वनिप्रोच्चरिताः प्रभुत्वं प्राप्नुवन्ति ते ।।११४७।।
मन्त्राक्षराणि विण्मूत्रे प्रोतानि परिभावयेत् ।
तामेव परमेव्योम्नि परमामृतसंज्ञके ।।
दर्शयेदात्मसद्भावं पूजाहोमादिभिर्विना ।।११४८।।

रुद्रयामले—

जपं यस्य श्रृणोत्यन्यः स मन्त्रः शून्य उच्यते ।
ऋषिच्छन्दोदेवताभिः परित्यक्तो भुजङ्गमः ।।११४९।।

अथ मन्त्राणामवयवज्ञानम्

तदुक्तं विशुद्धेश्वरादौ—

मन्त्रं नीत्वा गुरोः पार्श्वे गुरुभक्तिपरायणः ।
मन्त्रश्रोत्रास्यहृन्नेत्रप्राणान् विज्ञाय तत्त्वतः ।।११५०।।
यत्नाच्च कीलकं ज्ञात्वा कुर्यान्मन्त्रपुरस्क्रियाम् ।
मन्त्राणां प्रणवः श्रोत्रं मुखं रेफः प्रकीर्त्तितम् ।।११५१।।
स्वराश्च चक्षुषीज्ञेया मन्त्रविद्भिरनन्तरम् ।
अतिरिक्ताश्च ये वर्णा हृदयं परिकीर्त्तितम् ।।११५२।।

भूतडामरयक्षडामरयोर्बीजकोशे—

श्रवणस्य हृदयनेत्रज्ञानान्मोक्षो मनोः सद्यः ।
सिद्धिः सर्वविधीनां स्यात् साक्षाच्छिव एव साधको वन्द्यः ।।११५३।।
श्रोत्रादीनां ज्ञानाभावे मन्त्रस्य ग्रहणमात्रात् ।
दारिद्र्यं च विपत्तिर्नरकप्राप्तिरयशोवंशः ।।११५४।।
दीनोऽतिदुःखभागी पराजितः शत्रुपीडितः शोकी ।
कुर्यादवस्थितचित्तो मन्त्री श्रोत्रादिविज्ञानम् ।।११५५।।

स्वेनातिभक्त्या श्रोत्रादीनां ज्ञानं गुरोर्भवति तदा।
कृतकृत्यो लोकत्रयपूजितोऽनवद्यो मन्त्री ।।११५६।।

तथा—

लयश्रोत्रासृगास्या हृच्छून्याः सेनदृशस्वराः ।
गर्जिनीधूम्रभैरव्योरभावे तु दृशः स्मृताः ।।११५७।।
मूलार्णं मुखमादिष्टं हृदयं स्वरशक्तयः ।
आदिमध्यावसानेषु पूर्वाभावे यथोत्तरम् ।।११५८।।

तथा—

सौरे तथा गाणपत्ये दौर्गे शैवेऽथ वैष्णवे ।
भौतिके च मनावास्यहृन्नेत्रं द्योतते यथा ।।११५९।।
मूलाक्षरे विचारोऽयं मूलार्णं बीजमुच्यते ।
विषे विचारः कर्त्तव्यो बीजे सति विषान्विते ।।११६०।।

तथा—

एभिरशेषमन्त्राणां हृन्नेत्रवदनानि च ।
असवोऽस्य परिज्ञेयाः सर्वतन्त्रेषु गोपिताः ।।११६१।।
बीजे रक्तमुखाः सर्वे मूलार्णं हृदयं स्वराः ।
दक्षवामदृशौ चण्डी विकला मध्यमानतः ।।११६२।।
बीजाभावे मनोविद्युन्नेत्रमास्यं मनोहरा ।
मूलार्णं हृदयं दण्डी प्राणोऽपि स्वरशक्तयः ।।११६३।।
चिन्तामणिनृसिंहाख्ये नेत्रास्यप्राणहृच्छ्रुती ।
यत्र बीजाक्षरं मन्त्रस्तत्र सर्वं स एव हि ।।११६४।।
प्रधानपूर्वपरगा विकला यत्र दृश्यते ।
तत्र नेत्रं विजानीयान्मुखं च क्षतजोक्षितम् ।।११६५।।
रक्तवर्जमनोर्मूलवर्णमास्यं प्रकल्पितम् ।
विद्युन्नेत्रं विनिर्दिष्टं विकला चण्डिवर्जिता ।।११६६।।
विद्युदेवास्यहृन्नेत्रं हृद्वक्त्रप्राणवर्जिते ।
श्रोत्रहीनो मनुः कायक्लेशदो विघ्नकारकः ।।११६७।।

तथा—

हृदये मूर्त्तिमास्थाय दृढचित्तः समाहितः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ।।११६८।।

**मनो ह्रत्वेन्द्रियार्थाच्च सर्वभावेन साधकः ।**
**पश्यतीति लयश्रोत्रं नान्यथा शृणुयात् ततः ।।११६९।।**

असृक् रेफः। शून्यं हकारः। सेनो विसर्गः। गर्जिनी इकारः। धूम्रभैरवी ईकारः । विषं प्रणवः । रक्तं रेफः । चण्डी विसर्गः। विकलाऽनुस्वारः । विद्युत् अकारः । मनोहरा स्वाहा । दण्डी यकारः । चिन्तामणिबीजं नृसिंहबीजं चाग्रे वक्ष्यते । क्षतजोक्षित रेफः ।

देवतामन्त्रयोर्वाच्यवाचकभाव उक्तस्तन्त्रान्तरे—

**वाच्यवाचकभावेन सर्वे मन्त्राः प्रतिष्ठिताः ।**
**यद्देवताया यो मन्त्रः सा वाच्या स च वाचकः ।।११७०।।**

अथ जपप्रारम्भः

मेरुतन्त्रे—

**गुरुं गणपतिं दुर्गां मातॄर्नत्वा च पूजनम् ।**
**कृत्वा स्वमूलमन्त्रेण प्राणायामत्रयं चरेत् ।।११७१।।**
**कृत्वा ऋष्यादिविन्यासं मन्त्रन्यासं तथैव च ।**
**ध्यायेच्च हृदये देवं पात्रे संस्थाप्य मालिकाम् ।।११७२।।**

उत्तरतन्त्रे—

**जपादौ पूजयेन्मालां तोयैरभ्युक्ष्य यत्नतः ।**
**विधाय मण्डलस्यां तां सव्यहस्तगतां च वा ।।**
**इष्टमन्त्रेण मालायाः प्रोक्षणं परिकीर्त्तितम् ।।११७३।।**

मेरुत्तन्त्रे—

**अर्घ्योदकेन संप्रोक्ष्य ततस्तां प्रार्थयेदिति ।**
**ॐ मां माले महामाये सर्वशक्तिस्वरूपिणि ।।११७४।।**
**चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ।**
**पूजयित्वा ततो मालां गृह्णीयाद्दक्षिणे करे ।।११७५।।**
**बीजं गणपतेः पूर्वमुच्चार्य तदनन्तरम् ।**
**अविघ्नं कुरु माले त्वां गृह्णीयात् तदनन्तरम् ।।११७६।।**
**हस्ते च दक्षिणे पश्चाच्चिन्तयेन्मनसा शिवम् ।**
**चिन्तयेच्च गुरुं मूर्ध्नि यथा वर्णादिकं भवेत् ।।११७७।।**
**मन्त्रं ध्यायेत् कण्ठमध्ये पीतवर्णं हिरण्मम् ।**
**महामायां च हृदये स्वात्मानं गुरुपादयोः ।।११७८।।**

आज्ञाचक्रे ततः पश्चाद्गुरोर्मन्त्रस्य चात्मनः ।
देव्याश्चाप्येकतां नीत्वा सुषुम्णावर्त्मना ततः ॥११७९॥
तत्त्वस्वरूपमेकं तद्यच्चक्रं प्रतिलङ्घयेत् ।
षट्चक्रेऽपि महामायां क्षणं ध्यात्वा प्रयत्नतः ॥११८०॥
लम्बयेन्मूलमन्त्रेण चादिषोडशचक्रकम् ।
आदिषोडशमध्यस्थां साधकानन्ददायिनीम् ॥११८१॥
चिन्तयेत् साधको देवीं जपकर्म समारभेत् ।
भ्रुवोरुपरि नाडीनां तिसृणां व्रात उच्यते ॥११८२॥
तद्व्रातं त्रिपथस्थानं षट्कोणं चतुरङ्गुलम् ।
रक्तश्च कुलयोगज्ञैराज्ञाचक्रमितीरितम् ॥११८३॥
कण्ठे तिसृणां नाडीनां वेष्टनं विद्यते नृणाम् ।
सुषुम्णेडापिङ्गलानां षट्कोणं तत्षडङ्गुलम् ॥११८४॥
तत्षट्चक्रमिति प्रोक्तं शुक्लं कण्ठस्य मध्यगम् ।
तिसृणामपि नाडीनां हृदये चैकता भवेत् ॥११८५॥
तत्स्थानं षोडशारं स्यात् सप्ताङ्गुलप्रमाणतः ।
तत् पीतमुक्तं योगज्ञैरादिषोडशचक्रकम् ॥११८६॥
ध्येयानामथ मन्त्राणां चिन्तितस्य जपस्य च ।
यस्मादाद्यं तु हृदयं तस्मादादि निगद्यते ॥११८७॥

क्रियासंग्रहे—

गुरुं च देवतां मन्त्रं तथा स्वात्मानमेव च ।
एकीभूतमिति ध्यायेदादिषोडशचक्रके ॥११८८॥

मेरुतन्त्रे—

एवं विचिन्त्य मध्याया मध्यभागे तु मालिकाम् ।
अस्पृशँस्तर्जनीं मालामङ्गुष्ठोग्रेण चालयेत् ॥११८९॥
पूर्वं मन्त्रं जपन् यस्तु संस्पृशेदपरं मणिम् ।
अङ्गुष्ठेन भवेत् तस्य निष्फलं स जपः सदा ॥११९०॥
मालां स्वहृदयासन्नां धृत्वा दक्षिणपाणिना ।
देवीं विचिन्तयन् जप्यं कुर्याद्वामेन न स्पृशेत् ॥११९१॥
एकचित्तः प्रशान्तात्मा ह्यक्षसूत्रकरः शुचिः ।
भुग्नग्रीवोन्नतः शान्तः कण्डूमीलनवर्जितः ॥११९२॥

सविसर्गं समात्रं च सबिन्दुं साक्षरं स्फुटम् ।
न द्रुतं वाऽपि विश्रान्तं क्रमान्मन्त्रं जपेत् सुधीः ।।११९३।।

यामले—

अतिद्रुतो[1]व्याधिहेतुरतिदीर्घो वसुक्षयः ।
अक्षराक्षरसंयुक्तं जपेन्मौक्तिकहारवत् ।।११९४।।

मेरुतन्त्रे—

तन्निष्ठस्तद्गतप्राणस्तच्चित्तस्त्परायणः ।
तत्पदार्थानुसन्धानं कुर्वन्मन्त्रं शनैर्जपेत् ।।११९५।।
जपाच्छ्रान्तः पुनर्ध्यायेद्ध्यानाच्छ्रान्तः पुनर्जपेत् ।
जपध्यानादियुक्तस्य क्षिप्रं मन्त्रः प्रसिध्यति ।।११९६।।

सनत्कुमारः—

मनः संहृत्य विषयान्मन्त्रार्थगतमानसः ।
न द्रुतं न विलम्बित्वं जपेन्मौक्तिकपङ्क्तिवत् ।।११९७।।
जपः स्यादक्षरावृत्तिर्मानसोपांशुवाचिकैः ।
धिया यदक्षरश्रेणी वर्णस्वरपदात्मिकाम् ।।११९८।।
उच्चरेदर्थमुद्दिश्य मानसः स जपः स्मृतः ।
जिह्वोष्ठौ चालयेत् किंचिद्देवतागतमानसः ।।११९९।।
किंचिच्छ्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः ।
मन्त्रमुच्चारयेद्वाचा वाचिकः स जपः स्मृतः ।।१२००।।
वाचिकाल्लक्षगुणित उपांशुः परिकीर्त्तितः ।
उपांशोः कोटिगुणितो मानसस्तु प्रशस्यते ।।१२०१।।

तन्त्रान्तरे—

मनसा यः स्मरेत् स्तोत्रं वचसा च मनुं जपेत् ।
उभयं निष्फलं याति भिन्नभाण्डोदकं यथा ।।१२०२।।

कुलार्णवे—

मानसः सिद्धिकामानां पुष्टिकामैरुपांशुकः ।
वाचिको मारणे चैव प्रशस्तो जप ईरितः ।।१२०३।।

मेरौ—

षट्कर्मकृद्वाचिकः स्यात् कायिकः सर्वसिद्धिकृत् ।
मानसः साध्येन्मोक्षं ततोऽन्यः क्षुद्रकर्मकृत् ।।१२०४।।

---

१. अतिह्रस्वो-इति ३-४-५ पु. पा. ।

जपेन देवता नित्यं स्तुयमाना प्रसीदति ।
जपात् सिद्धिर्जपात् सिद्धिर्जपात् सिद्धिर्नदूरतः ।।१२०५।।
यथा धनेन सन्तुष्टो जायते क्षुल्लकः प्रभुः ।
तथैव वलिदानेन पूजया क्षुद्रदेवताः ।।१२०६।।
यथा महागुणैर्वश्यो जायते गुणवान् प्रभुः ।
तथाऽहं त्वं विष्णुश्च जपादेव फलप्रदाः ।।१२०७।।

पाद्मे—

यक्षरक्षःपिशाचाश्च ग्रहाः सर्पाश्च भीषणाः ।
जापिनं नोपसर्पन्ति भयभीताः समन्ततः ।।१२०८।।

वैशम्पायनः—

यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा ।
जपो होमस्तथा दानं सर्वं तन्निष्फलं भवेत् ।।१२०९।।

रुद्रयामले—

अत्याहारः प्रयासश्च प्रजल्पो नियमाग्रहः ।
जनसंगौष्ठलौलश्च षड्भिर्मन्त्रो विनश्यति ।।१२१०।।
विश्वासास्तिक्यकरुणाश्रद्धानियमनिश्चयैः ।
सन्तोषः शुद्धकर्मादिगुणैर्युक्तो जपेत् प्रिये ।।१२११।।

सनत्कुमारः—

कृत्वा जपं पुरा चैवं तेजोरूपं समर्पयेत् ।
देवस्य दक्षिणे हस्ते कुशपुष्पार्घवारिभिः ।।१२१२।।

शक्तिविषये तु—

एवं जपं पुरा कृत्वा गन्धाक्षतकुशोदकैः ।
जपं समर्पयेद्देव्या वामहस्ते विचक्षणः ।।१२१३।।

इति यामलादौ प्रोक्तम् ।

तथा—

न न्यूनं नाधिकं चापि जपं कुर्याद्दिने दिने ।
यदि कुर्यात प्रमादात् तु नेष्टं फलमवाप्नुयात् ।।१२१४।।

मेरुतन्त्रे—

जपान्तेऽष्टोत्तरशतं जप्त्वा शिरसि धारयेत् ।
मालामन्त्रस्तु ह्रीँ सिद्ध्यै नमः सम्प्रार्थयेदिति ।।१२१५।।

त्वं माले सर्वदेवानां प्रीतिदा शुभदा मम ।
शिवं कुरुष्व मे भद्रे यशोवीर्यं च वर्द्धय ।।१२१६।।
ग्रहणे स्थापने पूजायां प्रोक्तो मालिकामनुः ।
पञ्चाक्षरस्ततो देवं स्वेष्टं सम्प्रार्थयेदिति ।।१२१७।।
गुह्यातिगुह्यगुप्ता त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देव त्वत्प्रसादाज्जगत्पते ।।१२१८।।
मूलमन्त्रं समुच्चार्य देवहस्ते निवेदयेत् ।
तं जपं चार्घतोयेन मध्याह्ने समये त्विदम् ।।१२१९।।
तदूर्ध्वं पूर्ववत् स्नात्वा विशेषेण विधानवित् ।
न्यासावसानमखिलं कर्म कुर्यात् पुरोदितम् ।।१२२०।।
पूजाग्निहोमपर्यन्तं ततश्च जपमारभेत् ।
यावद्दिनावसानं तु भूयः स्नात्वा ततो द्विज ।।१२२१।।
उपास्य पूर्ववत् सन्ध्यां देवं सम्पूजयेत् पुनः ।
विसृज्य भोजनं कुर्यात् सततं तारकोदये ।।१२२२।।

यामले—

नक्तं हविष्यं भुञ्जीत पुरश्चरणकृन्नरः ।१२२३।।

नक्तपदार्थ उक्तो भविष्ये—

मुहूर्त्तोनं दिनं नक्तं प्रवदन्ति मनीषिणः ।
नक्षत्रदर्शनान्नक्तमहं मन्ये[1]नराधिप ।।१२२४।। इति ॥

अत्र सूर्यमन्त्रपुश्चरण एव मुहुर्त्तोनदिने भोजनं कार्यम्—

आत्मद्विगुणच्छायायां यदा सन्तिष्ठते रविः ।
सौरं नक्तं विजानीयादन्यत्र निशि भोजनम् ।।१२२५।।इति मात्स्यात् ॥

मेरौ—

द्विजैस्तु भोजनं कार्यमुपस्तीर्याभिघार्य च ।
पावयेद्वैदिकैर्मन्त्रैः प्रोक्षणादिककर्मणा ।।१२२६।।
पुनर्मूलेन संमन्त्र्य भुञ्जीयाद्हृदयाणुना ।
मूलाभिमन्त्रितं तोयं भोजने तृषितः पिबेत् ।।१२२७।।
पलाशपत्रे भुञ्जीयान्मध्यपत्रविवर्जिते ।
तदभावे कदल्यां वा मधूके सर्जकेऽपि च ।।१२२८।।

---

१. गणाधिप इति २ पु. पा. ।

भुङ्क्त्वा शयीत शयने संशुद्धे वसुधातले ।
अहतास्तरणास्तीर्णे सदर्भशयने शुचौ ।।१२२९।।
मन्त्रिते मूलमन्त्रेण जितक्रोधो जितेन्द्रियः ।
अभीष्टदेवतां ध्यायन् प्राक्शिरस्को निशि स्वपेत् ।।१२३०।।
अर्धरात्रे समुत्थाय पादशौचं विधाय च ।
आचम्य देवं संस्मृत्य शीघ्रं सम्पूज्य पूर्ववत् ।।१२३१।।
जपं कुर्याद्यथाशक्तिरर्पयेच्च तथेश्वरे ।
स्वपेत् ततस्तु यद्दृष्टं स्पप्नं तं गुरवे वदेत् ।।१२३२।।
जपश्चायं वनस्थानां प्रोक्तोऽयं ब्रह्मचारिणाम् ।
देशाद्युपद्रवत्रासात् त्वरया चेत् समापनम् ।।१२३३।।
कर्त्तव्यं चेदयं कालः प्रोक्तोऽत्यावश्यकेऽपि च ।
आमध्याह्नं जपः श्रेष्ठो मध्यमः प्रहरत्रयम् ।।
सार्धं यामत्रयं हीनोऽऽवश्यके प्रोक्तलक्षणः ।।१२३४।।

वैशम्पायनः—

कल्पोक्तैव कृते सङ्ख्या त्रेतायां द्विगुणा भवेत् ।
द्वापरे त्रिगुणा प्रोक्ता कलौ सङ्ख्या चतुर्गुणा ।।१२३५।।

एकवीराकल्पे—

भावनारहितानां च शूद्राणां क्षुद्रचेतसाम् ।
चतुर्गुणो जपः प्रोक्तः सिद्ध्ये नान्यथा भवेत्।।१२३६।।

वाराहीतन्त्रे—

एषां जपे च होमे च सङ्ख्या नोक्ता मनीषिभिः ।
तेषामष्टसहस्राणि सङ्ख्या स्याज्जपहोमयोः ।।१२३७।।

क्रियासंग्रहे—

पूर्णायां जपसङ्ख्यायां विधिवत्संस्कृतानले ।
तैस्तैः कल्पोदितैर्द्रव्यैर्दशांशं हवनं चरेत् ।।१२३८।।
होमद्रव्येण विहिते सर्पिषा होममाचरेत् ।
होमव्यवस्था संप्रोक्ता पुरश्चरणसिद्धये ।।१२३९।।

होमार्थमग्निसंस्कारो होमविधिश्च दीक्षाविधौ विशदीकृत एवेति नेह वितन्यते।

## अथ तर्पणम्

कुलार्णवे—

तर्पणं तु ततः कुर्यात् तीर्थोदैश्चन्द्रमिश्रितैः ।
जले देवं समावाह्य पादाद्यैरुदकात्मकैः ।।१२४०।।
संपूज्य विधिवद्भक्त्या परिवारसमन्वितम् ।
एकैकमञ्जलिं तोयं परिवारान् प्रतर्पयेत् ।।
ततो होमदशांशेन तर्पयेत् परदैवतम् ।।१२४१।।

पुरश्चरणचन्द्रिकायाम्—

मूलमन्त्रं समुच्चार्य तदन्ते देवताभिधाम् ।
द्वितीयान्तामहं पश्चात् तर्पयामि नमोऽन्तकः ।।
तर्पणस्य मनुः प्रोक्तस्त्वङ्गादीनां च कल्पयेत् ।।१२४२।।

शक्तिविषये तु यामलादौ—

मन्त्रान्ते नाम चोच्चार्य तर्पयामि ततः परम् ।
वह्निजायान्तमन्त्रेण तर्पयेत् परदेवताम् ।।१२४३।।

तथा—

मूलमन्त्रं समुच्चार्य मन्त्रान्ते देवताभिधाम् ।
तर्पयामि नमः प्रोच्य तर्पयेत् कुलनायिकाम् ।।१२४४।।

इति वह्निजायान्तनमोऽन्तयोर्विकल्पः। वैष्णवेऽपि नमोऽन्त एव तर्पणमन्त्रः, तदुक्तं गौतमीये—

आदौ मन्त्रं समुच्चार्य श्रीपूर्वं कृष्णमित्यपि ।
तर्पयामि पदं चोक्त्वा नमोऽन्तं तर्पयेन्नरः ।।१२४५।।

तथा—

तर्पयामि पदं योज्यं मन्त्रान्तेष्वेषु नामसु ।
द्वितीयान्तेषु चेत्येवं तर्पणस्य मनुर्मतः ।।१२४६।।

## अथ मार्जनम्

नीलतन्त्रे—

नमोऽन्तं मन्त्रमुच्चार्य तदन्ते देवताभिधाम् ।
द्वितीयान्तामहं पश्चादभिषिञ्चाम्यनेन तु ।।
अभिषिञ्चेत् स्वमूर्धानं तोयैः कुम्भाख्यमुद्रया ।।१२४७।।

वैशम्पायनः—

तर्पणस्य दशांशेन नमोन्तं मन्त्रमुच्चरन् ।
अभिषिञ्चेत् स्वमूर्धानं जलैः कुम्भाख्यमुद्रया ।।१२४९।।

अन्यत्रापि—

मन्त्रान्ते नाम चोच्चार्य सिञ्चामीति नमः पदम् ।

अत्र मूलमन्त्रमुच्चार्य—

अमुकदेवतामभिषिञ्चामि नमः।।१२५०।। इति योजयन्ति ।

अथ ब्राह्मणभोजनम्

पुरश्चरणचन्द्रिकायाम्—

मार्जनस्य दशांशेन ब्राह्मणानपि भोजयेत् ।
ब्राह्मणामन्त्रणं कृत्वा भक्ष्यं संपाद्य षड्रसम् ।।१२५१।।
समावाह्यासनं दद्यान्मूलेनैवेष्टदेवताम् ।
ध्यात्वा चावाहनं कुर्याद्ब्राह्मणाँश्च यथोदितान् ।।१२५२।।
पाद्याद्यैरर्चयदिष्टदेवतारूपभूसुरान् ।
भक्षैर्नानारसोपेतैर्भोजयेद्देवताधिया ।।१२५३।।

मेरुतन्त्रे—

विप्राराधनमात्रेण व्यङ्गं साङ्गं प्रजायते ।
यानि यान्यपि कर्माणि हीयन्ते द्विजभोजनैः ।।१२५४।।
निरर्थकानि तानि स्युर्बीजान्युषरगाणि च ।
गुरुं सन्तोषयेत् पश्चाद्गोहिरण्याम्बरादिभिः ।।१२५५।।
गुरौ तुष्टे हि सन्तुष्टो मन्त्रः सिद्ध्यति मन्त्रिणः ।

तन्त्रान्तरे—

गुरवे दक्षिणां दद्याद्भोजनाच्छादनादिभिः ।।१२५६।।
गुरुसन्तोषमात्रेण सर्वसिद्धिर्भवेद्ध्रुवम् ।
गुरुमूलमिदं सर्वमित्याहुस्तन्त्रवेदिनः ।।१२५७।।

मेरुतन्त्रे—

पञ्चधाऽत्र विधिः प्रोक्तो जपसम्पूर्णकारकः ।
आद्यः कल्पः प्रतिदिनमामध्याह्नं जपं चरेत् ।।१२५८।।
तद्दशांशेन कल्पोक्तं द्रव्यैर्होमं प्रकल्पयेत् ।
तर्पणं मार्जनं कृत्वा तथा ब्राह्मणभोजनम् ।।१२५९।।

तद्दशांशं ततश्चायं प्रथमः कल्प ईरितः ।
अयं द्वितीयः कल्पस्तु लक्षमेकं जपं चरेत् ।।१२६०।।
होमादिकं तस्य कृत्वाऽग्रिमं लक्षं समारभेत् ।
अयं द्वितीयः कल्पस्तु लक्षमेकं जपं चरेत् ।
होमादिकं तस्य कृत्वाऽग्रिमं लक्षं समारभेत् ।।१२६१।।
अयं तृतीयः कल्पस्तु सम्पूर्णं जपमाचरेत् ।
पूर्णहोमे तर्पणादिपूर्वमेवाचरेदिति ।
चतुर्थस्तु तथा कल्पो दारिद्रैर्द्विगुणो जपः ।।१२६२।।
होमाद्यभावे कर्त्तव्यस्त्र्यादिनिघ्नैर्नृपादिकैः ।
पञ्चमस्तु तथा कल्पो यस्य देवस्य यत् प्रियम् ।।१२६३।।
तदेव द्विगुणं कार्यं शीघ्रं दैवततुष्टये ।
जपप्रियाः सर्वदेव्यो वाममार्गे वलिप्रियाः ।।१२६४।।
पानप्रियास्तु सिद्धान्ते कौलिके तु रतिप्रियाः ।
होमप्रियो महादेवो भास्करस्तर्पणप्रियः ।।१२६५।।
मार्जनं तु गणेशस्य विष्णोर्ब्राह्मणभोजनम् ।
प्रायश्चित्तं तु न कृतं तदाऽशुद्धो भवेद्द्विजः ।।१२६६।।
प्रायश्चितचतुष्केण द्विजाद्यैः क्षत्रियादिकाः ।

यामले—

होमकर्माद्यसक्तानां विप्राणां द्विगुणो जपः ।
इतरेषां तु वर्णानां त्रिचतुष्पञ्चसङ्ख्यया ।।१२६७।।

द्वैगुण्यादिहोमाद्यपक्ष एव सनत्कुमारः—

यद्यदङ्गं भवेद्धङ्गं तत्सङ्ख्याद्विगुणो जपः ।।१२६८।।
होमाभावे जपः कार्यो होमसंख्याचतुर्गुणः ।
विप्राणां क्षत्रियाणां च रससंख्यागुणः स्मृतः ।।१२६९।।
वैश्यानां वसुसङ्ख्याकमेषां स्त्रीणामयं विधिः ।
यं वर्णमाश्रितः शूद्रः स च तस्य विधिं चरेत् ।।१२७०।।

तन्त्रान्तरे—

होमाभावे द्विजानां च यः प्रोक्तः सुरभिर्जपः ।
तत्सुभ्रुवाश्च तद्भक्ताः शूद्राणां च स एव हि ।।१२७१।।

मेरुतन्त्रे—

अथ वक्ष्ये दरिद्रस्य मन्त्रसिद्धिर्यथा भवेत् ।
होमकर्मण्यशक्तस्य विप्रस्य द्विगुणो जपः ।।१२७२।।
इतरेषां तु वर्णानां त्रिगुणादि विधीयते ।
होमद्विगुणजपेन सम्पूर्णतर्पणं भवेत् ।।१२७३।।
अकृते मार्जने प्रोक्तं तर्पणद्विगुणो जपः ।
प्रत्याम्नाये ब्रह्मभोज्यो न कुत्रापि मया श्रुतः ।।१२७४।।
सर्वथा भोजयेद्विप्रान् कृतसाङ्गत्वसिद्धये ।

अत्र—

स्त्रीशूद्राभ्यां न होतव्यं मन्त्रोच्चारणपूर्वकम्।।१२७५।।इति वचनात् ।

स्त्रीशूद्रयोस्तु होमस्थाने यथोक्तजप एव न तु शक्तावपि होम इति सुधार्णवकृतः।

तथा च नारदपञ्चरात्रे—

त्रयाणामेव वर्णानां होमविधिरुदीरितः ।
शूद्रस्तु तत्फलाकाङ्क्षी होमात् तद्द्विगुणं जपेत् ।।१२७६।।

क्रियासंग्रहे—

होमस्तु ब्राह्मणद्वारा स्त्रीशूद्राणां निगद्यते ।
होमसङ्ख्यापञ्चगुणं द्विगुणं वा जपं चरेत् ।।१२७७।।

वाराहीतन्त्रे तु—

शूद्राणामधिकारोऽस्मिँस्तान्त्रिके होमकर्मणि ।
वह्निजायां परित्यज्य स्वाहान्ते च नमो मतः।।१२७८।। इत्युक्तम्।

तन्तान्तरे—

पुरश्चरण आरब्धे सूतकादिः पतेत चेत् ।
आरब्धं न परित्याज्यमन्यथा दोषभाग्भवेत् ।।१२७९।।

तथा च स्मृतौ—

यज्ञव्रतविवाहेषु श्राद्धे होमेऽर्चने जपे ।
आरब्धे सूतकं न स्यादनारम्भे च सूतकम् ।।१२८०।।
प्रारम्भो वरणं यज्ञे संकल्पो व्रतजाप्ययोः ।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिष्क्रिया।।१२८१।।

तन्त्रेऽपि—

जपो दीक्षार्चनविधिः कार्यो दीक्षान्वितैर्नरैः ।
नास्तिपापं यतस्तेषां सूतकं वा यतात्मनाम् ।।१२८२।।
सूतके मृतके चैव धूमोद्गारादिके तथा ।
जपं चार्धं तथा कुर्यान्मन्त्रन्यासपुरः सरम् ।।१२८३।।

पुरश्चरणचन्द्रिकायाम्—

पुरश्चर्यां विधायेत्थं सम्यक् साधकसत्तमः ।
तदन्ते महतीं पूजां कुर्याद्ब्राह्मणभोजनम् ।।१२८४।।
बहुभिर्वस्त्रभूषाभिः पूजयेद्गुरुमात्मनः ।
दीपनाथाँश्च सन्तोष्य मन्त्राः सिद्ध्यन्ति मन्त्रिणाम् ।।१२८५।।

होमाङ्गनिरूपणम्—

जपहोमार्चनैर्मन्त्रा नियतस्यास्य सिद्धिदाः ।
जपेन द्विगुणेनापि मनवः सिद्धिदाः स्मृताः ।।१२८६।।

रुद्रयामले—

भोजनेन विना देवीतर्पणेन विना पुनः ।
होमेनापि विना सिद्ध्यै मन्त्राणां त्रिगुणं जपेत् ।।१२८७।।

अगस्त्यसंहितायाम्

सम्यक्सिद्धैकमन्त्रस्य पञ्चाङ्गोपाशनेन च ।
सर्वे मन्त्राः प्रसिद्ध्यन्ति त्वत्प्रसादान्महेश्वरि ।।१२८८।।

तन्त्रान्तरे—

दुर्लभं त्रिषु लोकेषु सिद्धमन्त्रस्य मन्त्रिणाम् ।
न किंचिदस्ति देवेशि तस्मान्मन्त्रं प्रसाधयेत् ।।१२८९।।

अन्यत्रापि—

श्रेयांसि बहुविघ्नानि कथितानि मनीषिभिः ।
तस्माद्विघ्नानि निर्जित्य मन्त्रसाधनमाचरेत् ।।
ततः सिद्धमनुर्मन्त्री साधयेत् स्वमनोरथान् ।।१२९०।।

मेरुतन्त्रे—

एकस्मिन् साधिते कार्ये मन्त्रो याति सकुण्ठताम् ।
तावज्जपं पुनः कृत्वा चैककार्यक्षमो भवेत् ।।१२९१।।

तत्रैव—

मन्त्रान्तरे च संसिद्धो गुरुर्मन्त्रं प्रयच्छति ।
यथोक्ताचरणात् तस्य सिद्धिः शिष्यस्य जायते ।।१२९२।।
कृपा च स्यात् सिद्धमन्त्रं ददाति च यथा गुरुः ।
विना जपं विना पूजां सिद्धयस्तत्करे स्थिताः ।।१२९३।।

क्रियासंग्रहे—

गुरौ च देवतायां च भक्तिरव्यभिचारिणी ।
मन्त्रे शास्त्रे च विश्वासः सिद्धेर्बीजं विदुर्बुधाः ।।१२९४।।

प्रत्यङ्गिराकल्पे—

भक्तिमारुतनुन्नेन पुरश्चरणवह्निना ।
दग्धे पापेन्धनव्यूहे मन्त्राः सिद्ध्यन्ति मन्त्रिणाम् ।।१२९५।।

इति सामान्यपुरश्चरणविधिः ।

बिभ्रत्यद्भुतभूतिभूतपवचोवैचित्र्यचित्रामृत-
स्रोतःशालिनि सन्निबन्धनसरित्संभेदमभ्यर्हितम् ।
षष्ठः श्रीनरदेवनिर्मितपुरश्चर्यार्णवे प्रस्फुरन्
सद्युक्तिस्फुटमौक्तिकोत्कररुचोत्तङ्गस्तरङ्गो गतः ।।१२९६।।

इति श्रीमन्महाराजाधिराजश्रीप्रतापसिंहसाहविरचिते पुरश्चर्यार्णवे सामान्यपुरश्चरणविधिर्नाम षष्ठस्तरङ्गः सम्पन्नः ।।



# अथ सप्तमतरङ्गे

## मन्त्रसिद्धिलक्षणम्

अथ पुरश्चरणभेदमन्त्रसिद्धिलक्षणादिषु निरूपणीयेषु सूचीकटाहन्यायेन मन्त्रसिद्धिलक्षणमादौ निरूप्यते ।

तदुक्तं पञ्चरात्रे—

अथातः संप्रवक्ष्यामि मन्त्रसिद्धेस्तु लक्षणम् ।
मनोरथानामक्लेशे सिद्धेरुत्तमलक्षणम् ।।१।।
मृत्यूनां हरणं तद्वद्देवतादर्शनं तथा ।
प्रयोगानां क्लेशसिद्धिः सिद्धेस्तु लक्षणं तथा ।।२।।

तथा च

परकायप्रवेशश्च पुरप्रवेशनं तथा ।
ऊर्ध्वोत्क्रमणमेवं हि चराचरपुरे गतिः ।।३।।
खेचरीमेलनं चैव तत्कथाश्रवणादिकम् ।
भूछिद्राणि प्रपश्येत् तु तस्मादुत्तमलक्षणम् ।।४।।
स्मरणे कीर्त्तने विष्णोरानन्दाश्रुविमोचनम् ।
रोमाञ्चोद्गद्गदालापश्चित्तस्यैकाग्रता तथा ।।५।।
विषयेषु च वैराग्यं प्रीतिश्च परमेश्वरे ।
तत्कथाश्रवणौत्सुक्यं तत्पादसेवने रतिः ।।६।।
तद्गुणस्तुतिकाव्यानामविलम्बितकर्त्तृता ।
तत्पादाम्बुजचिह्नानां दर्शनं पूजनादिषु ।।७।।
अनाहतस्य शब्दस्य भवेदाकस्मिकी श्रुतिः ।
विनाऽपि योगाभ्यसनं चैतदुत्तमलक्षणम् ।।८।।
ख्यातिर्वाहनभूषादिलाभः सुचिरजीवनम् ।
नृपाणां तद्गतानां च वशीकरणमुत्तमम् ।।९।।
सर्वत्र सर्वलोकेषु चमत्कारकरः शुचिः ।
रोगापहरणं दृष्ट्या विषापहरणं तथा ।।१०।।
पाण्डित्यं लभते मन्त्री चतुर्विधमयत्नतः ।
वैराग्यं च मुमुक्षुत्वं त्यागिता सर्ववश्यता ।।११।।

अष्टाङ्गयोगाभ्यसनं भोगेच्छापरिवर्जितम् ।
सर्वभूतेष्वनुकम्पा सार्वज्ञादिगुणोदयः ।।१२।।
इत्यादिगुणसंपत्तिर्मध्यसिद्धेस्तु लक्षणम् ।
ख्यातिर्वाहनभूषादिलाभःसुचिरजीवनम् ।।१३।।
नृपाणामङ्गनानां च वात्सल्यं लोकवश्यता ।
महैश्वर्यं धनित्वं च पुत्रादिधनसंपदः ।।१४।।
अधमाः सिद्धयः प्रोक्ता मन्त्रिप्रथमभूमिकाः ।
सिद्धमन्त्रस्तु यः साक्षात् स शिवो नात्र संशयः ।।१५।।

साधनसमुच्चये—

सिद्धो यस्य महामन्त्रः साधनेन बलीयसा ।
देवानामपि दुष्प्रापाः सिद्धयस्तत्करे स्थिताः ।।१६।।
दिक्चरी खेचरी सिद्धिः पादुकासिद्धिरेव च ।
अन्तर्द्धिसिद्धिर्वेतालसिद्धिः कायप्रवेशनम् ।।१७।।
यक्षिणी भैरवीसिद्धिः खड्गसिद्धिस्तथैव च ।
आज्ञासिद्धिर्धातुवादगुटिकाञ्जनसिद्धयः ।।१८।।
आकर्षणवशीकारौ द्रावणं मोहनं तथा ।
उच्चाटनं स्तम्भनं च द्वेषणं मारणं तथा ।।१९।।
उन्मादनं शोषणं च मूर्छनं क्षोभणं तथा ।
ग्रहाणां च गतिस्तम्भं वेगस्तम्भं नभस्वतः ।।२०।।
नदीमहार्णवस्तम्भं वाक्स्तम्भं प्रतिवादिनाम् ।
गन्धर्वोरगदैत्यानां किन्नराणां च रक्षसाम् ।।२१।।
सिद्धविद्याधरादीनां कन्यकाकर्षणं तथा ।
नृपाणां देवतानां च क्षणादाकर्षणं भवेत् ।।२२।।
शीतलीकरणं वह्नेः सर्पाणां निर्विषीक्रिया ।
शोषणं सागरस्यापि त्रैलोक्यास्य वशीकृतिः ।।२३।।
अमोघवचनत्वं च शापे चानुग्रहे तथा ।
कामरूपं कामगतिः कामदातृत्वमेव च ।।२४।।
अणिमा महिमा चैव गरिमा लघिमा तथा ।
ईशित्वं च वशित्वं च प्राकाम्यं प्राप्तिरेव च ।।२५।।

इत्याद्याः सिद्धयः सर्वा जायन्ते नात्र संशयः ।
बहुनाऽत्र किमुक्तेन सिद्धमन्त्रस्य मन्त्रिणः ।।
यद्यदिष्टं च तत्सर्वं करामलकवद्भवेत् ।।२६।।

नारदपञ्चरात्रे—

मन्त्राराधनशक्तस्य प्रथमे वत्सरत्रये ।
जायन्ते बहवो विघ्ना नियमस्थस्य नारद ।।२७।।
नोद्वेगं साधको याति कर्मणा मनसा यदि ।
तृतीयवत्सरादूर्ध्वं राजानश्च महीभृताः ।।२८।।
प्रार्थयन्तेऽनुरोधेन गर्विता अपि मानिनः ।
प्रसादः क्रियतां नाथ ममोद्धारणकारणम् ।।२९।।
प्रज्वलन्तं च पश्यन्ति तेजसा विभवेन च ।
अतस्ते मुनिशार्दूल निष्ठुरं वक्तुमक्षमाः ।।३०।।
नवमाद्वत्सरादूर्ध्वं स्वयं सिद्ध्यति मन्त्रराट् ।
नानाश्चर्याणि हृदये मन्त्रसिद्धिमयानि वै ।।३१।।
अत्यानन्दप्रदान्याशु प्रत्यक्षेण बहिस्तथा ।
जडधीस्तु क्षणं विप्रः क्षणमस्ति प्रहर्षितः ।।३२।।
क्षणं दुन्दुभिनिर्घोषः शृणोत्यप्यन्तरिक्षगम् ।
क्षणं च मधुरं वाद्यं नानागीतसमन्वितम् ।।३३।।
आजिघ्रति क्षणं गन्धान् कर्पूरमृगनाभिजान् ।
उत्पतन्तं क्षणं वाऽपि पश्यत्यात्मानमात्मना ।।३४।।
चन्द्रार्ककिरणाकीर्णं क्षणमालोकयन् नभः ।
गजगोवृषनादाँश्च शृणुयाच्च क्षणं द्विजः ।।३५।।
निर्भराम्बुदसंक्षोभं क्षणमाकर्षयत्यपि ।
तारकाणि विचित्राणि योगिनो नभसि स्थितान् ।।३६।।
पश्यत्युद्ग्राहयन्तं च क्षणं मन्त्रवतां सदा ।
क्षणं किलिकिलारावं हंसवर्हिरवं तथा ।।३७।।
क्षणं मेघोदयं पश्येत् क्षणं रात्रिं दिने सति ।
रात्रौ च दिवसालोकं ससूर्यं क्षणमीक्षते ।।३८।।

बलेन परिपूर्णश्च तेजसा भास्करोपमः ।
पूर्णेन्दुसदृशः कान्त्या गमने विहगोपमः ।।३९।।
शमेन युक्तः प्रौढेन गाम्भीर्येण सुखेन च ।
स्वल्पाशनेनाकृशता बहुनाऽपि निखिद्यते ।।४०।।
विण्मूत्रयोरल्पता हि भवेन्निद्राक्षयस्तथा ।
जपध्यानगतो मन्त्री न खेदमधिगच्छति ।।४१।।
विना भोजनपानाभ्यां पक्षमासादिकं मुने ।
इत्येवमादिभिश्चिह्नैर्महाविस्मयकारिभिः ।।४२।।
प्रवृत्तैः संप्रबोद्धव्यं प्रसन्नो मन्त्रराडिति ।

बौद्धायनः—

सिद्धेस्तु त्रीणि चिह्नानि दाता भोक्ता अयाचकः ।।४३।।

भैरवीतन्त्रे—

ज्योतिः पश्यति सर्वत्र शरीरं वा प्रकाशयुक् ।
निजं शरीरमथ वा देवतामयमेव हि ।।४४।।

वक्रतुण्डकल्पे—

चित्तप्रसादो मनसश्च तुष्टि-
रल्पाशिता स्वप्नपराङ्मुखत्वम् ।
स्वप्नेषु यानाद्युपलम्भनं तु
सिद्धस्य चिह्नानि भवन्ति सद्यः ।।४५।।

मेरुतन्त्रे—

एवं सिद्धे मनौ देवा मोक्षमार्गनिरोधकाः ।
तपःक्षयकराश्चैव जायन्तेऽनेकसिद्धयः ।।४६।।
स्वल्पसिद्धौ निमग्नश्चेन्न जायन्तेऽणिमादयः ।
अणिमादिनिमग्नश्चेन्मोक्षवार्त्ताऽतिदुर्लभा ।।४७।।

नारसिंहेऽपि—

यथा स्वल्पसुखे मग्नो न प्राप्नोति महत् सुखम् ।
तथा सिद्धौ निमग्नस्य मुक्तिर्दूरे प्रवर्त्तते ।।४८।।
तस्मात् सिद्धीस्दृढीकृत्य भजेन्नृहरिपादुकाम् ।
अखण्डैकरसानन्दं ततः प्रोप्नोति नान्यथा ।।४९।।

पुरश्चरणसामर्थ्यात् सर्वसिद्ध्याश्रयोऽपि सन् ।
न त्याज्या भगवद्भक्तिः साधकैर्मुक्तिकामुकैः ।।५०।।
बुभुक्षवः सन्त्यनेके केचित् सन्ति मुमुक्षवः ।
भोगमोक्षनिराकाङ्क्षी विरलो भजते हरिम् ।।५१।।
स एव जीवन्मुक्त स्यान्नारायणमनामयम् ।
सिद्धौ सत्यामसत्यां च भजते योगनिस्पृहः ।।५२।।

मेरुतन्त्रे—

अल्पं तपः क्षणान्नश्येन्मध्यमं चापि गर्वतः ।
सिद्धिद्वारा महत् तस्य चिह्नं लक्षणमुच्यते ।।५३।।
स्वप्ने वाऽक्षिसमक्षं वा आश्चर्यमिति हर्षदम् ।
अकस्माद्यदि जायेत नाख्यातव्यं गुरोर्विना ।।५४।।
प्रकाशनीयं न क्वापि ऐहिकीं सिद्धिमिच्छता ।
प्रकाशयति यो मोहादौत्सुक्यान्मन्त्रजं सुखम् ।।५५।।
निकटस्थाश्च तास्तस्य सिद्धयो यान्ति दूरतः ।
आविर्भवन्ति दुःखानि शोकाश्च विविधा अपि ।।५६।।
अल्पाशनं स्वल्पनिद्रा सदा चित्तप्रसन्नता ।
प्रकाशयुक् शरीरं च वाक्यं सत्यं प्रजायते ।।५७।।

तथा—

वाङ्मनोरथसंसिद्धो दाता भोक्ता अयाचकः ।।५८।।

प्रपञ्चसारे—

ततोऽस्य प्रत्ययास्त्वेवं जायन्ते जपतो मनुम् ।
अधिष्ठितं निश्यदीपं निस्तमिश्रं गृहं भवेत् ।।५९।।
अर्काभस्तेजासाऽसौ भवति नलिनजा सन्ततं किङ्करी स्याद्
रोगा नश्यन्ति दृष्ट्वा द्रुतमथ धनधान्याकुलस्तत्ससीपम् ।।
देवा नित्यं नमोऽस्मै विदधति फणिनो नैव दंशन्ति पुत्रान्
पौत्रान् मित्राणि वृद्धाँस्तनुविपदि परं धाम विष्णोः प्रयाति ।।६०।।

इति सिद्धिचिह्नानि ।

फेत्कारिणीतन्त्रे—

कर्मणा प्रबलेनैव प्रतिबन्धाविरोधिना ।
यदि सिद्धिं न लभते द्विस्त्रिर्वा पुनराचेरत् ।।६१।।

अथ द्वित्रैरपि पुरश्चरणैर्मन्त्राणामसिद्धौ तत्सिद्ध्यर्थमुपायानाह मेरुतन्त्रे—

असिद्धत्वाद्गुरोर्दैवात् शिष्ये सिद्धिर्न जायते ।
तदोपायं प्रकुर्याद्धि यद्गोप्यमधुनोच्यते ।।६२।।
अनुलोमविलोमेन बिन्दुवन्मातृकाक्षरैः ।
जपेत् संपुटितं मन्त्रं प्रत्यहं शतसङ्ख्यया ।।६३।।
एकमासं ततो होमादिकात् सिद्धो भवेन्मनुः ।
पुरश्चर्योक्तमखिलमाह्निकं च समाचरेत् ।।६४।।

वैदिकमन्त्रे तु विशेष उक्तस्तत्रैव—

एवं वैदिकमन्त्रस्य सिद्ध्येऽद्रिरसार्णकाः ।
वर्णा देया बिन्दुयुक्ताः क्रमतश्चोत्क्रमेण च ।।६५।।
ह्रस्वदीर्घप्लुतैर्भेदैर-इ-उ-ऋ त्रिधा मताः ।
ह्रस्वः प्लुतो लृद्विविध एचोऽपि द्विविधा मताः ।।६६।।
दीर्घप्लुतविभेदेन ह्यनुस्वारो विसर्गकः ।
चतुर्विंशतिराख्याताः स्वरा एवं यमैः सह ।।६७।।
चत्वारः कादिका वर्णा जिह्वामूलीययुक् च कः ।
एवं कवर्गो दशधा चाद्याः पञ्चदश स्मृताः ।।६८।।
उपध्मानीयसंयुक्तः पकारस्तेन तत्र षट् ।
याद्यष्टाविति संप्रोक्ता यजुर्वेदे तु मातृकाः ।।६९।।
लक्षौ द्वावधिको ऋक्षु[1]ज्ञोऽधिकोऽथर्वणि स्मृतः ।
जपश्चाष्टोत्तरशतं प्रत्यहं मासमात्रकम् ।।७०।।
अनध्यायं वर्जयित्वा चत्वारिंशद्दिनं तथा ।
होमादिसकलं प्राग्वन्नित्यमेवं प्रकल्पयेत् ।।७१।।

उपायन्तरमाह तत्रैव—

कुलदैवतमत्रं तु भूतलिप्या पुटीकुरु ।
क्रमोत्क्रमाच्छतावृत्तिं कुर्यात् सिद्धिस्तु मासतः ।।७२।।

तथा—

अत्युग्रदेवताजप्यस्त्वष्टोत्तरसहस्रकम् ।
त्रिकालं गन्धपुष्पाद्यैर्निशीथे पञ्चमैः पुनः ।।७३।।
षण्मासं कौलिकाद्यैश्चेदर्चिता सुप्रसीदति ।।७४।।

---

१. ऋग्वेदेषु—इति ।

भूतलिपिरग्रे वक्ष्यते । अथोपायान्तराणि गन्धर्वतन्त्रे—

अनुष्ठितो यथान्यायं यदि मन्त्रो न सिद्ध्यति ।
पुनस्तावत् प्रजप्तव्यस्ततः सिद्धो भवेत् पुनः ।।७५।।
पुनश्चानुष्ठितो मन्त्रो यदि सिद्धो न जायते ।
उपायास्तत्र कर्त्तव्याः सप्त शङ्करभाषिताः ।।७६।।

मेरुतन्त्रे—

ब्रह्मद्वेषाद्गुरोर्दोषात् स्त्रीद्वेषाच्चेन्न जायते ।
शपतो वाऽकीलितत्वात् तत्रोपायाष्टकं भवेत् ।।७७।।
संपाताप्यायनं द्रावो बोधनं च वशीकृतिः ।
पीडनं पोषशोषौ च दहनं तत्क्रियोच्यते ।।७८।।
भूर्जपत्रं समानीय पद्ममष्टदलं लिखेत् ।
अष्टगन्धेन देवस्य रोचनाचन्दनेन वा ।।७९।।
साधकस्य तु नामार्णैर्मन्त्रसंदर्भितं लिखेत् ।
यावद्द्वयोः समाप्तिः स्यात् तस्य चाद्यन्तयोर्लिखेत् ।।८०।।
तारादिकं साधकस्य नामाथाष्टदलेषु तु ।
द्वौ द्वौ लेख्यौ स्वरौ तच्च सम्यक् ध्यायन् सुधात्मकम् ।।८१।।
तत् संवेष्ट्य मृदा सम्यग्वेष्टयेद्ब्राह्मणादिकम् ।
शुक्लादिवर्णया पश्चात् सिक्थकेन च वेष्टयेत् ।।८२।।
क्षिपेत् त्रिमधुरे तत् तु मृण्मये लघुभाजने ।
क्षीरपूर्णे नवे कुम्भे तत् क्षिपेल्लघुभाजने ।।८३।।
अग्निं संस्थापितं कृत्वा सन्निधौ तस्य तं घटम् ।
संस्थापयेत् त्रिमधुरैर्मूलमन्त्रेण होमयेत् ।।८४।।
अष्टादिकसहस्रं तु संपातं कलशे क्षिपेत् ।
होमं समाप्य तं कुम्भं निःक्षिपेच्च जलाशये ।।८५।।
स्वगुरुं ब्राह्मणाँश्चान्याँस्तोषयेद्दक्षिणादिभिः ।
संपाताप्यायनं चैतदुक्तं सिद्धिर्न चेद्भवेत् ।।८६।।
द्रावणं तु तदा कुर्यात् तत्प्रकार इहोच्यते ।
वँ बीजेन ग्रन्थयित्वा भूर्जपत्रे लिखेन्मनुम् ।।८७।।

उशीररोचनाभ्यां च शिलाकर्पूरकुङ्कुमैः ।
क्षीराज्यमधुतोयानां मध्ये तं लिखितं क्षिपेत् ।।८८।।
पूजनाच्च जपाद्धोमाद्रावितः फलदो भवेत् ।
द्रावितोऽपि न सिद्धश्चेच्छोधनं तस्य कारयेत् ।।८९।।
वाग्भवेन च बीजेन संपुटीकृत्य तं जपेत् ।
एवं बुद्धो भवेत् सिद्धो नो चेत् कुर्यात् वशीकृतिम् ।।९०।।
कुचन्दनमहादारुहरिद्रामदनीशिलाः।
एतैस्तु लिखितो मन्त्रो भूर्जपत्रे सुशोभने ।।९१।।
कण्ठे धृतो भवेद्वश्यो नो चेत् कुर्यात् प्रपीडनम् ।
अनुदात्तस्वरेणाद्यमुदात्तेन द्वितीयकम् ।।९२।।
तृतीयमनुदात्तेन पठेत् तुर्यमुदात्ततः ।
एवं पदानि सर्वाणि पठेन्मन्त्रस्य साधकः ।।९३।।
अनुदात्तपदोच्चारे देवं ध्यायेदधःस्थितम् ।
ऊर्ध्वस्थितमुदात्तस्योच्चारेऽष्टाधिसहस्रकम् ।।९४।।
जपेन्मन्त्रं ततो भूर्जे भानुदुग्धेन लेखयेत् ।
मन्त्रं तमाक्रमेद्वामपादेनाथ च होमयेत् ।।९५।।
अष्टोत्तरशतं मन्त्रं पीडितः सन् प्रसीदति ।
न सिद्धश्चेत् तदा पोष्यः प्रोच्यते तत्क्रियाऽधुना ।।९६।।
ह्सौँ बीजपुटितं मन्त्रं विलिखेद्भूर्जपत्रके ।
रोचनाकुङ्कुमाभ्यां च धारयेद्दधिदुग्धयोः ।।९७।।
इदं पोषणमित्युक्तं दोषशोशणमुच्यते ।
यज्ञस्य भस्मना लेख्यं वायुबीजविदर्भितम् ।।९८।।
भूर्जपत्रे स्वेष्टमन्त्रं तत् कण्ठे धारयेदिति ।
एतच्छोषणमित्युक्तं दहनं प्रोच्यतेऽधुना ।।९९।।
पृथक् पृथक् च मन्त्राणां चतुर्दिक्षु समावृतान् ।
रँ बीजेन पलाशस्य बीजतैलेन संल्लिखेत् ।
भूर्जपत्रेऽथ तद्धार्यं कण्ठे दाहक्रिया त्वियम् ।।१००।।

उपायान्तराण्युक्तानि यामलेश्वरगन्धर्वादौ—

प्रणवो मातृका देवी हृल्लेखेत्यमृतत्रयम् ।
अमृतत्रयसंयोगाद्दुष्टमन्त्रोऽपि सिद्ध्यति ।।१०१।।

[१]सुवर्णमर्कतैलं च पिष्टं मन्त्राम्भ एव च ।
एतल्लिप्ताङ्गसंजप्तो मन्त्रः कुण्ठोऽपि सिद्ध्यति ।।१०२।।

गौतमीये—

सुवर्णसूर्यतैलेन पिष्टेन निजवारिणा ।
तल्लिप्ताङ्गहुतः कुण्ठो मनुः सद्यः प्रसीदति ।।१०३।।

इति मन्त्रसिद्ध्युपायाः ।

[२]आदावन्ते च मन्त्रस्य हृल्लेखा कामबीजकम् ।
श्रीबीजं च विनिःक्षिप्य जपेन्मन्त्रं तु सिद्धये ।।१०४।।
तारसंपुटितं वाऽथ कृत्वा मन्त्रं तु साधकः ।
लक्षमात्रं प्रजप्तव्यं दुष्टमन्त्रोऽपि सिद्ध्यति ।।१०५।।

इत्युपायाः

अथ पुरश्चरणभेदाः वाडवानलीये—

पुरश्चर्यां विना मन्त्रा न सिद्ध्यन्ति कदाचन ।
न ते मन्त्राः प्रयोगार्हा न ते मन्त्राः फलप्रदाः ।।१०६।।
ये च मन्त्राः पुरश्चर्याविवर्जिता वीरवन्दिते ।
कीर्त्तिता यस्य मन्त्रस्य जपसङ्ख्या तु भूयसी ।।१०७।।
तावत्सङ्ख्याजपं कर्त्तुमसमर्थश्च साधकः ।
समुद्रगनदीकूले देवतायनेऽथ वा ।।१०८।।
माघे मासि हविष्याशी लक्षमात्रं जपेन्मनुम् ।
भक्त्या संपूजयेद्देवीं त्रिसन्ध्यं विविधार्हणैः ।।१०९।।
होमादीनि ततः कुर्यात् तदङ्गानि विधानतः ।
एवंकृते महादेवि भवेन्मन्त्रः फलप्रदः ।।
दीक्षा हि विफला ज्ञेया पुरश्चर्यामकुर्वताम् ।।११०।।

मुण्डमालायाम्—

कृष्णाष्टमीं समारभ्य यावत् कृष्णाष्टमी भवेत् ।
सहस्रसङ्ख्ये जप्ते तु पुरश्चरणमिष्यते ।।१११।।

---

१. सुवर्णमित्यारभ्य मन्त्रसिद्ध्युपा इत्यन्तम् ५ पु. अधिकः पाठः ।
२. आदावित्यारभ्य इत्युपाया इत्यन्तम् ५ पु. नोपलभ्यते ।

तत्रैव—

कृष्णां चतुर्दशीं प्राप्य तपस्यन्तं महोत्सवे ।
अष्टमीनवमीरात्रौ पूजां कुर्याद्विशेषतः ।।११२।।
दशम्यां पारणं कुर्यान्मत्स्यमांसादिभिर्युतम् ।
षट्सहस्रं जपेन्नित्यं भक्तिभावपरायणः ।।११३।।

तथा—

अथ वाऽन्यप्रकोरण पुरश्चरणमुच्यते ।
चतुर्दशीं समारभ्य यावदन्या चतुर्दशी ।।११४।।
तावज्जप्ते महेशानि पुरश्चरणमिष्यते ।
केवलं जपमात्रेण मन्त्राः सिद्धा भवन्ति हि ।।११५।।
वलिहोमादिदानेन विशेषात् पीठपूजने ।
योनिपीठं महापीठं कामरूपं तथाऽपरम् ।।
तयोरेकतमं पूज्यं रुद्रदेह इवापरः ।।११६।।

चन्द्रपीठे—

महालक्ष्मीं समारभ्य आमहानवमीश्वरि ।
कृष्णाष्टम्या आनवमी मधौ शाक्ते मनौ स्मृतम् ।।११७।।
ऊर्जे तपसि राधे वा शुक्लपक्षस्तु वैष्णवे ।
एकादश्यन्त ऐशे तु भूतान्तः फाल्गुने स्मृतः ।।११८।।
भाद्रेऽपि वैघ्नराजे तु माघभाद्रौ स्ववासरात् ।
अन्येष्वपि च मन्त्रेषु पूर्वोक्तं नवरात्रकम् ।।११९।।
जपो मातृकया प्रातः कालान्मध्यन्दिनावधि ।
रात्रौ याममितःकार्यः पयोमूलफलाह्रतिः ।।१२०।।
चतुर्थयामे कर्त्तव्या मालामन्त्रे दशांशतः ।
विंशांशाद्वा दशांशाद्वा अन्येष्वपि हुतं मतम् ।।१२१।।
दक्षिणा च यथोक्ता च वित्तशाठ्यं न कारयेत् ।
एवं मन्त्रःप्रयोगार्हो भवत्येव न संशयः ।।१२२।।

साधनसमुच्चये—

तद्देवतिथिमारभ्य यावत् तद्देवतातिथिः ।
नित्यं जपेत् षट्सहस्रं पुरश्चरणमिष्यते ।।१२३।।

ऊर्जे कृष्णेतरे पक्षे आरभ्य प्रतिपत्तिथिम् ।
प्रजपेद्वैष्णवं मन्त्रं यावदेकादशीतिथिः ।।१२४।।
होमादिभिः प्रभोज्यान्तं विदध्याद्द्वादशीदिने ।
विधिनाऽनेन सिद्ध्यन्ति मनवो मुरवैरिणः ।।१२५।।

कालिकाकल्पे—

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
शरत्काले चतुर्थ्यादिनवम्यन्तं विशेषतः ।।१२६।।
भक्तितः पूजयित्वा तु रात्रौ तावत्सहस्रकम् ।
जपेदेकस्तु विजने केवलं तिमिरालये ।।१२७।।
अष्टम्यादिनवम्यन्तमुपवासपरो भवेत् ।
स भवेत् सर्वसिद्धीशो नात्र कार्या विचारणा ।।१२८।।

शरत्काले देवीपक्षे । तावत्सहस्रं षट्सहस्रम् ।

मुण्डमालायाम्—

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
शरत्काले महापूजा क्रियते या च वार्षिकी ।।१२९।।
तस्मिन् पक्षे विशेषेण पुरश्चरणतत्परः ।
अष्टम्यादिनवम्यन्तमुपवासपरो भवेत् ।।
पूजयेद्भक्तितो रात्रौ षट्सहस्रजपं चरेत् ।।१३०।।

अत्र प्रतिपदादिनवम्यन्त जपो बोध्यः ।

विश्वसारे—

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
पूजास्थाने विनिःक्षिप्य नरमुण्डं तदूर्ध्वके ।।१३१।।
कोमलासनमास्तीर्य पूजयेत् परदेवताम् ।
षट्सहस्रप्रमाणेन प्रत्यहं किं न सिद्ध्यति ।।१३२।।

कलीतन्त्रे—

अथ वाऽन्यप्रकारेण पुरश्चरणमिष्यते ।
कुजे वा शनिवारे वा नरमुण्डं समाहृतम् ।।१३३।।
पञ्चगव्येन मिलितं चन्दनाद्यैर्विशेषतः ।
निःक्षिप्य भूमौ हस्तार्धमानतः काननान्तरे ।।१३४।।

तत्र तद्दिवसे रात्रौ सहस्रं यदि साधकः ।
एकाकी प्रजपेन्मन्त्रं स भवेत् कल्पपादपः ।।१३५।।

तत्रैव—

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्येत ।
शवमानीय तद्वारे तेनैव परिखन्यते ।।१३६।।
तद्दिनान्तदिनं यावत् तावदष्टोत्तरं शतम् ।

जपेदिति शेषः ।

स भवेत् सर्वसिद्धीशो नात्र कार्या विचारणा ।१३७।।

तद्वारे इति । पूर्वोक्तशनिभौमवारे । तेनैवेति । हस्तार्धमानेनैवेत्यर्थः ।

तत्रैव—

अथ वाऽन्यप्रकारेण पुरश्चरणमिष्यते ।
अष्टम्यां वा चतुर्दश्यां पक्षयोरुभयोरपि ।।१३८।।
सूर्योदयात् समारभ्य यावत् सूर्योदयान्तरम् ।
तावज्जप्त्वा निरातङ्कः सर्वसिद्धीश्वरो भवेत् ।।१३९।।

अत्र होमादिकमपि कर्त्तव्यं पुरश्चरणत्वश्रुतेः ।

तन्त्रान्तरे—

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
सूर्योदयं समारभ्य यावत् सूर्योदयान्तरम् ।।
तावज्जप्त्वा निरातङ्कं सर्वसिद्धीश्वरो भवेत् ।।१४०।।

अत्र तिथिनियमो नोक्त इति पूर्वस्माद्विशेषः ।

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
सूर्यास्तं च समारभ्य सूर्योदयो यावदेव तु ।।१४१।।
तावज्जप्त्वा निरातङ्कं सर्वसिद्धीश्वरो भवेत् ।
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।।१४२।।
सूर्योदयं समारभ्य यावदस्तमयो भवेत् ।
तावद्भक्त्या जपेद्देवि सर्वसिद्धीश्वरो भवेत् ।।१४३।।
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
सूर्यास्तं च समारभ्य यावत् सूर्योदयो भवेत् ।।१४४।।

तावज्जपेन्महेशानि सर्वसिद्धीश्वरो भवेत् ।
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।।१४५।।
शरत्काले चतुर्थ्यादिनवम्यन्तं महेश्वरि ।
होमरूपां पुरश्चर्यां कुर्यात् सिद्धीश्वरो भवेत् ।।१४६।।
अथ तर्पणरूपां च पुरश्चर्यां ब्रवीमि ते ।
दुग्धेनाशवतोयेन रक्तैर्मज्जाभिरेव च ।।१४७।।
मधुना गन्धतोयेन रक्तधाराभिरेव च ।
केवलं शुद्धतोयस्य तर्पणेंन महेश्वरि ।।१४८।।

अत्राधिकारिभेदेन तर्पणद्रव्यभेदो बोध्यः ।

साधनसमुच्चये—

प्रतिपद्दिनमारभ्य नवम्यन्तं महोत्सवे ।
दिवा वा यदि वा रात्रौ षट्सहस्रं जपं चरेत् ।।
देवीं संपूज्य विधिवत् सर्वसिद्धीश्वरो भवेत् ।।१४९।।

तन्त्रान्तरे—

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
दिवा जपेत् षट्सहस्रं रात्रावपि तथैव च ।।१५०।।
एवं क्रमेण देवेशि सर्वसिद्धीश्वरो भवेत् ।
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।।१५१।।
दिवा जपेत् षट्सहस्रं तावद्धोमं चरेन्निशि ।
सर्वसिद्धीश्वरो भूयादतोऽन्यं शृणु पार्वति ।।१५२।।
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
नित्यकृत्यं दिवा कृत्वा केवलं तिमिरालये ।।१५३।।
रात्रौ जपेद्ध्यानपरः सर्वसिद्धीश्वरो भवेत् ।
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।।१५४।।
गानमण्डलगो जप्त्वा त्रैलोक्याधिपतिर्भवेत् ।
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।।१५५।।
दिवा जपेद्दिक्सहस्रं रात्रौ पूजां चरन् जपेत् ।
सहस्रमात्रं प्रजपेदामिषान्नपरायणः ।।१५६।।

सर्वसिद्धीश्वरो भूयाद्वेतालसिद्धिमाप्नुयात् ।
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।।१५७।।
प्रतिपद्दिनमारभ्य नवम्यन्तं महेश्वरि ।
एकान्ते पर्वते शून्ये केवलं तिमिरालये ।।१५८।।
उदयास्तमयं जप्त्वा सर्वसिद्धीश्वरो भवेत् ।
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।।१५९।।
पर्वते विपिने शून्ये नवरात्रं जितेन्द्रियः ।
मुण्डोपरि भवेन्मुण्डकपालं च ततो[1]परि ।।१६०।।
तत्र दीपं च प्रज्वाल्य दीपालोकनतत्परः ।
नवरात्रं जपेद्देवि दीपालोकनतत्परः ।।१६१।।
मूलमन्त्रं कपालेषु कौमार्या बीजमुत्तमम् ।
सिन्दूरेण कृतं यन्त्रं सर्वसिद्धीश्वरो भवेत् ।।१६२।।

कालीतन्त्रे—

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
अष्टमीसन्धिवेलायामष्टोत्तरलतागृहम् ।।१६३।।
प्रविश्य मन्त्री विधिवत् ताः समभ्यर्च्य यत्नतः ।
पूर्वोक्तकल्पमासाद्य पूजादिकं समाचरेत् ।।१६४।।
केवलं कामदेवोऽसौ जपेदष्टोत्तरं शतम् ।
तासां च पत्रमूले च जप्त्वा संगृह्य मस्तके ।।
महासिद्धिर्भवेत् सद्यो लतापूजनदर्शनात् ।।१६५।।

अष्टमीसन्धिवेलायामष्टमीनवम्योः सन्धिवेलायाम् । अष्टोत्तरलतागृहं यथासम्भवमष्टपर्यन्तानां शक्तीनां गृहं मदनमन्दिरम् । पूर्वोक्तकल्पं दूतीयागाख्यम् । पत्रमूले वराङ्गे जप्त्वा बीजं निरस्य तदेव बीजं मस्तके संगृह्य तिलकं कृत्वेत्यर्थः । इदं वीरपरम् । एवमन्येषामपि तत्तन्मार्गपरत्वं सकलसाधारणत्वं च क्रियाविशेषाद्बोद्धव्यम् ।

तथा—

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
आकृष्टायाः कुलागारे लिखित्वा मन्त्रमेव च ।।१६६।।

---

१. तान्त्रिकप्रयोगोऽयम् ।

संपूज्य तत्र संस्कारं कृत्वा तस्यै निवेद्य च ।
किञ्चिज्जप्त्वा मनुं नीत्वा देवताभावतत्परः ।।१६७।।
तां विसृज्य नमस्कृत्य स्वयं सुप्त्वा सुसंयतः ।
प्रातः स्त्रीभ्यो वलिं दत्वा मन्त्रसिद्धिर्न संशयः ।।१६८।।

अथ पूजनमात्रं न तु संभोगोऽपीति ठक्कुराः ।

तत्रैव—

गुरुमानीय संस्थाप्य देववत्पूजनं विभोः ।
वस्त्रालङ्कारहेमाद्यैः सन्तोष्य गुरुमेव च ।।१६९।।
तत्सुतं तत्सुतां चैव तत्पत्नीं चैव पूज्य[1]च ।
पूजयित्वा मनुं जप्त्वा स्वयं सिद्धीश्वरो भवेत् ।।१७०।।

मेरुतन्त्रे—

वाममार्गीयमन्त्राणामेवमेवान्यदुच्यते ।
कृष्णाष्टमीं समारभ्य यावत् कृष्णचतुर्दशी ।।१७१।।
देवं ध्यात्वा जपेन्मन्त्रमयुतानां चतुष्टयम् ।
दशांशं होमयेत् पश्चात् तर्पयेदभिषेचयेत् ।।१७२।।

कल्पलता-धृतवचनानि—

अष्टम्यां च चतुर्दश्यां नवम्यां च विशेषतः ।
रात्रियोगेन देवेशि गत्वा च पितृकानने ।।१७३।।
दिगम्बरो मुक्तकेशो भूत्वा च सुरसुन्दरि ।
प्रजपेदयुतं मन्त्री देवताभावतत्परः ।।
मन्त्रसिद्धिर्भवेत् तस्य देवीपुत्रस्य भूतले ।।१७४।।

मुण्डमालायाम्—

यद्‌गुह्यं परमं देवि गोप्याद्गोप्यतरं प्रिये ।
तदेतत् कथयिष्यामि प्रकाशश्च प्रजायते ।।१७५।।
गोप्तव्यं तु महादेवि रहस्यं यत् तु गद्यते ।
मनोहरे शुभे गेहे कर्पूरादिसुवासिते ।।१७६।।
रक्तभित्तिसमालिप्ते रक्तचन्दनमालया ।
रक्तासनोपविष्टः सन् रक्तपुष्पाणि धारयेत् ।।१७७।।

---

१. तान्त्रिकप्रयोगोऽयम् ।

रक्तचन्दनसंलिप्तो रक्तवस्त्रावृतः सदा ।
जपेदयुतमेकं तु रक्तां ध्यायेत् सुरेश्वरीम् ।।१७८।।
पश्चाद्रक्तवलिं दद्याद्रक्तपुष्पैः समर्चयेत् ।
दशांश जुहुयाद्रक्तकुसुमैर्वज्रसंज्ञकैः ।।१७९।।
मधुरत्रयसंसिक्तैः सिन्दूरारुणविग्रहः ।
कुमारी भोजेत् पश्चाद्रक्तपुष्पासवादिभिः ।।
लभते वाञ्छितां सिद्धिमेवं कृत्वा हि साधकः ।।१८०।।

पुरश्चरणान्तरमाह—

अथ वा कल्पयेद्देहं सुधादिधवलीकृते ।
शुभ्रासने समाविश्य शुद्धस्फटिकमालया ।।१८१।।
कर्पूरचन्दनालिप्ते शुभ्राम्बरधरः शुचिः ।
श्वेतपुष्पैः समभ्यर्च्य ध्यायन् शुभ्रां सुरेश्वरीम् ।।१८२।।
जपेत् सहस्रदशकं पश्यन्नुद्योतितं जगत् ।
होमयेत् तद्दशांशेन पुण्डरीकदलैः शुभैः ।।१८३।।
शर्करामधुसंयुक्तैः सर्पिःसंलोलितैस्तथा ।
श्वेताम्बरं सितां मालां श्वेतपुष्पाभिभूषणम् ।।१८४।।
श्वेतानुलेपनं तद्वद्द्याद्विप्राय दक्षिणाम् ।
कुमारीभ्यस्तथा दद्याद्भोजयेत् ताश्च भक्तितः ।।१८५।।
स्वयं त्रिमधुरोपेतैः पश्चाद्भुञ्जीत साधकः ।
निवेद्य पुरतो देव्यै भक्त्या विशुद्धभावतः ।।१८६।।
एवं कृत्वा पुरश्चर्या ज्ञानवृद्धिकरी परा ।
यशोवृद्धिकरी तद्वद्राज्यवश्यकरी तथा ।।१८७।।
प्रसन्नहृदयं तद्वत् साधकं परिकल्पयेत् ।
अथ वाऽन्यप्रकारेण पुरश्चरणकर्मकृत् ।।१८८।।
लभते वाञ्छितां सिद्धिं गुरुभक्तिपरायणः ।
सिन्दूरेण पुरस्कृत्य मण्डले मन्दिरोदरे ।।१८९।।
तत्राष्टपत्रकमलं लिप्तं सिन्दूररेणुभिः ।
पत्राणि पीतहरितसितनीलं क्रमाल्लिखेत् ।।१९०।।
कर्णिकां च हरिद्रायाश्चूर्णैरालिख्य निर्मलाम् ।
तत्रेष्टदेवतां मध्ये पूर्णकुम्भात्मिकां चरेत् ।।१९१।।

निवेश्य पञ्चरत्नानि पञ्चामृतजलं तथा ।
रक्तवस्त्रावृतं कुम्भं कृत्वा साधकसत्तमः ।।१९२।।
नमस्कृत्य गुरुं कुर्यादयुतं जपमुत्तमम् ।
होमं कुर्यात् प्रयत्नेन विल्वपत्रैः सहस्रकम् ।।१९३।।
रक्तचन्दनसंसिक्तैः स्फुरत्त्रिमधुराप्लुतैः ।
वलिमष्टदले दद्याच्छागरक्तोक्षितैर्नरः ।।१९४।।
सगुडैः पायसैर्मध्ये मधुलालितमस्तकम् ।
छागस्यैवार्चितं पूर्वं रक्तपुष्पस्य मालया ।।१९५।।
वलिमुत्तममुत्सृज्य निरीक्षेत दिशस्ततः ।
पलायन्ते वैरिणस्ते भीता एवं द्रुतं निशि ।।१९६।।
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
भौमवारे चतुर्दश्यां वलिमादाय मन्दिरात् ।।१९७।।
श्मशानं समुपागत्य वलिपूजां समाचरेत् ।
पुर्वोक्तमण्डपं कृत्वा ततो दद्याद्वलिं निशि ।।१९८।।
भैरवं पूजयित्वाऽऽदौ ततो देवीं समर्चयेत ।
व्याघ्राजिनोपविष्टः सन् मुक्तकेशो जपेत् सुधीः ।।१९९।।
सहस्रदशकं देवि निर्भयो वीरसत्तमः ।
ततो नरकपालस्थं वलिं दद्यात् सुरादिकम् ।।२००।।
भैरवाय नस्कृत्य देव्यै रक्तं सुरां तथा ।
पायसं दधि भक्तं च गुडोदनमथापि वा ।।२०१।।
प्रणमेन्निर्भयो भूत्वा सानन्दो मन्दिरं व्रजेत् ।
महापातकनिर्मुक्तो जायते राज्यभाजनम् ।।२०२।।
दुःखहो वैरिवृन्देन व्याख्यावागीश्वरो भवेत् ।
दृष्ट एव मनोहारी स्त्रीणां काम इवापरः ।।२०३।।
अथ वा मन्दिरे शून्ये सिन्दूरारुणमण्डले ।
नारीं चतुर्दशीरात्रौ कृष्णपक्षे निशान्तरे ।।२०४।।
आनीय रूपसंपन्नामलङ्लत्य विभूषणैः ।
वस्त्रैर्माल्यैरङ्गरागैः समभ्यर्च्य विशेषतः ।।२०५।।
न्यासं विधाय तस्यां तु यजेदानन्दनन्दिनीम् ।
भुञ्जन् सौगन्धिकं वस्तु सहस्रं तु शतोत्तरम् ।।२०६।।

सदुग्धं तु वलिं दद्यात् सुरामधुरमिश्रितम् ।
निवेदयेत् तु नैवेद्यं तस्यै सुरामधुरमिश्रितम् ।।२०७।।
ततो लभेत त्रैलोक्ये वशीकरणमुत्तमम् ।
कविताकौशलं सम्यगाकर्षणकरं तथा ।।२०८।।
तस्यामनिन्दितायां तु प्रसन्ना परमेश्वरि ।
पूर्णानन्दो भवेदस्मान्नियतं साधकोत्तमः ।।२०९।।
एतद्गुह्यतरं देवि न प्रकाश्यं कथंचन ।
साधकेन महासिद्धिमिच्छता दुर्लभं भुवि ।।२१०।।
अथ वा शृणु देवेशि पुरश्चरणमुत्तमम् ।
हविष्याशी मुक्तकेशो जपेदयुतमादरात् ।।२११।।
गद्यपद्यमयी वाणी तस्य सर्वविधा भवेत् ।
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।।२१२।।
दिवा परिस्कृते देवि रात्रौ दीपान् प्रदापयेत् ।
चतुःषष्टिं चतुर्दिक्षु मध्ये मण्डलमालिखेत् ।।२१३।।
सिन्दूरैः पटवासैश्च पुनः षोडशपत्रकम् ।
ततोऽष्टदलमालिख्य मध्ये कुर्याच्च कर्णिकाम् ।।२१४।।
त्रिकोणद्वयमालिख्य तत्र कुम्भं निधापयेत् ।
पुनः पञ्चामृतैः पूर्णं दूर्वाम्रादिदलान्वितम् ।।२१५।।
आच्छाद्य मृदुवस्त्रेण लोहितं च विशेषतः ।
ततो दिग्बन्धनं कृत्वा द्वीपिचर्मासनस्थितः ।।२१६।।
उपविश्यावाहयेद्देवीमिष्टां तत्रार्चयेत् ततः ।
पञ्चोपचारविधिना ततस्तु जपमारभेत् ।।२१७।।
प्रथमं प्रहरं हित्वा तुरीयं च विवर्जयेत् ।
मध्ययोर्यामयोर्जप्यादङ्गन्यासादिपूर्वकम् ।।२१८।।
जपान्ते तु वलिं दद्यात् कृष्णच्छागं प्रयत्नतः ।
ततो जपानुक्रमेण होमादि प्रातराचरेत् ।।२१९।।
तर्पणं मार्जनं कृत्वा तथा ब्राह्मणभोजनम् ।
ततः कुमारीं संपूज्य साधकाँस्तोषयेत् ततः ।।२२०।।
एवं कृत्वा पुरश्चर्या महासिद्धिकरी सदा ।
पुरश्चरणकर्तॄणां वश्यगा भैरवी स्वयम् ।।२२१।।

सिद्धमन्त्रप्रभावेण त्रैलोक्यं वशमानयेत् ।
अपरं तु प्रवक्ष्यामि पुरश्चरणमुत्तमम् ।।२२२।।
शृणु शैलसुते देवि शीघ्रं शीघ्रफलप्रदम् ।
कृष्णां चतुर्थीमारभ्य यावच्छुक्लचतुर्थिका ।।२२३।।
प्रयतस्तु जपेन्मन्त्रं योषिन्नियमपूर्वकम् ।
ततो होमादिकं कार्यं ततः पूर्णं भवेदिदम् ।।२२४।।
सोत्साहं तु ततो देवीं ध्यात्वा सुस्थो जपं चरेत् ।
ततः सिद्धिमवाप्नोति वाञ्छितां मन्त्रसाधकः ।।२२५।।
अथ वा पुष्पशय्यायां मृदुवासः सुभूषणः ।
कृत्वाऽङ्गरागं सानन्दस्त्रयोदश्यां कुजे दिने ।।२२६।।
व्यभिचारवतीं नारीं विभूष्यानीय सन्निधिम् ।
पुष्पेण तां समालम्ब्य जपेदकान्तमन्दिरे ।।२२७।।
प्रवालमालया धीमान् मौक्तिकस्याक्षमालया ।
यथाशक्तिं जपेन्मन्त्रं ततो देव्यै बलिं ददेत् ।।२२८।।
पायसं मधुसर्पिर्भ्यां सितावलितमुत्तमम् ।
सुगन्धकुसुमैर्मालां निर्माय नवपल्लवैः ।।२२९।।
निवेद्य देव्यै तां मालां तस्याः केशे निधाय च ।
न काचित् कामचेष्टां च विदध्यात् साधकोत्तमः ।।२३०।।
तस्यै भूषादिकं दत्वा पुरो देव्यै निवेदयेत् ।
देव्यै दत्वा विशेषेण ततस्तां तु विसर्जयेत् ।।२३१।।
रात्रिशेषं ततो विद्वान् जागरेण समापयेत् ।
कृतमेवंविधं कर्म देव्या हर्षविवर्द्धकम् ।।२३२।।
साधको लभते सिद्धिमेवं कृत्वा तु मन्त्रतः ।
एतत् तु सुकरं कर्म धैर्याधीनं सुरेश्वरि ।।२३३।।
कथितं ते सुगोप्यं हि न प्रकाश्यं कथंचन ।
कौतुकार्थं किंचिदन्यत् कथयिष्यामि पार्वति ।।२३४।।
साधकः करणाद्यस्य सर्वलोकप्रियो भवेत् ।
मण्डलं पुरतः कृत्वा हरिद्राचूर्णनिर्मितम् ।।२३५।।
चतुर्द्वारि शुभां रम्भां स्थापयेत् तां दलान्विताम् ।
तासु दीपावलिं दत्वा कौशलेन विशेषतः ।।२३६।।

अष्टम्यां प्रातरारभ्य तदहोरात्रकं जपेत् ।
वलिं च विधिवद्दत्वा होमाद्यन्तं समाचरेत् ।।२३७।।
विधायोपोषणं प्रातर्दक्षिणान्तां क्रियां चरेत् ।
महासिद्धिं लभेन्मन्त्री हरितालकरः परः ।।२३८।।
सुगोप्यमेतत् सर्वं हि कथितं तव भामिनि ।।२३९।।

कालीतन्त्रे—

अथ वा विजने रम्ये अस्थिशय्यासने नरः ।
उभयास्तं मनुं जप्त्वा सर्वसिद्धीश्वरो भवेत् ।।२४०।।
निजे क्रोडे विल्वमूले शवमारोप्य यत्नतः ।
नृसिंहमुद्रया वीक्ष्य जपेन्मातृकया नरः ।।
सहस्रं तत्र जप्त्वा तु सर्वसिद्धीश्वरो भवेत् ।।२४१।।

भैरवतन्त्रे—

अष्टाधिकं च साहस्रं कृत्वा प्रतिदिनं जपेत् ।
षण्मासात् सिद्धिसंयुक्तः कविर्विद्यानिधिर्भवेत् ।।२४२।।

तन्त्रान्तरे—

महापितृवने नक्तं शवशय्यासनस्थितः ।
षट्सहस्रं जपेन्मन्त्री सर्वसिद्धीश्वरो भवेत् ।।२४३।।

एतत् त्रितयमपि प्रथमविद्याविषयम् ।

साधनसमुच्चये—

या तिथिर्यस्य देवस्य तस्यां वा साधकोत्तमः ।
सूर्योदयं समारभ्य यावदस्तमयो भवेत् ।।२४४।।
सूर्यास्तं वा समारभ्य यावत् सूर्योदयो भवेत् ।
तावत्कालं जपेन्मन्त्रं पुरश्चर्येयमीरिता ।।
होमादिविप्रभोज्यान्तं कर्त्तव्यं पूर्ववद्बुधैः ।।२४५।।

[1]अगस्त्यसंहितायाम्—

चैत्रे मासि नवम्यां तु जातो रामः स्वयं हरिः ।
पुनर्वस्वृक्षसंयुक्ता सा तिथिः सर्वकामदा ।।२४६।।

---

१. 'अगस्त्यसंहिताया'मित्यारभ्य 'दशम्यामेव पारण' मित्यन्तं केवलं ५ पुस्तके उपलभ्यते ।

तथा—

तस्मिन् दिने महापुण्ये राममुद्दिश्य भक्तितः ।
जपेदेकान्त आसीनो यावत् स्याद्दशमीदिनम् ।।२४७।।
तेनैव स्यात् पुरश्चर्या दशम्यां भोजयेद्द्विजान् ।
भक्ष्यभोज्यैर्बहुविधैर्भक्त्या दद्याच्च दक्षिणाम् ।।
कृतकृत्यो भवेत् तेन सद्यो रामः प्रसीदति ।।२४८।।

तिथिनिर्णयमाह—

चैत्रे शुद्धा तु नवमी पुनर्वसुयुता यदि ।
सैव मध्याह्नयोगेन महापुण्यतमा भवेत् ।।२४९।।
नवमी चाष्टमी विद्धा त्याज्या विष्णुपरायणैः ।
उपोशणं नवम्यां वै दशम्यामेव पारणम् ।।२५०।।

वाडवानलीये—

वक्ष्ये तत्राप्यशक्तानां पुरश्चरणमुत्तमम् ।
पक्षाद्यां तिथिमारभ्य यावत् तद्देवतातिथिः ।।२५१।।
तावज्जपेद्वर्णमय्या मालया प्रहरद्वयम् ।
जपान्ते पूजनं कुर्यात् प्रत्यहं हवनादिकम् ।।
यस्य कस्यापि मन्त्रस्य पुरश्चरणमिष्यते ।।२५२।।

तत्रेति पूर्वोक्तलक्षजपरूपपुरश्चरण इत्यर्थः ।

अथ ग्रहणकालीनपुरश्चरणम् । तदुक्तं मेरुतन्त्रे—

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्वमुपोषितः ।।२५३।।
नद्यां समुद्रगामिन्यां नाभिमात्रे जले स्थितः ।
स्पर्शाद्विमुक्तिपर्यन्तं जपेन्मन्त्रं समाहितः ।।२५४।।
तावत्कालं जपित्वेत्थं ततो होमादिकं चरेत् ।
ब्राह्मणान् भोजयेत् पश्चात् पुरश्चर्यासमं त्विदम् ।।२५५।।
प्रायश्चित्ते प्रयोगस्य प्रत्यवायस्य नाशने ।
येषां जपे च होमे च सङ्ख्या तन्त्रेषु नोदिता ।।
तत्र सेयं पुरश्चर्या सर्वतन्त्रेषु गोपिता ।।२५६।।

तन्त्रान्तरेऽपि—

ग्रहणे चन्द्रसूर्यस्य शुचिः पूर्वमुपोषितः ।
नद्यां समुद्रगामिन्यां नाभिमात्रे जले स्थितः ।।२५७।।
यद्वा शुद्धोदके स्नात्वा शुचौ देशे समाहितः ।
स्पर्शाद्विमुक्तिपर्यन्तं जपं कुर्यादनन्यधीः ।।२५८।।
अनन्तरं दशांशेन क्रमाद्धोमादिकं चरेत् ।
तदन्ते महतीं पूजां कुर्याद् ब्राह्मणभोजनम् ।।२५९।।
ततो मन्त्रस्य सिद्ध्यर्थं गुरुं संपूज्य तोषयेत् ।
ततः प्रयोगान् कुर्वीत मन्त्रवित् कल्पनोदितान् ।।२६०।।

कालीतन्त्रे—

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
चन्द्रसूर्यग्रहे चैव ग्रासावधि विमुक्तितः ।।२६१।।
यावत्सङ्ख्यं मनुं जप्त्वा तावद्धोमादिकं चरेत् ।

सनत्कुमारसंहितायाम्—

अथ वाऽन्यप्रकारेण पौरश्चरणिको विधिः ।
चन्द्रसूर्योपरागे च स्नात्वा प्रयतमानसः ।।२६२।।
संस्पर्शादिविमोक्षान्तं जपेन्मन्त्रमनन्यधीः ।
दृष्ट्वा स्नात्वा च संकल्प्य विमोक्षान्तं जपं चरेत् ।।२६३।।
तावद्धोमादिकं कुर्याद् ग्रहणान्ते शुचिः पुमान् ।
एवं जपान्मन्त्रसिद्धिर्भवत्येव न संशयः ।।२६४।।

तावदिति यावान् जपो जात इत्यर्थः।

तदुक्तं सिद्धेश्वरीमतेऽपि—

चन्द्रसूर्यग्रहे देवि ग्रासावधि विमुक्तितः ।
यावत्सङ्ख्यमनुर्जप्तस्तावद्धोमादिकं चरेत् ।।२६५।।
पञ्चाङ्गं तावदेव स्याज्जपहोमौ समौ स्मृतौ ।
सिद्धेश्वरीमतं प्रोक्तं सर्वसिद्धिप्रदायकम् ।।२६६।।

चन्द्रपीठमन्त्रदेवप्रकाशिकरत्नावल्यादौ—

उपवासत्रयं कृत्वा एवं वा शक्त्यपेक्षया ।
श्राद्धादि चातिसंक्षेपाद् ग्रहणे स्पर्शमात्रतः ।।२६७।।

समुद्रगायां सरिति कण्ठमात्रे जले स्थितः ।
जपं कुर्यादुद्ग्रहान्तं होमाद्यं तद्दशांशतः ।।२६८।।
संपूर्णां दक्षिणां दत्वा मन्त्रसिद्धिमवाप्नुयात् ।
ततः प्रयोगान् कुर्वीत मन्त्रवित् कल्पनोदितान् ।।२६९।।

तन्त्रचिन्तामणि धृततन्त्रान्तरवचनानि—

अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
सूर्यचन्द्रोपरागे तु नाभिमात्रोदके स्थितः ।।२७०।।
ग्रासाद्विमुक्तपर्यन्तं जपं कुर्यान्महेश्वरि ।
तद्दशांशं होमयेद्धि तद्दशांशैस्त्रयं क्रमात् ।।२७१।।
अनेन क्रमयोगेन सङ्गमे संजपेच्च वा ।
एकाङ्गुष्ठोपरि स्थित्वा ग्रासावधि विमुक्तितः ।।२७२।।
पञ्चाङ्गं चाथ वाऽष्टाङ्गं दशाङ्गाख्यपुरस्क्रियाम् ।
कुर्याद्यत्नेन देवेशि सर्वसिद्धीश्वरो भवेत् ।।२७३।।
अथ वाऽन्यप्रकारेण पुरश्चरणमुच्यते ।
ग्रहणेऽर्कस्य चेन्दोर्वा शुचिः पूर्वमुपोषितः ।।२७४।।
घटिकार्धं पूर्वमेव ग्रहणं परिवर्त्तते ।
तदा स्नानं विधातव्यं ग्रस्ते संकल्पमाचरेत् ।।२७५।।
जाताशौचं मृताशौचं ग्रहणे नास्ति पार्वति ।
विमोक्षान्तं जपं कुर्यात् सम्यग्ज्ञाते समापनम् ।।२७६।।
सूर्ये छन्ने अनायातघटिकार्धं विचारयेत् ।
ततः समापनं कुर्यात् सिद्धमन्त्रो भवेद् ध्रुवम् ।।२७७।।
प्रमादाद्गलिते यागे बहुविप्रान् प्रभोजयेत् ।
यद्यदङ्गं विहीयेत तत्साङ्गे द्विजभोजनम् ।।२७८।।
दशांशं हवनं कुर्यात् तर्पणं तद्दशांशतः ।
मार्जनं तद्दशांशेन दशांशेनाभिषेचनम् ।।२७९।।
दशांशं विप्रभोज्यं च देवरूपो नरो भवेत् ।
यद्यदङ्गं विहीयेत तत्सङ्ख्याद्द्विगुणो जपः ।।
द्वित्रिवेदबाणभेदैर्विप्रादीनां क्रमः स्मृतः ।।२८०।।

वाडवानलीये—

**चन्द्रसूर्योपरागे च जपेन्मन्त्रमनन्यधीः ।**
**स्पर्शाद्विमुक्तपर्यन्तं तावद्धोमादिकं चरेत् ।।**
**अथ वा तद्दशांशेन पुरश्चरणुच्यते ।।२८१।।**

अत्र स्पर्शपदं स्पर्शज्ञानपरम्—

**चक्षुषा दर्शनं राहोर्यत् तद्ग्रहणमुच्यते ।**
**तत्र कर्माणि कुर्वीत गणनामात्रतो न हि ।।२८२।।**

इति स्मार्त्तवचनात् ।

तथा च—

**सूर्यग्रहणकालादिर्नान्यः कालः प्रशस्यते ।**
**यस्तु श्राद्धानुरोधेन ग्रहणे चन्द्रसूर्ययोः ।।**
**न करोति पुरश्चर्यां नरके स विपच्यते ।।२८३।।**

इत्यादिवचनान्मन्त्रिणां ग्रहणपुरश्चरणमावश्यकम् ।

**सर्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने ।**
**अकुर्वाणस्तु नास्तिक्यात् पङ्के गौरिव सीदति ।।२८४।।**

श्राद्धकरणे स्मार्त्तनिन्दार्थवादस्तु दीक्षितान्यपर इति सुधार्णवकृतः ।

तदुक्तं सनत्कुमारेणापि—

**जपयज्ञं परित्यज्य पितृयज्ञं करोति यः ।**
**स भवेद्देवताद्रोही पितॄन् सप्त नयत्यधः ।।२८५।।**

इति केचित् प्रतिनिधिद्वारा श्राद्धमामनन्ति ।

**अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि ।**
**हेमश्राद्धं सग्रहे च शूद्रः कुर्यात् स एव हि ।।२८६।।**

इति वचनाद्धेमश्राद्धं विधाय पुरश्चरणमाचरन्ति । हेमश्राद्धं च पित्रुद्देशेन यथाशक्तिसुवर्णदानम् । कल्पलताकृतस्तु— जपयज्ञं परित्यज्येत्यादि-सनत्कुमारवचनमारब्धपुरश्चरणमध्ये मध्याह्नपतित-सूर्यग्रहणविषयमित्याहुः। वस्तुतः स्मार्त्तानां श्राद्धं तान्त्रिकाणां तु पुरश्चरणमावश्यकम् ।

**तान्त्रिकस्तु जपं कुर्यात् स्मार्त्तः श्राद्धं समाचरेत् ।।२८७।।**

इति सिद्धान्तसार वचनात् ।

ग्रहणपुरश्चरणसंकल्पस्तु—

**ॐ अद्येत्यादिराहुग्रस्ते दिवाकरे निशाकरे वाऽमुकगोत्रोऽमुकशर्माऽमुकदेवताया अमुकमन्त्रसिद्धिकामो ग्रासाद्विमुक्तिपर्यन्तं जपरूपपुरश्चरणमहं करिष्ये**—इति ।

अत्र केचित् ।

**जपो होमस्तर्पणं च मार्जनं विप्रभोजनम् ।**
**पञ्चाङ्गोपासनं लोके पुरश्चरणमिष्यते ।।२८८।।**

तथा—

**सिद्धिकामोऽस्य मन्त्रस्य यावत्सङ्ख्यं जपं ततः ।**
**दशांशं हवनं कुर्यात् तद्दशांशं तु तर्पणम् ।।**
**दशांशं मार्जनं कुर्याद्दशाशं विप्रभोजनम् ।।२८९।।**

इत्यादिवचनादेकसंकल्पान्तरे तु पञ्चाङ्गोपासनमेव पुरश्चरणम् । ग्रहणपुरश्चरणादौ तु पुरश्चरणपदं भाक्तम् । तस्य जपमात्ररूपत्वादेकसंकल्पान्तरितपञ्चाङ्गोपासन-त्वाभावात् । तत्र होमादिविधानं तु प्रधानीभूतपुरश्चरणतुल्यताबोधनायेत्याहुस्तच्चिन्त्यम् ।

मेरुतन्त्रादौ मुख्यपुरश्चरणेऽपि प्रथमतो जपमात्रसंकल्पोक्तत्वात् । मन्त्रमार्गादिभेदेन न्यूनातिरिक्ताङ्गस्य पुरश्चरणस्य च तत्रैवोक्तत्वादेव संकल्पान्तरितपञ्चाङ्गोपासनस्यैव पुरश्चरणपदवाच्यत्वे प्रमाणाभावात् । 'पञ्चाङ्गोपासनंलोके पुरश्चरणमिष्यत' इत्यादिवचनं च येषां मन्त्राणां पञ्चाङ्गमेव पुरश्चरणं तन्मन्त्रपुरश्चरणपरं न तु मन्त्रसामान्यपुरश्चरणपरम् । एकेनैव वाक्येन साङ्गजपसंकल्पस्तु लाघवार्थः ।

साधनसमुच्चये—

**दोषादल्पाद्भयं हित्वा ज्योतिः शास्त्रनिरूपितम् ।**
**राहुं दृष्ट्वा जपं कुर्यात् कोटिपुण्यफप्रदम् ।।२९०।।**

ज्योतिःशास्त्रोक्तदोषप्रतीकारोऽप्युक्तस्तत्रैव ।

**निर्माय राजतं चन्द्रं सौवर्णं च दिवाकरम् ।**
**पञ्चोपचारैरभ्यर्च्य दद्याद्विप्राय बुद्धिमान् ।।२९१।।**—इति ॥

तथा—

**ग्रासाद्विमुक्तिपर्यन्तं यदा संकल्पितो जपः ।**
**ग्रस्तास्ते शास्त्रतो ज्ञात्वा विमुक्तिं जपमुत्सृजेत् ।।**

अदृष्ट्वा नैव भुञ्जीत सूर्यं वा रजनीकरम् ।।२९२।।

तथा—

यामत्रयं न भोक्तव्यं चन्द्रग्रहणपूर्वतः ।
सूर्यग्रहणतः पूर्वं प्रहराणां चतुष्टयम् ।।२९३।।

यत् तु मत्स्यपुराणे—

अपराह्णे न मध्याह्ने मध्याह्ने न तु संगवे ।
भुञ्जीत चेत् संगवे स्यान्न पूर्वं भुक्तिमाचरेत् ।।२९४।।

इति वचनं तद्बालवृद्धातुरविषयम् । तदुक्तं वृद्धवसिष्ठेन—

सूर्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामॉस्त्रीन् बालवृद्धातुरैर्विना ।।२९५।।—इति ॥

अथ वर्णौषधिपुरश्चरणम्

मेरुतन्त्रे—

अयोग्यगुरुतो लब्ध्वा वार्यादिस्थानमाश्रिताः ।
दुर्देशत्वात् पुरश्चर्यां कर्त्तुं चेच्छक्यते न हि ।।२९६।।
राज्ञो भाग्यमतो वाऽपि सुकुमारस्य वा यथा ।
सिद्धिर्भवेत् तथा वक्ष्ये वर्णौषधिपुरस्क्रियाम् ।।२९७।।
सप्तधा सा परिज्ञेया वर्णमासैस्तु सिद्धिदा ।
मन्त्रवर्णौषधीकाष्ठै रचयेद्‌गुटिकाः शुभाः ।।२९८।।
वर्णक्रमेण ताः प्रोह्या अनुलोमविलोमतः ।
स्थूलादिकाश्च लघ्वन्ताः कर्त्तव्या मणयो यथा ।।२९९।
सर्पद्वयाकृतिर्माला भवेन्नित्यं तया जपेत् ।
मालया मणिसङ्ख्याकं प्रथमोऽयं जपः स्मृतः ।।३००।।
सर्वे समाना मणयः प्रोतव्याः स्वर्णसूत्रके ।
कण्ठे धार्या कण्ठमाला नित्यमेव द्वितीयकः ।।३०१।।
तथैव राजते सूत्रे प्रोह्यैताः परिपूजयेत ।
तद्देवकल्पमार्गेण प्रक्रमोऽयं तृतीयकः ।।३०२।।
वर्णौषधीनां क्वाथेन नित्यस्नानं चतुर्थकः ।
वर्णौषधीरजो लिह्याद् गोधृतेन तु पञ्चमः ।।३०३।।

तच्चूर्णोद्वर्त्तनं नित्यं कुर्यादिति तु सप्तमः ।
तद्भस्मधारणं नित्यं कुर्यादिति तु सप्तमः ।।३०४।।

वर्णौषध्यस्तु प्रागुक्ताः ।

अथ वीरपुरश्चरणम्

अत्र रात्रिरेव काले न दिवसस्तदुक्तं मुण्डमालायाम्—

गते तु प्रथमे यामे तृतीयप्रहरावधि ।
प्रजप्तव्यं निशायां तु रात्रिशेषे जपेन्न च ।।३०५।।
हविष्यं भक्षयेन्नित्यमेकभक्तं सुसंयतः ।

कुलचूडामणौ—

पुरश्चरणकाले तु परशक्तिं प्रपूजयेत् ।
दीक्षितो वस्त्रपुष्पाद्यैर्भोज्यैः पायससम्भवैः ।।३०६।।
शून्यगेहे समानीय चार्घोदकविशोधितम् ।
अमृतीकरणं कृत्वा शक्तिरभिमुखं नयेत् ।।३०७।।

समानीय शक्तिपूजोपयुक्तद्रव्याद्यमृतीकरणं तेषामेव—

अर्घोदकेन सर्वास्ताः संप्रोक्ष्य विधिपूर्वकम् ।
अमृतीकरणं कुर्यात् सकलीकरणं ततः ।।३०८।।

अत्रामृतीकरणादिकं शक्तीनाम् ।

पूज्यशक्तीराह—

अथाष्ट कन्यका वक्ष्ये देवीरूपधरा यतः ।
ब्राह्मणी क्षत्रिया वैश्या शूद्रा च कुलभूषणा ।।३०९।।
वेश्या नापितकन्या च रजकी योगिनी तथा ।
विशेषवैदग्ध्ययुताः सर्वा एव कुलाङ्गनाः ।।३१०।।
अष्टकन्यारुपभेदं विलोक्यामर्षचेष्टिताः ।
ब्राह्मण्याद्यष्टशक्तिनां नामभिः कृतसंज्ञकाः ।।
गौरकृष्णादिकं रूपं सौम्यत्वं च गुणादिकम् ।।३११।।

शक्तीनां नामानि वक्ष्यमाणस्तोत्र एव वक्तव्यानि ।

पूजाप्रकारमाह—

आसनं प्रथमं दत्वा स्वागतं च वदेत् पुनः ।
अर्घ्यं पाद्यं च पानीयं मधुपर्कं जलं ततः ।।३१२।।

स्नापयेद्गन्धपुष्पाद्भिः केशसंस्कारमाचरेत् ।
धूपयित्वा ततः केशं कौशेयं विनिवेदयेत् ।।३१३।।
ततः स्नानान्तरे पीठमास्तीर्य पादुकाद्वयम् ।
दत्वा तत्र समासीना नानालङ्कारभूषणैः ।।३१४।।
भूषयित्वाऽनुलेपं च गन्धमाल्यं निवेदयेत् ।
तां तां शक्तिं समावाह्य मूर्ध्नि तासां समानयेत् ।।३१५।।
भोज्यमण्डपमध्ये तु स्वर्णपात्रे सुशोभने ।
चर्व्यं चोष्यं लेह्यपेयं भोज्यं चैव हि भक्षणम् ।।
अदीक्षिता यदा स्युस्तास्तदा मायां निवेदयेत् ।।३१६।।

तां तामिति । यस्य नाम्ना या संकेतिता तस्याः शिरसि तां शक्तिमावाह्य पूजयेदित्यर्थः। इदं चावाहनं मध्येऽप्युक्तमादावेवार्हति सर्वत्र तथा दर्शनात् ।

तत्रासां सव्यकर्णेषु ततः स्तोत्रं समाचरेत् ।
मातर्देवि नमस्तेऽस्तु ब्रह्मरूपधरेऽनघे ।।३१७।।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ।
माहेशि वरदे देवि परमानन्दरूपिणि ।।३१८।।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ।
कौमारि सर्वविघ्नेशि कुमारक्रीडनेऽवरे ।।३१९।।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ।
[1]विष्णुरूपधरे देवि महागरुडवाहिनि ।।३२०।।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ।
वाराहि वरदे देवि दंष्ट्रोद्धृतवसुन्धरे ।।३२१।।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ।
चामुण्डे मुण्डमालासृक्चर्चिते विघ्ननाशिनि ।।३२२।।
कृपयाहर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ।
महालक्ष्मि महामोहक्षोभसंतापनाशिनि ।।३२३।।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ।
पितृमातृमये देवि पितृमातृबहिस्कृते ।।३२४।।

---

१. इदं केवलं २ पु. उपलभ्यते ।

एके बहुतरे देवि विश्वरूपे नमोऽस्तु ते ।
एतत् स्तोत्रं पठेद्यस्तु कर्मारम्भे सु संयतः ।।३२५।।
विदग्धां वा समालोक्य तस्य विघ्नो न जायते ।
यदि व्रीडापरास्तास्तु भोजने तद्गृहाद्बहिः ।।३२६।।
स्थित्वा स्तोत्रं पठेत् तावद्यावत् तृप्तिः प्रजायते ।
आचम्य मुखवासादि ताम्बूलं च निवेदयेत् ।।३२७।।

तथा—

ततो दद्यात् पुनर्मालां चन्दनं पङ्क्तिं शुभम् ।
विसृज्य प्रदक्षिणीकृत्य वरं प्रार्थ्य सुखी भवेत् ।।३२८।।
अन्या यदि न गच्छन्ति निजकन्या निजानुजा ।
अग्रजा मातुलानी वा जननी तत्सपत्निका ।।३२९।।
वयस्या ज्ञातिजा वाऽपि निःपतिर्वा सभर्तृका ।
पूर्वाभावे परा पूज्या मदंशा योषितो यतः ।।३३०।।
एका चेद्युवती तत्र पूजिता वा विलोकिता ।
सर्वा एवं तदा देव्यः पूजिताः कुलभैरव ।।३३१।।

इदं च पुरश्चरणस्यादौ मध्ये चान्ते च कर्त्तव्यम् । तथा हि तत्रैव—

आदावन्ते च मध्ये च लक्षपूर्त्तौ विशेषतः ।
न पूजयति चेत् कान्तां तदा विघ्नैर्विलुप्यते ।।३३२।।

वीरचूडामणौ—

क्षेत्रमादौ तु संशोध्य समसूत्रं मनोहरम् ।
वेदिकां कारयेत तत्र मध्ये मुण्डं विनिःक्षिपेत् ।।३३३।।
अलिना लेपनं कुर्यान्मध्ये चाष्टदलं लिखेत् ।
पूर्वादिक्रमतो ज्ञेयं स्वरयुग्मं लिखेत् क्रमात् ।।३३४।।
वर्गाष्टकं लिखेत् तत्र मध्ये प्रासादमालिखेत् ।
गगनं बिन्दुसंयुक्तं लाङ्गलीशं तथैव च ।।३३५।।
सविसर्गं वरारोहे केशरेषु लिखेत् ततः ।
तत्राधारादि संपूज्य आसनं स्थापयेद्बुधः ।।३३६।।
उपविश्यासने वीरो यत्र कुत्राप्यचूडके ।
पार्ष्णिघातत्रंय कुर्याच्छोटिकात्रितयं ततः ।।३३७।।

दिग्बन्धमस्त्रमन्त्रेण पूर्वादिक्रमतो बुधः ।
वकेशान्ते पिनाकीशं नादबिन्दुविभूषितम् ।।३३८।।
पशुपदं समुच्चार्य रमान्तेऽस्त्रमनूत्तमम् ।
पाशुपताख्यविद्येयं सर्वविघ्नविनाशिनी ।।३३९।।

वकेशः शकारः । पिनाकीशो लकारः ।

भूतशुद्धिं विधायादौ न्यासपूर्वं विधानतः ।।३४०।।

तथा—

गोमयेन विलिप्तायां भूमौ मण्डलमालिखेत् ।
अलिना लेपनं कुर्याद्यक्षकर्दमकेन वा ।।३४१।।
सूत्रेण सूत्रितं पद्मं समसूत्रं मनोहरम् ।
रक्तं श्वेतं हरिद्वर्णं कृष्णपत्रं सुकेशरम् ।।३४२।।
चतुरस्रं सुशोभाढ्ये तन्मध्ये योनियुग्मकम् ।
त्रिकोणं चैव तन्मध्ये शून्ये शून्यं विचिन्तयेत् ।।३४३।।
योजयेद्दीपितां नारीं तत्र संपूजयेन्मनुम् ।
तत्रैव देवीं संस्थाप्य ईषद्धासां सुलोचनाम् ।।३४४।।
षोडशाब्देन युवतीमप्रसूतां तपस्विनीम् ।
स्वाधीनां स्वच्छवस्त्रां च भीतिहीनाट्टहासिनीम् ।।३४५।।
तीव्रशुद्धिं दृढाचारां मुक्तकेशीं दिगम्बराम् ।
योगमुद्राधरां वाऽपि योगाचारपरायणाम् ।।३४६।।
ईदृशीं मन्त्रसंयुक्तां यागकाले प्रपूजयेत् ।
मातङ्गीं तन्तुकारीं च भवाब्धिभीतिनाशिनीम् ।।३४७।।
खट्वाकारीं चर्मकारीं शिल्पिनीं नापिताङ्गनाम् ।
हट्टनारीं विशेषात् तु सुपुष्पकेण कोमलाम् ।।३४८।।
सामान्यार्घं विशेषार्घं स्वपात्रं शक्तिपात्रकम् ।
तन्मध्ये निःक्षिपेद्द्रव्यं सामरस्यामृतोद्भवम् ।।३४९।।
तत्त्वपञ्चकमन्त्रेण एकैकं शोधयेद्बुधः ।
वह्निसूर्यकलाचन्द्रकलान्ते हृदयं मनुम् ।।३५०।।
त्रिकोणं विलिखेन्मध्ये त्रिकोणमकथादिकम् ।
खान्तं षान्तं तथा नान्तं यान्तं धान्तं सशत्रुकम् ।।३५१।।

वामकर्णसमायुक्तं बिन्दुनादैरलङ्कृतम् ।
रत्नेश्वरीति विद्याख्यं पञ्चरत्नात्मकं मनुम् ।।३५२।।
षडङ्गेनैव संपूज्य मूलमन्त्रेण मन्त्रयेत् ।

स्वतन्त्रतन्त्रे—

रात्रौ मांसासवैर्देवीं पूजयित्वा विधानतः ।
ततो नग्नां स्त्रियं नग्नो रमन् क्लेदयुतोऽपि वा ।।३५३।।
जपेल्लक्षं ततो देवीं होमयेज्ज्वलितानले ।
योनिकुण्डे स्थितं सर्पिर्मत्स्यं मांसं फलं तथा ।।३५४।।
दशांशं तर्पयेन्मद्यं मांसमिश्रैस्तु साधकः ।
तर्पणस्य दशांशं तु अभिषिञ्च्य जगन्मयीम् ।।३५५।।
दशांशं भोजयेत् साधु साधकं कालिकाप्रियम् ।
मद्यं मांसं च मत्स्यं च चर्वणं च प्रदापयेत् ।।
ततस्तु तोषयेद्भक्त्या गुरुं स्वर्णादिभिः प्रिये ।।३५६।।

तन्त्रशेखरे—

एवं प्रकुर्वतस्तस्य प्रथमे वत्सरत्रये ।
भवन्ति बहवो विघ्नाः श्रद्धाभावादयोऽशुभाः ।।३५७।।
अस्मिन्नर्थे भवेन्मन्त्री यदि नोद्विग्नमानसः ।
सेत्स्यतीति च विश्वस्तस्तदाऽसौ सिद्धिभाग् भवेत् ।।३५८।।

कालीकल्पे—

न न्यासो योषितां तत्र न पूजा नापि चिन्तनम् ।
रात्रौ जपैकमात्रेण सिद्धिदा दक्षिणा भवेत् ।।
नवमाद्वत्सरादूर्ध्वं स्वयं सिद्ध्यति मन्त्रराट् ।।३५९।।

इति वीरपुरश्चरणविधिः ।

मेरुतन्त्रे—

वाममार्गे द्रुतं सिद्धिः कर्मणा येन जायते ।
तदहं संप्रवक्ष्यामि सूक्ष्मसाधनमद्भुतम् ।।३६०।।
अष्टम्यां वा चतुर्दश्यां कृष्णायां भौमवासरे ।
गृहीत्वा नृकपालं तु मद्यं मांसं तथोदनम् ।।३६१।।

कल्माषान् मिश्रितान् कृत्वा गच्छेदश्वत्थभूमिकाम् ।
एकान्ते निर्जने तस्य तले संलिप्य भूमिकाम् ।।३६२।।
दण्डमात्रानष्टदिक्षु कीलान्मूलेन पूरयेत् ।
अष्टोत्तरसहस्रेण सप्ततन्तुकडोरकम् ।।३६३।।
निबन्धयेत् तत्र पूजां देवतायाः समाचरेत् ।
देवीं तु हृदि संस्थाप्य तस्मिन् स्थाने सुदीपकम् ।।३६४।।
कुर्याच्च नरतैलेनाभावे कपिलहव्यकैः ।
तदभावे तु तैलेन कुडवप्रमितेन च ।।३६५।।
दीपं कुर्यादष्टशतसूत्राणां वर्त्तिका मता ।
तस्योपरि कपालं तत्कज्जलार्थं निवेशयेत् ।।३६६।।
दीपं दृष्ट्वा जपेन्मत्रं नान्यतस्तु विलोकयेत् ।
अर्धे प्रज्वलिते तैले भूतप्रेतपिशाचकाः ।।३६७।।
नानारूपा भिन्नशब्दाः साधकं भीषयन्ति ते ।
न भेतव्यं तदन्तं तु वामहस्तेन निःक्षिपेत् ।।३६८।।
तेषामग्रे नान्यदृष्टिः प्रपश्येद्दीपमेव हि ।
किञ्चिच्छेषे दीपतैले देवी सा वरदा भवेत् ।।३६९।।
तस्यै तत्र वलिं दत्वा श्रुत्वा संयाचयेद्वरम् ।
पूर्वकर्मविपाकेन यदि नायाति देवता ।।३७०।।
दीपान्ते कज्जलं ग्राह्यं तत्र देवीं प्रपूज्य च ।
आनयेत् तद्गृहे सिद्धं दत्वाऽक्ष्णोः स्याज्जगद्वशम् ।।३७१।।
दत्वाऽक्ष्णोः कज्जलं तच्च प्रयोगानाचरेत् ततः ।
सर्व एवं प्रसिद्ध्यन्ति लोलुपे न गुरौ सति ।।
रक्षयेदञ्जनं सम्यङ् न चेद्भक्षति भैरवः ।।३७२।।

तत्रैव—

अथातः संप्रवक्ष्यामि सर्वतन्त्रेषु गोपितम् ।
सर्व[1]सिद्धिकरं दीपं न वाच्यं यस्य कस्यचित् ।।३७३।।
शक्त्याद्यर्हगणार्केषु भक्तो वर्णः प्रजायते ।
मन्त्रवर्णस्य दिवसे क्रमाद्दीपं प्रकल्पयेत् ।।३७४।।

१. मन्त्रसिद्धिकरमिति २—४ पु. पा. ।

सायं तु कुडवाज्यस्य वर्त्तिर्भूपञ्चतन्तुभिः ।
यावज्ज्वलति दीपोऽसौ तावत् पश्यन्मनुं जपेत् ।।३७५।।
मन्त्रार्णसङ्ख्यदीपेषु ज्वलितेष्वथ तद्दिने ।
पुनर्दीपे कृते सा तु दीपे संदृश्यते स्फुटा ।।३७६।।
इष्टं स्वकीयं कथयेद्याचयेन्मनसेप्सितम् ।
ददाति देवता तुष्टा गुह्यमेतत् प्रकाशितम् ।।३७७।।

अथ दूतीयागविधिः

रुद्रयामले—

दूतीयागस्य विधिना रममाणो वरस्त्रिया ।
जप्त्वा मन्त्रं साधकेन्द्रः सद्यः सिद्धिमवाप्नुयात् ।।३७८।।

तन्त्रान्तरे—

पुरुषेण विना किञ्चित् प्रकृत्या क्रियते न हि ।
तथा शक्तिं विना देवः फलं दातुं क्षमो न हि ।।
तस्मात् पुंशक्तिसंयोगं कृत्वा मन्त्रं प्रसाधयेत् ।।३७९।।

कुमारीतन्त्रे—

नटी कपालिनी वेश्या रजकी नापिताङ्गना ।
ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका ।।३८०।।
मालाकारस्य कन्या च नव कन्याः प्रकीर्त्तिताः ।
एतासु कांचिदानीय ततस्तद्योनिमण्डले ।।३८१।।
पूजयित्वा महादेवी ततो मैथुनमाचरेत् ।

देवीयामले—

अथ पूजाफलं वक्ष्ये उत्तरोत्तरगोचरम् ।।३८२।।
स्वशक्त्या अयुतं पुण्यं परशक्तिप्रपूजने ।
ततो वेश्याऽधिका ज्ञेया रजकी च ततोऽधिका ।।३८३।।
रजक्याः क्षुरकी श्रेष्ठा क्षुरक्याश्चर्मकारिणी ।
ततोऽधिकतर प्रोक्ता हेतुनारी वरानने ।।३८४।।
ततोऽप्यन्तजसम्भूता चाण्डाली च ततोऽधिका ।
ततो मातङ्गिनी श्रेष्ठा मातङ्ग्याः पुष्कशी तथा ।।३८५।।

पुष्कश्या अन्त्यजा श्रेष्ठा ततोऽतिसुन्दरी स्मृता ।
सुन्दरी परतः प्रोक्ता प्रीतिमत्यनुरागिणी ।।३८६।।
तत्परा परमेशानि उन्मत्ता शुभलक्षणा ।
समयाचारसंपन्ना मन्त्रज्ञा भयवर्जिता ।।३८७।।
विदग्धा त्वप्रसूता च धैर्यस्वातन्त्र्यसंयुता ।
एवंगुणसमायुक्ताः पूजयेत् सर्वयोषितः ।।३८८।।

महाकालसंहितायाम्—

ऋषिकन्यां न चाकर्षेन्मद्यपानां च कन्यकाम् ।
द्विजातीनां स्त्रियं चापि व्रतस्थानां स्त्रियं तथा ।।३८९।।
गुर्वङ्गनां गुरोः पत्नीं सगोत्रां शरणागताम् ।
शिष्ययोषां न चाकर्षेत् पापिनां वनितां तथा ।।
नापुष्पितां गुर्विणीं वा बालापत्यां तथा पुनः ।।३९०।।

देवीयामले—

आत्मीया च परा चैव शक्तिमात्रं महेश्वरि ।
मन्त्राधिदेवताबुद्ध्या पूज्याः सर्वोपचारकैः ।।३९१।।
विविधैः फलताम्बूलैर्वस्त्रालङ्कारहेमभिः ।
संपूज्य विधिवद्भक्त्या बहुहेतुं प्रदापयेत् ।।३९२।।
संभोगवासनां कृत्वा यः कुर्याच्छक्तिपूजनम् ।
स दारिद्र्यमवाप्नोति नारकी च भवेद् ध्रुवम् ।।३९३।।

वीरचूडामणावपि—

आनीय युवतीं रम्यां कुलकर्मविलासिनीम् ।
षोडशाब्देन युवतीं पीतोन्नतपयोधराम् ।।३९४।।
उन्मत्तां मत्तमातङ्गीं सदा घूर्णितलोचनाम् ।
मृगशावकनेत्रां च सारङ्गीं मृदुहासिनीम् ।।३९५।।
क्रोधलोभदयादम्भमोहमायाविवर्जिताम् ।
स्वामिधर्मरतां सत्यवादिनीं च सदा शुचिम् ।।३९६।।
गणिकां नटीं चाण्डालीं जीविनीं जारजामथ ।
योगमुद्राधरां गोपीं चर्मकारीं च चित्रिणीम् ।।
चतुर्वर्णसमायुक्तामुत्तमां पर्वतोद्भवाम् ।।३९७।।

महाकालः—

स्नातां दिव्याम्बरधरां नानालङ्कारभूषिताम् ।
युवतीं पीनवक्षोजां तथा चाकृतिभोजनाम् ।।३९८।।
हस्ते गृहीत्वा वामोरौ स्थापयेच्छक्तिमुत्तमाम् ।
अशक्नुवानो वोढुं तां देवीं वामेऽथ वाऽऽसने ।।३९९।।

वीरचूडामणौ—

वामभागे समालिख्य त्रिकोणं पद्मवर्त्तुलम् ।
श्वेतरक्तसमायुक्तं नीलं सिन्दूरचर्चितम् ।।४००।।
साधकः प्राङ्मुखो भूत्वा देवीं प्रत्यङ्मुखां जपेत् ।
पीठशक्तिं विधानेन नव शक्तिः प्रपूजयेत् ।।४०१।।
रतिः प्रीतिः प्रिया कान्तिः कामिनी काममालिनी ।
कन्दर्पदलिनी दुर्गा भाविनी नव शक्तयः ।।४०२।।
वियद् भृगुं समुच्चार्य मनुबिन्दुकलान्वितम् ।
महाप्रेतपदं पश्चाद्धृदयान्तमिमं मनुम् ।।४०३।।
मूलं मन्त्रं समुच्चार्य संबुद्ध्या तारिणीपदम् ।
एह्येहि च पदं पश्चात् पादुकाभ्यां पुनः पुनः ।।
गृहीत्वा वामहस्तेन आसने चोपवेशयेत् ।।४०४।।

तारिणीपदमित्युपलक्षणं स्वेष्टदेवतानामित्यर्थः ।

तथा—

रक्तचन्दनलिप्ताङ्गीं रक्तपुष्पविभूषिताम् ।
सर्वालङ्कारसंयुक्तां विवस्त्रां पूजयेत् प्रिये ।।४०५।।
वारुणीमदमत्तां च हावभावसमावृताम् ।
यावदाकण्ठपर्यन्तं तावत् पानं प्रदापयेत् ।।४०६।।
ध्यानं कुर्यान्महेशानि गह्वरे मकरानने ।
ताम्रचूडसमाकारं गजवक्त्रसमप्रभम् ।।४०७।।
तत्रस्थां चिन्तयेद्देवीं विद्यां भुवनमोहिनीम् ।
तारं वै हृदयान्ते च पश्चान्मदनमन्दिरम् ।।४०८।।
चतुर्थ्यन्तं जपद्देवि भगे पुष्पं विनिःक्षिपेत् ।
प्रक्षाल्य कुलद्रव्येण गन्धपुष्पैः समर्चयेत् ।।४०९।।

धूपदीपादिकं कृत्वा पश्चादावरणं यजेत् ।
इच्छा ज्ञाना क्रिया पश्चाद्वामा ज्येष्ठा च रौद्रिका ।।४१०।।
रतिः प्रीतिस्तथा कामं पुष्पबाणधनुर्धरम् ।
वसन्तं पूजयेत् पश्चात् पत्राङ्कुरसमन्वितम् ।।४११।।
चिकुरं पूजयेद् देवि अलिस्यन्दसमन्वितम् ।
विरिञ्चिं पूजयेन्नाभौ हृदये च हरं हरिम् ।।४१२।।
स्तने वक्त्रे महेशानि त्रिमूर्तिं पूजयेत् ततः ।
कामेशीं चैव विश्वेशीं परां तु भगमालिनीम् ।।४१३।।
भ्रुवोर्मूले महेशानि पञ्चबाणान् प्रपूजयेत् ।
द्रामाद्यां द्राविणीं मूर्ध्नि द्रीमाद्यां क्षोभिणीपदम् ।।४१४।।
क्लीँ वशीकरणीं वक्त्रे गुह्ये ब्लूँ बीजपूर्विकाम् ।
आकर्षिणीं हृदि पुनः सर्गान्तभृगुसंयुताम् ।।४१५।।
संमोहिनीं क्रमादेवं बाणपूजनमीरितम् ।
कर्णयोः पूजयेच्चक्रे भानुं चन्द्रं क्रमेण च ।।४१६।।
रसनायां वह्निः पूज्यो नेत्रे नक्षत्रमालिनी ।
प्राणं संपूजयेद्घ्राणे आज्ञायां त्रिपथगामिनीम् ।।४१७।।
अक्षोभ्यं पूजयेन्मूर्ध्नि गन्धपुष्पोपहारकैः ।
पुष्पमालां गले दद्यादथ शक्त्या जपेद् बुधः ।।४१८।।

अक्षोभ्यं पूजयेदिति ताराविषये ।

ज्ञानार्णवे—

पञ्चमं गजदन्तस्य हेमरूप्यादिनिर्मितम् ।
विशुद्धक्षौमरचितां तुलिकां तत्र योजयेत् ।।४१९।।
पुष्पाण्याकीर्य मध्ये तु कर्पूरस्य रजस्तथा ।
मण्डूकादीँस्तत्र देवि उपर्युपरि शैलजे ।।४२०।।
मण्डूकं पूजयेदादौ रुद्रं कालाग्निसन्निभम् ।
आधारशक्तिं कूर्मं च तथाऽनन्तं वराहकम् ।।४२१।।
पृथिवीं च तथा कन्दं नालं पद्मं दलं तथा ।
केशरालीश्च संपूज्य कर्णिकां पूजयेत् ततः ।।४२२।।

मञ्चकं च समभ्यर्च्य तत्र पादचतुष्टये ।
धर्मं ज्ञानं च वैराग्यमैश्वर्यं च क्रमाद्यजेत् ।।४२३।।
अपूर्वान् पूजयेदेताँस्तत्पादानां समीपके ।
आत्मान्तरात्मपरमज्ञानात्मनः प्रपूजयेत् ।।४२४।।
मञ्चकाग्रेषु संपूज्य गुणत्रयमथार्चयेत् ।
दूतीं सुलक्षणां रम्यां सर्वलक्षणलक्षिताम् ।।४२५।।
नानालङ्कारसुभगां स्ववशां शारदामिव ।
पूजयेत् परमेशानि पञ्चकामशरैस्तथा ।।४२६।।
वटुकादीँश्चतुर्दिक्षु पूजयेत् सिद्धिहेतवे ।
मातृकां विन्यसेत् तस्माद्देहे कामशरान्विताम् ।।४२७।।
त्रिकोणं विन्यसेन्मूर्ध्नि तत्र पूजां यजेत् क्रमात् ।
त्रिकोणमध्ये वालाख्यां कामेशीं परिपूजयेत् ।।४२८।।
गणेशं च कुलाध्यक्षं तथा लक्ष्मीं सरस्वतीम् ।
त्रिकोणेषु च संपूज्य वसन्तं मदनं प्रिये ।।४२९।।
स्तनयोः पूजयेत् पश्चान्मुखे तस्याः कलाधरम् ।
वाग्भवं कामराजं च स्त्रीबीजं कामराजकम् ।।४३०।।
हसक्लेमात्मकं दत्वा आधारशक्तिमुच्चरेत् ।
श्रीपादुकां ततो दत्वा पूजयामि वदेत् ततः ।।४३१।।
अनेन मनुना तस्य ललाटे सुमनोहरम् ।
त्रिकोणं तत्र संलिख्य सिन्दूराद्यैर्विशेषतः ।।४३२।।
वटुकं योगिनीं चैव क्षेत्रपालं गणेश्वरम् ।
लक्ष्मीं सरस्वतीं चैव पूजयेत् तत्र सुन्दरि ।।४३३।।
कामबीजं समुच्चार्य कामराजं ततः परम् ।
श्रीपादुकां ततो दत्वा पूजयामि वदेत् ततः ।।४३४।।
दक्षपादतले देवि पूजयेन्मनुनाऽमुना ।
वँ वसन्तं समुच्चार्य नादहीनारमाततः ।।४३५।।
पादुकां पूजयामीति तस्या वामकरे न्यसेत् ।
शक्तिबीजं समुच्चार्य सोमपादपदं ततः ।।४३६।।

श्रीपादुकां ततो दत्वा पूजयामि स्तनद्वये ।
आरोहक्रमतः कामकलान्यासं चरेत् सुधीः ।।४३७।।

स्मरदीपिकायाम्—

पादे गुल्फे तथौरौ च भगे नाभौ कुचे हृदि ।
कण्ठे कक्षे तथौष्ठे च गण्डे नेत्रे श्रुतावपि ।।
शीर्षे सर्वशरीरे च वसेत् कामः स्थितिक्रमात् ।।४३८।।

इति स्थानान्युक्तानि । कलानां नामानि तु तन्त्रे—

श्रद्धा प्रीती रतिश्चैव धृतिः शान्तिर्मनोहरा ।
मनोरमा मनोरामा मदनोन्मादिनीति च ।।४३९।।
मोहिनी दीपनी चैव शोषिणी च वशङ्करी ।
रञ्जिनी सुभगा देवी षोडशी प्रियदर्शना ।।४४०।।
अकारादिस्वरैरर्च्याः कलाः कुसुमधन्वनः ।
पूषाऽर्यमा सुमनसा रतिः प्रीतिस्तथा धृतिः ।।४४१।।
ऋद्धिः सौम्या मरीचिश्च दशमी चांशुमालिनी ।
अङ्गिरा शशिनी चैव च्छाया संपूर्णमण्डला ।।४४२।।
पुष्टिश्चैवामृता चेति कला सोमस्य षोडश ।
अकारादिस्वरयुताः पूजनीया मनीषिभिः ।।४४३।।
दक्षपादादि मूर्धान्तं वामे मूर्धादि सुन्दरि ।
पादान्तं पूजयेत् सर्वाः कला वै कामसोमयोः ।।४४४।।

तन्त्रान्तरे—

पृष्ठवंशात् समारभ्य शिरोऽन्तं कामवाचकम् ।
विन्यस्य विधिवन्मन्त्री पूजयेत् तत् तु मूर्धनि ।।४४५।।
धर्मात्मकं समुच्चार्य कामचापपदं ततः ।
पादश्रीपादुकां दत्वा पूजयामीति पूजयेत् ।।४४६।।
मूर्ध्नि पादे मुखे गुह्ये हृदये च यथाक्रमात् ।
पञ्चबाणैः पञ्चबाणान् यथास्थानेषु पूजयेत् ।।४४७।।
द्रांँ द्रावणपदं दत्वा बाणपादपदं ततः ।
श्रीपादुकां वदेत् पश्चात् पूजयामीति पूजयेत् ।।४४८।।

द्रीमात्मकं समुच्चार्य उन्मादबाणमुच्चरेत् ।
पादश्रीपादुकां दत्वा पूजयामीति पूजयेत् ।।४४९।।
कामबीजं ततो दत्वा मोहबाणपदं ततः ।
पादश्रीपादुकां दत्वा पूजयामीति पूजयेत् ।।४५०।।
ब्रह्मात्मकं समुच्चार्य संदीपनपदं ततः ।
बाणपादपदं दत्वा श्रीपादुकां ततो वदेत् ।।४५१।।
पूजयामीति संपूज्य शेषे बाणं समुच्चरेत् ।
शोषणं च समालिख्य बाणपादपदं ततः ।।४५२।।
श्रीपादुकां ततो दत्वा पूजयामीति पूजयेत् ।
ललाटमण्डले पश्चात् त्रिकोणं पूजयेत् ततः ।।४५३।।
वाग्भवं शुभपादं च श्रीपादुकां ततो वदेत् ।
पूजयामि ततो दत्त्वा दक्षरेखासु पूजयेत् ।।४५४।।
द्रीमात्मकं समुच्चार्य भगसर्पिः पदं ततः ।
श्रीपादुकां ततो दत्वां पूजयामीति पश्चिमे ।।४५५।।
कामब्रीजं समुच्चार्य भगसर्पिःपदं ततः ।
श्रीपादश्रीपदं दत्वा पादुकां च ततो वदेत् ।।४५६।।
पूजयामीति चोच्चार्य पूजयेद्वामपार्श्वके ।
ह्सौँ रात्मकमालिख्य भगावहपदं ततः ।।४५७।।
पादश्रीपादुकां दत्वा पूजयेन्मध्यदेशतः ।
श्रीउड्डीशपदं दत्वा देवीमुड्डीश्वरीं ततः ।।४५८।।
नाथदेवपदं दत्वा श्रीरक्ताम्बां ततो वदेत् ।
श्रीचर्यानाथमालिख्य पादश्रीपादुकां ततः ।।४५९।।
पूजयामीत्युड्डियाने पूजयेद् हृदि सुव्रते ।
श्रीपादं च समालिख्य जालन्धरपदं ततः ।।४६०।।
महापीठं समालिख्य नादहीना रमा ततः ।
जालेश्वरीपदं दत्वा देवीजालीशमालिखेत् ।।४६१।।
नाथदेवपदं दत्वा श्रीजालाम्बापदं ततः ।
श्रीषष्ठीशपदं दत्वा नाथदेवपदं ततः ।।४६२।।

पादश्रीपादुकां दत्वा पूजयामीति पूजयेत् ।
अनेन मनुना देवि पूजयेन्नाभिमण्डले ।।४६३।।
श्रीपदं च ततो दत्वा पूर्णेश्वरीं वदेत् ततः ।
देवीश्रीपादश्रीपूर्णनाथदेवपदं तथा ।।४६४।।
श्रीचामुण्डापदमाभाष्य देवीश्रीपदमालिखेत् ।
उड्डीशनाथमालिख्य देवपादपदं ततः ।।४६५।।
श्रीपादुकां ततो दत्वा कामेश्वरीपदं ततः ।
देवीश्रीपदमाभाष्य कामेश्वरानन्दनाथ च ।।४६६।।
श्रीमहापदमाभाष्य तुष्टाम्बाश्रीपदं ततः ।
मित्रीशनाथमाभाष्य पादश्रीपादुकां ततः ।।
पूजयामि ततो दत्वा पूजयेत् कामनाशने ।।४६७।।

तन्त्रान्तरे—

शक्तेः सर्वशरीरं यत् पीठं पूर्णगिरिर्मतः ।
तस्याः शिरश्चन्द्रभागे उद्यानं परिकीर्त्तितम् ।।
स्तनौ जालन्धरं प्रोक्तं कामरूपं भगं स्मृतम् ।।४६८।।

तन्त्रान्तरे—

गुह्यपीठस्य वामे तु गुरुपङ्क्तिं जपेत् सुधीः ।
अनङ्गकुसुमाद्येन हृत्सरोजे यजेत् पुनः ।।४६९।।
वाग्भवं ब्लौँ समुच्चार्य ब्लीमात्मकं वदेत् ततः ।
ब्लाँ ब्लीँ ब्लूँः समुच्चार्य मन्त्रेणानेन साधकः ।।४७०।।
योनिमुद्रां प्रदर्श्याथ योनौ क्षोभं विचिन्तयेत् ।
वाग्भवं कामराजं च स्त्रीबीजं तदनन्तरम् ।।४७१।।
क्षोभिणी नाम विद्येयं स्तनयोः क्षोभमाचरेत् ।
योनिमुद्रां प्रदर्श्याथ शनैरेव हि साधकः ।।४७२।।
वाग्भवं स्फुँ समुच्चार्य ब्लैँ ब्लीँ ब्लँ च ततो वदेत् ।
क्लीमात्मकं समुच्चार्य ह्लीमात्मकं समुच्चरेत् ।। ४७३।।
क्षमात्मकं ततो दत्वा तस्याः क्षोभं विचिन्तयेत् ।
द्राविणी नाम विद्येयं चिन्तयेद्योनिमध्यतः ।।४७४।।

ततः परानन्दमयो भूत्वा निर्भरमानसः ।
चिन्तयेन्निजविद्याया बीजं मूर्ध्नि सरोजके ।।४७५।।
ततस्तस्या योनिमध्ये मूलमन्त्रैश्च साधकः ।
पुष्पाञ्जलित्रयं दत्वा ततः क्षोभं विचिन्तयेत् ।।४७६।।

ज्ञानार्णवे—

दूतीदेहकृतान् न्यासान् स्वदेहेऽपि विचिन्तयेत् ।

वीरचूडामणौ—

अथ न्यासं प्रवक्ष्यामि शिवात्मानं विभावयेत् ।।४७७।।

शिवात्मानमिति शिवमात्मानमित्यर्थः ।

तथा—

पञ्चवक्त्रं महादेवं कलायुक्तं न्यसेत् क्रमात् ।
ईशानः सर्वविद्यानां शशिनी प्रथमा कला ।।४७८।।
ईश्वरः सर्वभूतानामङ्गदा तदनन्तरम् ।
ब्रह्माधिपतिशब्दान्ते ब्रह्मणोऽधिपतिः पुनः ।।४७९।।
ब्रह्मा सदाशिवो मेऽस्तु मरीचिसंपुटं न्यसेत् ।
सदाशिवाँ समुच्चार्य अंशुमालिन्यथापरा ।।४८०।।
तत्पुरुषाय विद्महे कला शान्तेरितीरिता ।
महादेवाय धीमहि कलाविद्या तथैव च ।।४८१।।
तन्नो रुद्रपदं पश्चात् प्रतिष्ठा कथिता कला ।
प्रचोदयात् समुच्चार्य निवृत्तिः स्यात् ततः परम् ।।४८२।।
पूर्वपश्चिमयाम्येषु उत्तरेष्वप्यनुक्रमात् ।
हृदये विन्यसेद्देवि अघोरेभ्यस्तमःकलाम् ।।४८३।।
अघोरेभ्यो मोहनां च ग्रीवायां विन्यसेत् ततः ।
घोरान्ते स्यात् क्रियां पश्चाद्दक्षिणांसे प्रविन्यसेत् ।।४८४।।
निद्रां घोरतरेभ्यो वै वामांसे विन्यसेत् ततः ।
सर्वतः सर्वमुच्चार्य व्याधिं नाभौ प्रविन्यसेत् ।।४८५।।
सर्वेभ्यस्तत्कलां मृत्युं कुक्षौ देशे प्रविन्यसेत् ।
नमस्तेऽस्तु क्षुधां पश्चात् कलां पृष्ठे न्यसेत् क्रमात् ।।४८६।।

रुद्ररूपेभ्य इत्यन्ते तृषास्तारनमोऽन्तकाः ।
वामदेवाय नमोऽन्ते विरजा स्याद् गुह्यदेशके ।।४८७।।
मुष्के सव्ये प्रविन्यस्य रक्षां ज्येष्ठाय वै नमः ।
रुद्राय नमो रतिं पश्चाद्वाममुष्के कलामिमाम् ।।४८८।।
कालाया नम इत्यन्ते पालिनी ऊरुदक्षिणे ।
कलाकामां च देवेशि वामे विकरणाय च ।।४८९।।
नमःपदं समुच्चार्य संयमनी दक्षजानुनि ।
बलक्रिया समादिष्टा वामे विकरणाय च ।।४९०।।
नमोऽन्ते वृद्धिमुच्चार्य दक्षिणे स्फिचि विन्यसेत् ।
बलप्रमथनाय नामे रात्रिं वामे प्रविन्यसेत् ।।४९१।।
सर्वभूतदमनाय नामेऽन्ते ब्राह्मणीं कलाम् ।
कटिदेशे प्रविन्यस्य नामेऽन्ते मोहिनीकलाम् ।।४९२।।
दक्षिणे पार्श्वके न्यस्य उन्मनाय मनोज्वराम् ।
पादयोः स्तननासासु मूर्ध्नि बाहुयुगे न्यसेत् ।।४९३।।
सद्योजातोद्भवाः सम्यगष्टौ मन्त्री कलाः क्रमात् ।
सद्योजातं प्रपद्यामि सिद्धिः स्यात् प्रथमा कला ।।४९४।।
सद्योजाताय वै भूयो नमः स्याद् वृद्धिरीरिता ।
भवे द्युतिस्तृतीया स्यादभवे तदनन्तरम् ।।४९५।।
लक्ष्मीश्चतुर्थी कथिता ततो नाभिभवेपदम् ।
मेधाख्या पञ्चमी प्रोक्ता कला भूयो भवस्व माम् ।।४९६।।
प्रजा समीरिता षष्ठी भवान्ते स्यात् प्रभा कला ।
उद्भवाय नमः पश्चात् स्वधा स्यादष्टमी कला ।।४९७।।
प्रणवाद्याश्चतुर्थ्यन्ता नमोऽन्ताश्च प्रविन्यसेत् ।
एवं न्यासविधिं कृत्वा स्वयं शैवं विभावयेत् ।।४९८।।
पञ्चाक्षरं पुरस्कृत्य रुद्रध्यानपरायणः ।
सामरस्यमयं कृत्वा रक्षार्थं कवचं पठेत् ।।४९९।।
बद्ध्वा तु क्षोभिणीं मुद्रां यन्त्रमध्ये विनिःक्षिपेत् ।
भगं कुण्डं स्रुवो लिङ्गमाज्यं चैव तु वीर्यकम् ।।
सर्वतत्त्वं समुत्सार्य सहस्रं जपमाचरेत् ।।५००।।

ज्ञानार्णवे—

धूपादिकं समर्प्याथ स्वलिङ्गे तदनन्तरम् ।
तारं च भुवनेशानि महात्रिपुरसुन्दरी ।।५०१।।
नमः शिवाय विद्येयं दशर्णा परिकीर्त्तिता ।
अनया विद्यया देवि स्वलिङ्गे पूजयेच्छिवे ।।५०२।।

महात्रिपुरसुन्दरी त्रिकूटात्मिका विद्या ।

यजेत् तत्पुरुषाघोरसद्योवामेशसंज्ञकान् ।
निवृत्तिं च प्रतिष्ठां च विद्यां शान्तिं तथैव च ।।५०३।।
शान्त्यतीतां च संपूज्य षडङ्गावरणं यजेत् ।
समग्रविद्यामुच्चार्य नन्दिकेशं प्रपूजयेत् ।।५०४।।
मध्ये वृषणयोर्देवि गन्धपुष्पाक्षतादिभिः ।
निवेद्य धूपपुष्पादि विजितेन्द्रियमानसः ।।५०५।।
सर्वसंक्षोभणा मुद्राः बद्ध्वा योनिं प्रचालयेत् ।
क्षेभिण्या वाऽथ वा देवि गजतुण्डाख्ययाऽथ वा ।।५०६।।
ऊच्चा[illegible] भगमालाख्यां द्राविणीबीजमुच्चरन् ।
अक्षुब्धः सन् वरारोहे यावद्रेतः प्रवर्त्तते ।।५०७।।

भगमालामन्त्रस्तु तत्रैव—

वाग्भगं भगशब्दान्ते भगे भगिनि चालयेत् ।
भगोदरि भगान्ते तु भगमाले भगावहे ।।५०८।।
भगगुह्ये भगप्रान्ते योनिप्रान्ते भगान्तके ।
निपातिनि च सर्वान्ते ततो भगवशङ्करि ।।५०९।।
भगरूपे ततो लेख्य नीरजायतलोचने ।
नित्यक्लिन्ने भगप्रान्ते स्वरूपे सर्वमालिखेत् ।।५१०।।
भगानिमेह्यानयान्ते वरदेऽथ समालिखेत् ।
रेते सुरेते भग च क्लिन्ने क्लिन्नद्रवे ततः ।।५११।।
क्लेदय द्रावय चाथ सर्वसत्त्वान् भगेश्वरि ।
अमोघे भगविच्चे च क्षुभ क्षोभय सर्व च ।।५१२।।
सत्त्वान् भगेश्वरि ब्रूयाद् वाग्भवं ब्लूँ जमादिकम् ।
मेँ ब्लूँ मौँ ब्लूँ च हेँ ब्लूँ च हेँ क्लिन्ने च ततः परम् ।।५१३।।

सर्वाणि च भगान्यन्ते मे वशं चानयेति च ।
स्त्रीबीजं च हरप्रान्ते ब्लैँ मायात्मकमक्षरम् ।।
भुवनेशीं समालिख्य विद्येयं भगमालिनी ।।५१४।।

वीरतन्त्रे—

धर्माधर्महविर्दीप्ते आत्माग्नौ मनसा स्रुचा ।
सुषुम्णा वर्त्मना नित्यमक्षवृत्तिर्जुहोम्यहम् ।।५१५।।
स्वाहान्तोऽयं महामन्त्र आरम्भे परिकीर्त्तितः ।
ततो जपेत् प्रियां गच्छन् स्त्रियं त्रिभुवनेश्वरीम् ।।५१६।।

भूतडामरयक्षडामरयोः—

क्षिप्त्वा शेफश्च प्रजपेद्ध्यात्वा देवीं यथोदिताम् ।
दिक्सहस्रं सहस्रं वा विना रेतोविमोक्षणम् ।।५१७।।
जप्त्वा तु विधिवद्दद्याद्बलिमभ्यर्च्य तां स्त्रियम् ।
भोजयित्वा नमस्कृत्य विसृज्य प्रापयेद् गृहम् ।।५१८।।
एवं कृत्वा च तत्सिद्धिस्त्रिषु लोकेषु दुर्लभा ।
जायते नात्र संदेहो ब्रह्मणा भाषितं पुरा ।।
नातः परतरोपायो मन्त्राणां साधने त्रिषु ।।५१९।।

कुलामृते—

स्वाहान्तो होममन्त्रोऽयं प्रतिज्ञाता हुतिः प्रिये ।
पूर्णाहुतिं रतान्ते च जुहुयान्मनुनाऽमुना ।।५२०।।
प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचा ।
धर्माधर्मौ कलास्नेहं पूर्णवह्नौ जुहोम्यहम् ।।
स्वाहान्तोऽयं भवेन्मन्त्रो घोरपातकमुक्तिदः ।।५२१।।

वीरतन्त्रे—

स्वाहान्तोऽयं महामन्त्रः शुक्रत्यागे प्रकीर्त्तितः ।।५२२।।

यदि च शक्तिरदीक्षिता भवति तदा प्रथमतस्तच्छोधनं कुर्यात् ।

तदुक्तं कुलतन्त्रे—

अभिषेकात् भवेच्छुद्धिर्मन्त्रस्योच्चारणाच्छ्रुतौ ।
रतिकाले महेशानि दीक्षाकाले च कन्यकाः ।।५२३।।

शुद्ध्यन्तीति शेषः ।

सुरया रेतसा चापि जलेन मनुनाऽमुना ।।५२४।।

यामले—

सुदीक्षिता तु या शक्तिः सैव शुद्धा भवेत् सदा ।
अदीक्षिता तु या शक्तिर्मायां तस्यै निवेदयेत् ।।५२५।।

मातङ्गीतन्त्रेऽप्युक्तम्—

दीक्षामात्रेण शुद्ध्यन्ति स्त्रियः सर्वत्र कर्मणि ।

कुलामृतदीपिकायाम्—

अदीक्षितकुलासङ्गात् सिद्धिहानिः प्रजायते ।।५२६।।

तथा—

आदौ बालां समुच्चार्य त्रिपुरायै समुच्चरेत् ।
नमःशब्दं समुच्चार्य इमां शक्तिं ततो वदेत् ।।
नाद[१]क्षैर्देवि लोके भवति निन्दितः ।।५२७।।

तथा—

आलिङ्गने हरेद्रोगान् धनधान्यादि चुम्बने ।।
नखदन्तक्षताद्यैश्च तदा मोक्षः प्रजायते ।।५२८।।
सायुज्यं सङ्गमेन स्यात् सत्यमेव न संशयः ।।५२९।।

रौद्रे—

तदङ्गस्पर्शनात् सौख्यं संयोगामृतलक्षणम् ।
महाकामकलां ध्यायेत् संयोगामृतरूपिणीम् ।।५३०।।
संयोगाज्जायते सौख्यं परमानन्दलक्षणम् ।
कुलद्रव्यामृतं यत्नाद् गृह्णीयादुदुर्लभं नरः ।।५३१।।
कुण्डगोलप्रहरणप्रकारस्तु कुलामृते ।
भावयेत् कामभावेन आत्मतत्त्वं न चोत्सृजेत् ।।५३२।।
शुद्धमन्त्रोषधेनैव योनेस्तु मथनं चरेत् ।
मथ्यमाने तु तस्याहिर्जायते तत्त्वमुत्तमम् ।।
गृह्णीयात् तत्प्रयत्नेन द्रव्यं कुण्डोद्भवं शुभम् ।।५३३।।

---

१. सर्वपुस्तकेषु त्रुटिरत्रोपलभ्यते । 'नादिक्षित 'देवि' इति पाठो भक्तिव्यः।

मन्त्रौषधं यथा कुलोड्डीशे—

मायाऽऽगच्छपदं शुक्रस्तम्भनकारिणि ठद्वयम् ।।
अनेनार्कोपरागे च जातीमूलं समानयेत् ।।५३४।।
एतत् कृत्वा साधकेन्द्रः शुक्रस्तम्भनमाचरेत् ।।५३५।।

ब्रह्मयामले—

तेनामृतेन दिव्येन त्रिपुरां तर्पयेत् सदा ।
सान्निध्यात् तत्क्षणाद्वाऽपि प्रीता सिद्धिं प्रयच्छति ।।५३६।।
समस्तदेवतानां च तर्पणं च सदाऽमृतैः ।
गुरूणां साधकानां च सर्वेषां तर्पणं चरेत् ।।५३७।।
तेनामृतेन द्रव्येण सर्वे तुष्टा भवन्ति च ।
यत्कामं कुरुते मन्त्री तत्क्षणादेव सिद्ध्यति ।।५३८।।
कुलामृतं समादाय तत्रार्घे निःक्षिपेद्बुधः ।
ततः सोमकलाः पूज्याः साधकैर्निर्मलाशयैः ।।५३९।।

कौले—

मधुभाण्डसहस्रैस्तु मांसभारशतैरपि ।
नैव तुष्टा भवेद्देवी भगलिङ्गामृतादृते ।।५४०।।

देवीयामले—

दूतीयागविधिं वक्ष्ये कौलधर्मोत्तमोत्तमम् ।
तस्यानुष्ठानमात्रेण स्वयं ब्रह्मत्वमाप्नुयात् ।।५४१।।

तथा—

दूतीयागे कृते मन्त्री सर्वज्ञो जायते ध्रुवम् ।
न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि ।।५४२।।
यैः कृतं यजनं दूत्यास्तैरिष्टाः क्रतवोऽखिलाः ।
सर्वतीर्थमयः प्रोक्तः सर्वदेवमयो भवेत् ।।५४३।।
पुरश्चर्यादिसकलं कृतं तेन न संशयः ।
अश्वमेधसहस्राणि वाजपेयशतानि च ।।५४४।।
आसमुद्रा च धरणी दत्ता तेन सदक्षिणा ।
मेरुमण्डलतुल्यादिसुवर्णान्यर्पितानि वै ।।५४५।।

गोकोटिदानाद्यत् पुण्यं तत्पुण्यं जायते प्रिये ।
तस्मात् सर्वप्रयत्नेन दूतीयागं समाचरेत् ।।५४६।।
पूजासम्पूर्णदं भद्रे सर्वारिष्टप्रशामकम् ।
योनिपूजां विना पूजा कृतमप्यकृतं भवेत् ।।५४७।।
आयुरारोग्यविभवानमिताँल्लभते नरः ।
अनेनैव विधानेन विषार्त्तो निर्विषो भवेत् ।।५४८।।
पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ।
मातङ्गीशक्तिमभ्यर्च्य तया साकं समर्चयेत् ।।५४९।।
मातङ्गी मन्मथोपेतो सर्वकामार्थसिद्धये ।
शक्त्या साकं सदा पूज्या मातङ्गी मन्त्रदेवता ।।
सा देवी शक्तिहीना तु न ददाति मनोरथम् ।।५५०।।

ब्रह्मयामले—

नारद उवाच

सर्वज्ञ जगतां नाथ शाक्तचेच्छ्रुतिचोदितम् ।
मातङ्गीपूजनं तत्र कथं मुक्तिप्रदायकम् ।।५५१।।
अर्चने प्रथिता वेश्या वेश्या सा तु रजःस्वला ।
रजःस्वला च मातङ्गी सा दूती सर्वमङ्गला ।।५५२।।
इति प्रोक्तं त्वया पूर्वमिदानीं तद्विपर्ययः ।
तव वाक्यमनुब्रह्मन्नेतद्वद पितामह ।।५५३।।

ब्रह्मोवाच

मा कुरुष्वात्र संदेहं वेदोक्तं शाक्तमुत्तमम् ।
अस्ति सर्वज्ञकल्पोऽसौ मतङ्गो मुनिसत्तमः ।।५५४।।
वर्षाणामयुतं वत्स तप उग्रं चचार ह ।
तेन प्रीता महादेवी देवानां हितकारिणी ।।५५५।।
वरं वृणुष्व भगवन् दास्यामि तव वाञ्छितम् ।
तच्छ्रुत्वा द्विजवर्यस्तां ययाचे धर्मसाधनम् ।।५५६।।
हे देवि जगतां मातः प्रीता चेद्यदि साम्प्रतम् ।
अपत्यतां समासाद्य मत्कुलालम्बनं कुरु ।।५५७।।

इत्यभ्यर्च्य मुनिश्रेष्ठो जनयामास तां सुताम् ।
श्यामलां चारुवदनां चीनांशुकसमन्विताम् ।।५५८।।
सारिकां ज्ञानसंपन्नां जपमालां कराम्बुजैः ।
धारयन्तीं विशालाक्षीं शङ्खताटङ्कशोभिनीम् ।।५५९।।
सा बभूव महादेवी मातङ्गकुलनन्दिनी ।
मातङ्गीति तदा देवी विख्याता वरदायिनी ।।५६०।।
तां विलोक्य तदा शम्भुर्दूतीं चक्रे सुलक्षणाम् ।
त्रिपुरं जेतुकामेन योनिपूजा तदा कृता ।।५६१।।
प्रत्यालीढा स्थिता देवी पूजां स्वीकृत्य निश्चला ।
तदा दृष्टरजोभूतां तां बव्रे शङ्करः प्रियाम् ।।५६२।।
तदा प्रभृति संजातो दूतीयागो मनोहरः ।
प्रणयेन तदा शम्भुस्तया सार्धं रतं भवेत् ।।५६३।।
प्रणवान्तर्गतं मन्त्रं मातङ्ग्याख्यं विनिर्गतम् ।
सर्वसौभाग्यजननं मालामन्त्रमभूत् तदा ।।५६४।।
रमा चापि पदं दिव्यमनिन्द्यं लोकरञ्जनम् ।
मातङ्गी मन्त्रमत्यर्थं मन्मथप्रतिपादकम् ।।५६५।।
आद्यन्तशून्या सा देवी तस्मात् ख्याता तदन्त्यजा ।
मातङ्गी अन्त्यवर्णस्था तदा सा अन्त्यजाऽभवत् ।।५६६।।
अन्त्यजानां द्विजानां च चक्रे ऐक्यं प्रशस्यते ।
सा देवी सर्ववर्णानां वरं दत्वा निरुत्तरम् ।।५६७।।
कृत्वा सङ्केतसमयं चक्रे मातङ्गमुत्तमम् ।
न दोषः सर्ववर्णानामिति दत्वा वरं तदा ।।५६८।।
न दोषं तत्र विज्ञेयं सर्वं ते श्रुतिनोदितम् ।
देवीमुद्दिश्य मोक्षार्थं कृतं यद्दोषवर्जितम् ।।५६९।।
एतच्छास्त्रमिदं दिव्यं न वाच्यं श्रुतिचोदितम् ।
अन्तर्यागमिदं ज्ञेयं बहिर्यागं च वैदिकम् ।।५७०।।
मन्त्रतन्त्रसमायुक्तं तद्द्वयं ब्रह्मबोधकम् ।
चक्रसंकेतसमयं सर्वं तुभ्यं प्रकाशितम् ।।५७१।।

**गोपनीयं प्रयत्नेन न वाच्यं पशुसन्निधौ ।**

**त्यज शङ्कां महाभाग सत्यमेतन्मयोदितम् ।।**

**मातङ्गीपूजनं श्रेष्ठं दूतीयागे मनोहरम् ।।५७२।।**

दूतीयागे च विप्राणां नाधिकारः । तदुक्तं बृहच्छीक्रमसंहितायाम् —

**वामागमोऽपि विप्रस्तु मद्यमांसं न भक्षयेत् ।**

**स्वकीयां परकीयां वा नाकृष्य ब्राह्मणो यजेत् ।।५७३।।इति ।।**

महाकालसंहितायामपि—

**स्वयोषां परयोषां वा नैवाकृष्य द्विजो जपेत् ।**

**लोभाद्यदि चरेद्देवमधो याति द्विजस्तदा ।।**

**इहामुत्र फलं नास्ति हीनायुरपि जायते ।।५७४।।**

ब्राह्मणेतराणामपि योगिनामेवात्राधिकारः । तदुक्तं सिद्धिनाथसंहितायाम्—

**अद्वैतज्ञाननिष्ठो यो योऽसौ संसारपारगः ।**

**स एव जगदे दूत्या नाधिकारी भवेदिति ।।५७५।।**

इति दूतीयागविधिः ।

अथ शावरमन्त्रपुरश्चरणम् ।

मेरुतन्त्रे—

**अथ शावरमन्त्राणां पुरश्चरणमुच्यते ।**

**कामरूपाख्यदेशे तु कामाख्या यत्र देवता ।।५७६।।**

**कामशैलोऽस्ति यत्रासौ कामपीठं तदुच्यते ।**

**तत्र संलेख्य मन्त्रं हि वंशोपरि यथाक्रमम् ।।५७७।।**

**गुरूणां वाचनीयः स स्वयं पश्चात् पठेन्मनुम् ।**

**गुरोरभावे तस्यैव मूले शैलस्य पर्वणि ।।५७८।।**

**लिखित्वा प्रपठेन्मन्त्रं कामपीठं गुरुर्मतः ।**

**अथ वा योगिनीशैले दक्षिणस्यां दिशि ध्रुवम् ।।५७९।।**

**योगाम्बा यत्र देवी सा लिखित्वा प्रपठेन्मनुम् ।**

**ज्वालामुखी समीपे वा हिङ्गुलायाः समीपतः ।।५८०।।**

**लिखित्वा प्रपठेन्मन्त्रं नान्यथैव प्रसिद्ध्यति ।**

**मुख्यतः स्त्रीसमीपे हि कामपीठे मनुग्रहः ।।५८१।।**

अथ वा सर्वदेशेषु मन्त्रग्रहणमुच्यते ।
तालपत्रे मनुं वक्ष्ये पूर्णकुम्भे निधापयेत् ।।
भास्करं च गुरुं ध्यात्वा वाचयेद् त्रिगुरुं रवि : ।।५८२।।

एतावता शावरमन्त्राणां विधिवद्ग्रहणमेव पुरश्चरणमित्युक्तम् ।

अथ वीरसाधनम्

तत्रादौ चितासाधनमुक्तं योगिनीहृदये—

**देव्युवाच**

भगवन् सर्वमन्त्रज्ञ सर्वशास्त्र विशारद ।
श्मशाने च पुरश्चर्या त्वया संपूजिता पुरा ।।
कथयस्व तदेदानीं यदि स्नेहोऽस्ति मां प्रति ।।५८३।।

**ईश्वर उवाच**

यस्मिन् परिश्रमेणापि नृणां सिद्धिः समीहिता ।
न जाता तत्र कर्त्तव्या साधकैर्वीरसाधना ।।५८४।।
पुरा सिद्ध्यै नृपाणां च कर्त्तव्ये समुपस्थिते ।
नान्यसिद्धिकरं शीघ्रं वीरसाधनवर्जितम् :।५८५।।
तस्मात् सर्वप्रयत्नेन विधेया वीरसाधना ।
भयमुक्तेन शुचिना सर्वसिद्धिमभीप्सिता ।।५८६।।
नानया दुर्लभं किंचित् साधकस्य समीहितम् ।
गिरिजे तत् प्रयत्नेन याचनेयं प्रकाश्यते ।।५८७।।
अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोरपि ।
कृष्णपक्षे विशेषेण साधयेदनया हितम् ।।५८८।।

वीरतन्त्रे—

महावीरक्रमं देव सूचितं न प्रकाशितम् ।
कथयस्व महादेव सर्वसिद्धिप्रदं महत् ।।५८९।।

**भैरव उवाच**

सर्वसिद्धिप्रदं साक्षात् सर्वदेवनमस्कृतम् ।
सर्वपापहरं देवि सर्वरोगविनाशनम् ।।५९०।।
ब्रह्मविष्णुशिवादीनां दिक्पालानां च भाविनि ।
भैरवानां च सर्वेषां गन्धर्वाणां च योगिनाम् ।।५९१।।

शश्वत् सिद्धिप्रदं देवि सर्वेषामालयं महत् ।
नान्यत् सिद्धिप्रदं देवि वीरसाधनवर्जितम् ।।५९२।।
महाबलो महावीरो महासाहसिकः शुचिः ।
महास्वच्छो दयावाँश्च सर्वभूतहिते रतः ।।
तेषां कृते महादेवि कथितं वीरसाधनम् ।।५९३।।

तथा—

घटीबन्धनवस्त्रं वै मूलेन परिधाय च ।
तद्बाह्ये च पुनर्वस्त्रं मूलेनाङ्गविलेपनम ।।५९४।।
कृतोष्णीषश्च मूलेन सिन्दूरेणोर्ध्वपुण्ड्रकम् ।
इष्टदेवं गुरुं नत्वा यात्रा प्रहरमध्यतः ।।५९५।।
कार्या च साधकैः सार्धं हृदि मन्त्रं परामृशन् ।
अक्षुब्धो भुक्तभोज्यश्च यदि स्याद्वीरसाधकः ।।५९६।।
दिव्यो वा न पशुस्तत्र भुक्त्वा साधनमाचरेत् ।
अष्टम्यां च चतुर्दश्यां पक्षयोरुभयोरपि ।।५९७।।
भौमवारे तमिस्रायां साधयेत सिद्धिमुत्तमाम् ।
उपचारं समादाय कुलामृतरसं तथा ।।५९८।।
सामिषान्नं गुडं छागं सुरा पिष्टकमेव च ।
नानाफलं च नैवेद्यं स्वस्वकल्पोक्तसाधनम् ।।५९९।।
चितास्थाने समानीय सुहृद्भिः शस्त्रपाणिभिः ।
समानगुणसंपन्नैः साधको गतभीः स्वयम् ।।६००।।
न निरीक्षेच्चतुर्दिक्षु देवताध्यानन्तत्परः ।
भीतश्चेत् साधकस्तत्र चतुर्दिक्षु च साधकः ।।६०१।।
स्वगुरुं भ्रातृवर्गं वा ब्राह्मणान् वाऽपि सुव्रतान् ।
सुहृदानपि रक्षार्थं कियद्दूरे निवेशयेत् ।।६०२।।
नो चेत् केवलमेवासौ भैरवः परिकीर्त्तितः ।
अक्षालितां चिताभूमिं गत्वा साधकसत्तमः ।।६०३।।
प्रक्षातिलां यदि प्रायः कारयेदस्थिसंचयम् ।

यामले—

असंस्कृता चिता ग्राह्या न तु संस्कारसंस्कृता ।।६०४।।

तथा—

संकल्पं प्रथमं कुर्यात् स्वस्तिवाचनपूर्वकम् ।
सामान्यार्घं विधायैतत् ततः पूजां समारभेत् ।।
वस्त्रालङ्कारभूषाद्यैर्भूषितः पूर्वदिङ्मुखः ।।६०५।।

संकल्पस्तु—

ॐ अद्येत्यादि अमुकगोत्रः श्रीमदमुकशर्माऽमुकमन्त्रसिद्धिकामः श्मशान-साधमनहं करिष्ये—इत्येवंरूपः।

वीरतन्त्रे—

अस्त्रान्तमूलमन्त्रेण प्रोक्षणं यागभूमिषु ।
गुरुपादयुगं ध्यात्वा गणेशं वटुकं तथा ।।६०६।।
योगिनी मातृकां चैव वामपादपुरःसरम् ।
ये चात्र संस्थिता देवा राक्षसाश्च भयानकाः ।।६०७।।
पिशाचाः सिद्धयक्षाश्च गन्धर्वाप्सरसां गणाः ।
योगिन्यो मातरो भूताः सर्वाश्च खेचरस्त्रियः ।।६०८।।
सिद्धिदास्ता भवन्त्वत्र तथा च मम रक्षकाः ।
प्रणम्य मनुनाऽनेन पुष्पाञ्जलित्रयं क्षिपेत् ।।६०९।।
श्मशानाधिपतिं पश्चाद्भैरवं कालभैरवम् ।
महाकालं यजेद्यत्नात् पूर्वादिदिक् चतुष्टये ।।६१०।।
पाद्यादिभिश्च मन्त्रज्ञो वलिं पश्चान्निवेदयेत् ।
शब्दबीजं ततः पश्चात् श्मशानाधिपतत्परम् ।।६११।।
इममन्ते सामिषान्नं बलिं गृह्णपदं ततः ।
गृहण गृहणापय युगं विघ्ननिवारणं ततः ।।६१२।।
कुरु सिद्धिं मे समुक्त्वा[१]प्रयच्छ स्वाहयाऽन्वितम् ।
ताराद्यमनुना देवि प्रथमो वलिरीरितः ।।६१३।।
मायान्ते भैरवात् पश्चाद्भयानकपदं ततः ।
पूर्वे वलिं समुद्धृत्य दक्षिणे वलिमाहरेत् ।।६१४।।
हूमन्ते तु महाकालात् पश्चात् पूर्ववदुद्धरेत् ।
पश्चिमे कालदेवाय प्रणवाद्येन कल्पयेत् ।।६१५।।

---

१. तान्त्रिकप्रयोगोऽयम् ।

शब्दान्ते कालशब्दान्ते भैरवेति पदं ततः ।
श्माशानाधिप इत्येवं पूर्ववच्चान्तरे हरेत् ।।६१६।।
चितामध्ये ततो दद्याद्बलित्रयमनुत्तमम् ।
कालरात्रिमहाकालि कालिके घोरनिःस्वने ।।६१७।।
गृहाणेमं बलिं मातर्देहि मे सिद्धिमुत्तमाम् ।
हूँ कालिकायै स्वाहेति वलिं दत्वा भूतनाथाय दापयेत ।।६१८।।
शब्दान्ते भूतनाथान्ते श्मशानाधिप इत्यपि ।
प्रणवाद्येन मन्त्रेण दापयेद्बलिमुत्तमम् ।।६१९।।
हूँ सर्वगणनाथान्ते अधिपतिपदं तथा ।
श्मशाने मस्तके दत्वा पूर्ववच्च समुद्धरेत् ।।६२०।।
ताराद्येन वलिं दत्वा पञ्चगव्येन सुन्दरि ।
अस्थिसंप्रोक्षणं कृत्वा पीठमन्त्रं न्यसेत् पुनः ।।
भूर्जे वा वटपत्रे वा तत्र पीठमनुं न्यसेत् ।।६२१।।

तन्त्रान्तरे—

ततश्चितापश्चिमत एकीकृत्यास्थिसंचयम् ।
ॐ ह्रीँ आधरशक्तये नम इत्यणुना पुनः ।।६२२।।
पञ्चगव्येन संप्रोक्ष्य भूर्जे वा वटपत्रके ।
हसौरिति लिखेन्मन्त्रं स्थापयेत् तत्र तत् पुनः ।।६२३।।
कम्बलाद्यासनं तत्र विन्यस्याधारशक्तये ।
नम इत्यणुना तत्र ह्रीमाद्यां च प्रपूजयेत् ।।६२४।।

वीरतन्त्रे—

पीठमास्तीर्य तस्मिन् वै बद्धवीरासनस्ततः ।
वीरार्दने देवेशि लोष्टान् दिक्षु विनिःक्षिपेत् ।।६२५।।
कूर्चबीजद्वयं देवि मायायुग्मं ततः परम् ।
कालिके घोरदंष्ट्रे च प्रचण्डे चण्डनायिके ।।६२६।।
दानवान् दाययेत्युक्त्वा हनेति द्वितयं ततः ।
पर वीरं महाविघ्नं छेदयेति द्वयं ततः ।। ६२७।।

सर्वास्त्रान्तो द्विठान्तोऽयं वीरादनुमनुः स्मृतः ।

अनेन मन्त्रितं लोष्टं दशदिक्षु विनिःक्षिपेत् ।।६२८।।
तन्मध्ये भैरवो देवो विघ्नैर्न परिभूयते ।
यदि प्रमादाद्देवेशि साधको भयविह्वलः ।।६२९।।
तैस्तैः सर्वैः सुहृद्भिश्च रक्षितो नाभिभूयते ।
अर्केन्दुसितवाद्यालतूलैर्निर्मितवर्त्तिकाम् ।।६३०।।
प्रदीपं तत्र संस्थाप्य अस्त्रं तत्र प्रपूजयेत् ।
गते तस्मिन् महादीपे विघ्नैश्च परिभूयते ।।६३१।।
तदधश्चास्त्रमन्त्रेण निखनेत् कुलदीपिकाम् ।
तत्तत्कल्पविधानेन भूतशुद्ध्यादिकं चरेत् ।।
षोढां वा तारकां वाऽपि विन्यस्य पूजयेत् ततः ।।६३२।।

देवतामिति शेषः ।

अत एव यामलादौ—

ततः पञ्चोपचोरण पुरतो देवतां यजेत् ।
निमील्य चक्षुषी पश्चाद्देवं ध्यात्वा मनुं जपेत् ।।६३३।।
एकाक्षरी यदि भवेद्दिक्सहस्रं ततो जपेत् ।
द्व्यक्षरे चाष्टसाहस्रं त्र्यक्षरे ह्ययुतार्धकम् ।।६३४।।
ततः परं तु मन्त्रज्ञो गजान्तकसहस्रकम् ।
निशार्धात् तु समारभ्य उदयान्तं समाचरेत् ।।६३५।।
यद्यसह्यं भयं कर्णनेत्रे वस्त्रेण बन्धयेत् ।
ततोऽर्धरात्रपर्यन्तं यदि किञ्चिन्न दृश्यते ।।६३६।।
जयदुर्गामनुनाऽर्घं तेनैव सर्षपान् क्षिपेत् ।
ॐ तिलोऽसि सोमदेवत्यो गोसवस्तृप्तिकारकः ।।६३७।।
पितृणां स्वर्गदाता त्वं मर्त्त्यानां मम रक्षकः ।
भूतप्रेतपिशाचानां विघ्नेषु शान्तिकारकः ।।६३८।।
इति क्षिप्त्वा तिलाँस्तत्र चतुर्भागैः शिवादितः ।
ततः सप्तपदं गत्वा पुनस्तत्रैव संविशेत् ।।६३९।।
एवं तत्रापि संपूज्य प्रजपेन्मनुमुत्तमम् ।
निर्भयः सन् जपेत् तावद्यावत् सिद्धिः प्रजायते ।।
भयं तु स्वप्नवज्ज्ञेयं परेऽह्नि शेषमाचरेत् ।।६४०।।

वामकेश्वरतन्त्रे—

जपान्ते च वलिं दद्याद्देवतायै यथाविधि ।
महिषं छागलं चापि गृहीत्वा वरमेव च ।।
गृहं गच्छेत् सुहृद्वर्गैः सार्धं सुहृष्टमानसः ।।६४१।।

इति चितासाधनाविधिः ।

अथ शवसाधनविधिः

भूतडामरे—

यदुक्तं भावसर्वस्वे सर्वतन्त्रेषु गोपितम् ।
वीरसिद्धिविधानं हि देवदेवेन शम्भुना ।।६४२।।
यस्य विज्ञानमात्रेण मन्दभाग्योऽपि सिद्ध्यति ।।६४३।।

तथा—

पुरश्चरणसंपन्नो वीरसिद्धिं समाचरेत् ।
पुत्रदाराधनस्नेहलोभमोहविवर्जितः ।।६४४।।
मन्त्रं वा साधयिष्यामि देहं वा पातयाम्यहम् ।
प्रतिज्ञामीदृशीं कृत्वा वलिद्रव्यणि चिन्तयेत् ।।६४५।।

वीरतन्त्रे—

पूर्वोक्तमुपहारादि समादाय तु साधकः ।
साधयेत् स्वहितां सिद्धिं साधनस्थानमाश्रयेत् ।।६४६।।
गुरुध्यानादिकं सर्वं पूर्वोक्तमाश्रयेत् सुधीः ।
वीरार्दनान्तिके भूमौ मायामोहो न विद्यते ।।६४७।।
ये चात्रेत्यादिमन्त्रेण भूमौ पुष्पाञ्जलित्रयम् ।
श्मशानाधिपतीनां तु पूर्ववद्वलिमाहरेत् ।।६४८।।
अघोराख्येण मन्त्रेण[1]वलिसाधनमाचरेत् ।
सुदर्शनेन वा रक्षामुभाभ्यां वा प्रकल्पयेत् ।।६४९।।
मायास्फुरद्वयं भूयः प्रस्फुरद्वितयं पुनः ।
घोरघोरतरत्यन्ते तन्नो रूपपदं ततः ।।६५०।।
चटयुग्मान्तरान्ते च प्रचट द्वितयं पुनः ।
हेयुग्मं रमयुग्मं च ततो बन्धयुगं ततः ।।६५१।।

---

१. शिखाबन्धनमाचारेदित्यन्यत्र पाठः ।

पातय द्वितयं वर्म फडन्तः समुदाहृतः ।
एकपञ्चाशदर्णोऽयमघोरास्त्रमयो मनुः ।।६५२।।
हालाहलं समुद्धृत्य सहस्रारस्वरूपकम् ।
वर्मास्त्रान्तं महामन्त्रं सुदर्शनस्य कीर्त्तितम् ।।६५३।।
भूतशुद्धिं ततः कृत्वा न्यासजां प्रविन्यसेत् ।
जयदुर्गाख्यमन्त्रेण सर्षपान् दिक्षु निःक्षिपेत् ।।६५४।।
ॐ दुर्गे दुर्गे रक्षाणि स्वाहा—इति जयदुर्गाख्यमन्त्रः ।
तिलोऽसीति च मन्त्रेण तिलानपि विनिःक्षिपेत् ।
यष्टिविद्धं शूलविद्धं खड्गविद्धं पयोमृतम् ।।६५५।।
रज्जुविद्धं सर्पदष्टं चाण्डालैर्वाऽभिभूतकम् ।
तरुणं सुन्दरं शूरं रणे नष्टं समुज्ज्वलम् ।।६५६।।
पलायनविशून्यं च संमुखे रणवित्तमम् ।
स्वेच्छामृतं द्विवर्षं च वृद्धां स्त्री च द्विजं तथा ।।६५७।।
अन्नाभावमृतं कुष्टं सप्तरात्रोर्ध्वगं तथा ।
एवं चाष्टविधं त्यक्त्वा पूर्वोक्तान्यतमं शवम् ।।६५८।।
गृहीत्वा मूलमन्त्रेण पूजास्थाने समानयेत् ।
चाण्डालाद्यभिभूतं वा शीघ्रं सिद्धिफलप्रदम् ।।६५९।।
प्रणवास्त्रमन्त्रेण शवस्य प्रोक्षणं चरेत् ।
प्रणवं कूर्चबीजं च मृतकाय नमोऽस्तु फट् ।।६६०।।
पुष्पाञ्जलित्रयं दत्वा प्रणमेत् स्पर्शपूर्वकम् ।
रे वीरपरमानन्द शिवानन्द कुलेश्वर ।।६६१।।
आनन्दभैरवाकार देवीपर्यङ्कशङ्कर ।
वीरोऽहं त्वां प्रयच्छामि उत्तिष्ठ चन्द्रिकार्चने ।।६६२।।
प्रणम्यानेन मन्त्रेण स्वापयेत् तदनन्तरम् ।
तारं शब्दं मृतकाय नमोऽन्तं मन्त्रमुच्यते ।।६६३।।
शवस्वापनमन्त्रोऽयं सर्वतन्त्रेषु देशितः ।
धूपेन धूपितं कृत्वा गन्धादि वा प्रलिप्य च ।।६६४।।
रक्ताक्तो यदि देवेश भक्तयेत् कुलसाधकम् ।
गत्वा शवस्य सान्निध्यं धारयेत् कटिदेशतः ।।६६५।।

यद्युपद्रावयेत् तस्य दद्यान्निष्ठीवनं मुखे ।
पुनः प्रक्षालितं कृत्वा जपस्थानं समानयेत् ।।६६६।।
कुशशय्यां परिस्तीर्य तत्र संस्थायेच्छवम् ।
एलालवङ्गकर्पूरजातीखदिरसार्द्रकैः ।।६६७।।
ताम्बूलं तन्मुखे दत्वा शवं कुर्यादधोमुखम् ।
स्थापयित्वा तस्य पृष्ठं चन्दनेन विलेपयेत् ।।६६८।।
बाहुमूलादिकट्यन्तं चतुरस्रं विभावयेत् ।
मध्ये पद्मं चतुर्द्वारं दलाष्टकसमन्वितम् ।।६६९।।
ततश्चैणेयमजिनं कम्बलान्तरितं न्यसेत् ।
द्वादशाङ्गुलमानेन यज्ञकाष्ठानि दिक्षु च ।।६७०।।
इमं वलिं गृह्ण युगं गृह्णापय युगं ततः ।
विघ्ननिवारणं कृत्वा सिद्धिं प्रयच्छेति द्वयम् ।।६७१।।
अनेन मनुना पूर्वं वलिं दद्याच्च सामिषम् ।
स्वस्वनामादिकं दत्वा पूर्वद्वलिमाहरेत् ।।६७२।।
सर्वेषां लोकपालानां ततः साधकसत्तमः ।
शवाधिस्थानदेवेभ्यो वलिं दद्यात् सुरया सह ।।६७३।।
चतुःषष्टियोगिनीभ्यो डाकिनीभ्यो वलिं दिशेत् ।
पूजाद्रव्यं सन्निधौ च दूरे चोत्तरसाधकम् ।।६७४।।
संस्थाप्यासनमभ्यर्च्य स्वमन्त्रान्ते त्रपां ततः ।
फडित्यनेने मन्त्रेण तत्राश्वारोहणं विशेत् ।।६७५।।
कुशान् पादतले दत्वा शवकेशान् प्रमार्ज्य च ।
दृढं निबन्ध्य जुटिकां कृतसंकल्पसाधकः ।।६७६।।
शवोपरि समारूह्य प्राणायामं विधाय च ।
वीरार्दनेन मन्त्रेण दिक्षु लोष्टान् समाक्षिपेत् ।।६७७।।
ततो देवं समभ्यर्च्य उपचारैस्तु विस्तरैः ।
शवास्ये विधिवद्देवि देवताप्यायनं चरेत् ।।६७८।।
उत्थाय संमुखे स्थित्वा पठेद्भक्तिपरायणः ।
वशो मे भव देवेश ममामुकपदं ततः ।।६७९।।

सिद्धिं देहि महाभाग भूताश्रयपदाम्बरः ।
मूलं समुच्चरन्मन्त्री शवपादद्वयं ततः ।।६८०।।
पट्टसूत्रेण बध्नीयात् तदोत्थातुं न शक्यते ।
ॐ भीरुभीम भयाभाव भव्यलोचनभावुक ।।६८१।।
त्राहि मां देवदेवेश शवानामधिपाधिप ।
इति पादतले तस्य त्रिकोणं चक्रमालिखेत् ।।६८२।।
तदोत्थातुं न शक्नोति शवोऽपि निश्चलो भवेत् ।
उपविश्य पुनस्तस्य बाहू निःसार्य पार्श्वयोः ।।६८३।।
हस्तयोः कुशमास्तीर्य पादौ तत्र निधापयेत् ।
ओष्ठौ तु संपुटौ कृत्वा स्थिरचित्तः स्थिरेन्द्रियः ।।६८४।।
सदा देवीं हृदि ध्यात्वा मौनी तु जपमाचरेत् ।
श्मशाने प्रोक्तसङ्ख्याभिर्जपं कुर्यात् कुलेश्वरि ।।६८५।।
अथ वाऽऽरम्भकालात् तु यावच्चोदयते रविः ।
यद्यर्धरात्रिपर्यन्तं जप्ते किंचिन्न लक्ष्यते ।।६८६।।
तदा पूर्ववदर्घादिसमयादागतानि च ।
कृत्वोपविश्य तत्रैव जपं कुर्यादनन्यधीः ।।६८७।।
चलासनाद्भयं नास्ति भये जाते वदेत् ततः ।
यत् प्रार्थयसि देवेशि दातव्यं कुञ्जरादिकम् ।।६८८।।
दिनान्तरे प्रदास्यामि स्वनाम कथस्व मे ।
इत्युक्त्वा संस्कृतेनैव निर्भयस्तु पुनर्जपेत् ।।६८९।।
ततश्चेन्मधुरं वक्ति वक्तव्यं मधुरं ततः ।
तदा सत्यं च संस्कार्यं नरं च प्रार्थयेत् ततः ।।६९०।।
यदि सत्यं न कुर्याच्च वरं वा न प्रयच्छति ।
तदा पुनर्जपेद्धीमानेकाग्रं मानसं भजन् ।।६९१।।

यक्षडामरे—

न पश्येदद्भुते जाते न भाषेत च न स्पृशेत् ।
एकचित्तो जपं कुर्याद्यावत् प्रत्यक्षतां व्रजेत् ।।६९२।।

वीरतन्त्रे—

नररूपो नात्र देवो यो नरो वोपसर्पति ।
यत्नतस्तेन बोद्धव्यं नरो वा देवयोनयः ।।६९३।।

माता वा तत्सुता वाऽपि मातुलानी तथाऽपि वा ।
आगत्य विघ्नं चरते माययाऽऽच्छाद्य विग्रहम् ।।६९४।।
उत्तिष्ठ वत्स ते कार्यं सर्वं जातं न संशयः ।
प्रभातसमयो जातस्त्वत्पिता क्रोशते गृहे ।।६९५।।
प्रायेण सकला लोका राजानो दण्डधारिणः ।
कदाचित् केनाप्यादिष्टस्तदा किं ते करिष्यति ।।६९६।।
इत्यादिविविधैर्वाक्यैर्न जपं परिसंत्यजेत् ।
मृताः पितृगणास्तत्र दूरदेशनिवासिनः ।।६९७।।
बान्धवास्तत्र आयान्ति देवरूपधरास्ततः ।
स्त्रीपुत्रसेवकादीँश्च गृहीत्वा नीयते परैः ।।६९८।।
रुदन्ति पुत्रकाः सर्वे भ्रातरोऽनुजशिष्यकाः ।
निजकान्ताङ्गसंस्पर्शं वस्त्राद्याभरणादिकम् ।।६९९।।
गृहीत्वा नीयते पत्नी पालकैस्तद्भयं त्यजेत् ।
यदि न क्षुभ्यते तत्र तदा किं वा न लभ्यते ।।७००।।
स्त्रीरूपधारिणी देवी द्विजरूपधरः पुमान् ।
वरं गृह्णेति शब्दं वै त्रिवारान्ते वरं लभेत् ।।७०१।।
साधुनाऽसाधुना वाऽपि योषिच्चेद्वरदायिनी ।
तदा वीरपतेस्तस्य किं न सिद्ध्यति भूतले ।।७०२।।
निष्पापः पुरुषश्चैव कुले चैव सुसंस्कृतः ।
असंस्कृतवरा देवी पापयुक्ता न संशयः ।।७०३।।
संमुखेऽसंमुखे वाऽपि संस्कृतं वक्ति चापरम् ।
सैव देवी न संदेहः स देवो भैरवः स्वयम् ।।७०४।।
न चेदेवं भवेच्चैव मायापुटितविग्रहात् ।
वरयेन्न वरं तत्र न वरं प्रवदेत् क्वचित् ।।७०५।।
स चेत् संस्कृतमाख्यातं वक्ति वक्तव्यमीदृशम् ।
न चेत् स्वयं कौलिकौक्त्या वरं ग्राह्यं निराकुलम् ।।७०६।।
अथ वा उत्कटं किञ्चिल्लभेताप्यात्मनो हितम् ।
शब्दो वा जायते सम्यगमृतं वाऽपि लभ्यते ।।७०७।।

सर्वं विचार्य गृहीतव्यमेवं दिक् परिकीर्त्तिता ।
देव्याकृतयो बहुधा नराद्याकृतयः क्वचित् ।।७०८।।
अवश्यं तत्र भेतव्यं न तत्र प्रत्ययः क्वचित् ।
भैरवा वटुकाश्चैव कुलशास्त्रपरायणाः ।।७०९।।
एतच्छास्त्रप्रसङ्गेन कृत्या कुटिलविग्रहाः ।
पुत्रो भूत्वा वरयेत् तं नारी भूत्वा विमोहयेत् ।।
तस्मात् तत्त्वपरो वीर आचारे यत्नमाचरेत् ।।७१०।।

भूतडामरे—

वदत्यागत्य चेष्टं वा देहस्फूर्त्तिं करोति हि ।
एतेन जायते वीरसिद्धिर्दद्यात् ततो वलिम् ।।७११।।
देवतां च गुरुं नत्वा विसृज्य हृदयं पुनः ।
स्थापयेत् तोषयेद्विद्वान् शवं तोये विनिःक्षिपेत् ।।७१२।।

वीरतन्त्रे—

सत्ये कृते वरं लब्ध्वा संत्यजेच्च जपादिकम् ।
जातं फलमिति ज्ञात्वा जूटिकां मोचयेत् ततः ।।७१३।।
संप्रक्षाल्य च संस्थाप्य जूटिकां मोचयेत् पदे ।
पदचक्रं मार्जयित्वा पूजाद्रव्यं जले क्षिपेत् ।।७१४।।
शवं जलेऽथ गर्त्ते वा निःक्षिप्य स्नानमाचरेत् ।
ततस्तु स्वगृहं गत्वा वलिं दत्वा दिनान्तरे ।।७१५।।
अग्रिमरात्रौ तु येषां देवानां यजमानोऽहम् ।
ते गृह्णन्तु मया दत्तं वलिमिमं च सामिषम् ।।७१६।।
अथ यैर्याचितश्चाश्वनरकुञ्जरशूकरान् ।
दत्वा पिष्टमयानेव कर्त्तव्यं समुपोषणम् ।।७१७।।

तत्रान्तरे—

यवक्षोदमयं वाऽपि शालिक्षोदमयं च वा ।
चन्द्रहासेन विधिवत् तत्तन्मन्त्रेण पातयेत् ।।७१८।।
परेऽह्नि नित्यमाचर्य पञ्चगव्यं पिबेत् ततः ।
ब्राह्मणान् भोजयेत् तत्र पञ्चविंशतिसंख्यकान् ।।७१९।।

पञ्च पञ्च गृहीतान् वा क्रमाच्चैव दशावधि ।
ततः स्नात्वा च भुक्त्वा च निवसेदुत्तमस्थले ।।७२०।।
यदि न स्याद्द्विप्रभोज्यं तदा निर्धनतां व्रजेत् ।
तेन चेन्निर्धनत्वं स्यात् तदा देवः प्रकुप्यति ।।७२१।।
त्रिरात्रं वाऽथ षड्रात्रं गोपयेत् कुलसाधनम् ।
शय्यायां यदि गच्छेद्वा तदा व्याधी प्रजायते ।।७२२।।
गीतं श्रुत्वा च वधिरो निश्चक्षुर्नृत्यदर्शनात् ।
यदि वक्ति दिने वाक्यं तदा स मूकतां व्रजेत् ।।७२३।।
पञ्चदशदिनान्ता हि देहे देवस्य संस्थितिः ।
गोब्राह्मणानां देवानां निन्दां कुर्यान्न कुत्र चित् ।।७२४।।
देवगोब्राह्मणादीँश्च प्रत्यहं तु स्पृशेच्छुचिः ।
प्रातर्नित्यक्रियान्ते तु विल्वपत्रोदकं पिबेत् ।।७२५।।
ततः स्नायात् तु तीर्थादौ प्राप्ते षोडशवासरे ।
स्वहान्तं मूलमुच्चार्य तर्पयामि नमःपदम् ।।७२६।।
एवं पदत्रयादूर्ध्वं देवानां तर्पणं जलैः ।
मुनितर्पणशून्यस्य न स्याद्देवस्य तर्पणम् ।।७२७।।
इत्यनेन विधानेन सिद्धिमाप्नोति निश्चितम् ।
इह भुक्त्वा वरान् दिव्यानन्ते याति हरेः पदम् ।।७२८।।
अनङ्गं साङ्गमपि वा निष्फलं सफलं च वा ।
कृत्वा साधनमेवैतच्छक्तेः प्रियतमो भवेत् ।।७२९।।
शवाभावे श्मशाने वा कर्त्तव्या वीरसाधना ।
ये भावा यस्य वै प्रोक्तास्तैर्भावैर्यदि नार्चयेत् ।।७३०।।
ईदृशक्रमयोगेन भ्रष्टो भवति साधकः ।
नोपदिशेत् तत्र भावं न पूजां तत्र संदिशेत् ।।
श्मशानान्तं गृहीत्वा तु तावच्छुद्धिः प्रजायते ।।७३१।।

वीरचूडामणौ—

अथ वाऽन्यप्रकारेण साधनं कथयामि ते ।
जपस्थानं तु संशोध्य खननादि प्रयत्नतः ।।७३२।।

तन्मध्ये च वलिं दद्याल्लिखेद्यन्त्रं त्रिकोणकम् ।
तन्मध्ये च महाशङ्खं निवेश्य मुण्डपञ्चकम् ।।७३३।।
तस्योपरि महाप्रेतमखण्डाङ्गं सुशोभनम् ।
उद्वर्त्तनादिकं कुर्यात् स्नापयेद्विधिपूर्वकम् ।।७३४।।
परिधाप्यं रक्तवस्त्रं नेत्राञ्जनसमीरितम् ।
ताम्बूलादि मुखे दद्याल्ललाटे रक्तचन्दनम् ।।७३५।।
हृदये च लिखेद्यन्त्रं पद्ममध्ये त्रिकोणकम् ।
पूजायन्त्रं ललाटे च शस्त्रेण विलिखेत् ततः ।।७३६।।
मूर्ध्नि बाहौ तथा हस्ते पादे चैव तथा कटौ ।
खदिरादीनि काष्ठानि कीलान्यारोपयेत् सुधीः ।।७३७।।
बन्धकं वर्द्धयेत् तत्र दृढबन्धेन बन्धयेत् ।
षट्पात्रेषु वलिं दद्यात् कीले कीले पृथक् पृथक् ।।७३८।।
माषं मांसं तथा मत्स्यं पायसं त्रिविधाः सुराः ।
मोदकं च महापूपं दुग्धान्नोत्सर्गमाचरेत् ।।७३९।।
क्रोधीशवह्निमारूढं तूर्यस्वरसमन्वितम् ।
वर्मबीजं समुच्चार्य श्मशानकालिकेति च ।।७४०।।
पूर्वबीजं समालिख्य अस्त्रान्तो मन्त्र उच्यते ।
मायाबीजं समुच्चार्य श्मशानभैरवाय च ।।७४१।।
महाकालाय देवाय सर्वविघ्नहरो भव ।
वलिं गृह्ण द्विधा कुर्यात् त्रयोदशं सबिन्दुकम् ।।७४२।।
श्मशानवासिनो रुद्रा अस्थिमांसवलिप्रियाः ।
विघ्नं निवारय सम्यग् वलिं गृह्ण द्विधा पुनः ।।७४३।।
विघ्नं निवारय युगं वरं चैव प्रयच्छ मे ।
द्विठान्तो मन्त्र इत्युक्तो वलिरुक्तविधानतः ।।७४४।।
माया लज्जा तथा लक्ष्मीर्नन्दिनीशत्रयं लिखेत् ।
नारायणस्तथा सूक्ष्मपरं तु मधुसूदनः ।।७४५।।
योगिनीभ्यः परं पश्चात् श्मशानवासिनीति च ।
प्रचण्डा चण्डरूपायै कर्तृखर्परधारिणी ।।७४६।।
वलिं गृह्णापय युगं सर्वविघ्नं निवारय ।
वरं देहि पदं ब्रूयाद्द्विठान्तो योगिनीवलिः ।।७४७।।

रौद्रं वह्निसमारूढं चतुर्दशस्वरान्वितम् ।
बिन्दुनादकलाक्रान्तं क्षेत्रपालं च ङेऽन्तम् ।।७४८।।
श्मशानवासिने ब्रूयाच्छोणितास्थिप्रियाय च ।
द्विठान्तं मन्त्रमुच्चार्य क्षेत्रपालवलिं हरेत् ।।७४९।।
वाराहीबीजमुद्धृत्य बीजं पञ्चान्तकं पुनः ।
वक्रतुण्डायेति पदं वर्म चैव समुद्धरेत् ।।७५०।।
वलिं गृह्णपदं ब्रूयाद्विघ्नं निवारयेति च ।
सिद्धिं प्रयच्छ मे चैव अस्त्रान्तो मनुरुत्तमः ।।७५१।।
पादस्यापादनं कुर्यान्मदिरानन्दविग्रहः ।
हृदयोपरि महावीरः शक्तिं चैव शवोपरि ।।७५२।।
विवस्त्रा मुक्तकेशी च कर्त्तृखर्परधारिणी ।
प्रक्षाल्य कुलद्रव्येण कुलचक्रं प्रपूजयेत् ।।७५३।।
धूपदीपादिनैवेद्यैः पञ्चभूतवलिं हरेत् ।
यथाशक्ति जपं कुर्यात् मूलमन्त्रं समर्पयेत् ।।७५४।।
विपरीतपरा नीवी मैथुनं च शवोपरि ।
अयुतं च जपेत् तत्र सर्वसिद्धीश्वरो भवेत् ।।७५५।।
यदा वै भयभीतोऽसौ भक्षयन्ति च तत्क्षणात् ।
देहि देहि यदा ब्रूयात् तदा छागवलिं हरेत् ।।७५६।।
वलिदानं विना हिंसा न कर्त्तव्या कदाचन ।
पुरश्चरणतो मन्त्रसिद्धिर्भवति निश्चितम् ।।७५७।।

मुण्डमालायाम्—

अथ वाऽन्यप्रकारेण कुर्याद्वै वीरसाधनम् ।
संग्रामे पतितान् प्रेतानानीय विधिपूर्वकम् ।।७५८।।
अष्टदिक्षु विधायाष्टौ नवमं मध्यसंस्थकम् ।
रज्ज्वा रज्ज्वा रज्जुनाथ रोपिते दृढकीलके ।।७५९।।
चन्दनादिभिरभ्युक्ष्य सुगन्धिकुसुमादिभिः ।
अलङ्कृत्य प्रयत्नेन मध्यमास्थाय मस्तकम् ।।७६०।।
ललाटे पूजयेद्देवीमुपचारैः समुज्ज्वलैः ।
वलिं दद्यादष्टदिक्षु माषमांसैः सुराशवैः ।।७६१।।

पायसैर्मधुसंयुक्तैः कुसुमैरक्षतैस्तथा ।
ततो जपं प्रकुर्वीत शवस्य हृदि निर्भयः ।।७६२।।
उपविश्यासने शोणे व्याघ्रचर्मविनिर्मिते ।
पञ्चायुतं च जप्त्वाऽथ पूर्ववत् कल्पयेद्वलिम् ।।७६३।।
व्याघ्रवानरभल्लूकश‍ृगालोल्कामुखानथ ।
दृष्ट्वाऽथ न भयं कुर्यान्मायामेव विचिन्तयेत् ।।७६४।।
ततोऽनुभावं लब्ध्वाऽथ दद्याच्छागादिकं वलिम् ।
तथाऽक्लिष्टमना भूत्वा शवं निःक्षिप्य वारिणि ।।७६५।।
द्विजेभ्यो दक्षिणां दद्यात् साधकेभ्यो विशेषतः ।
सुवेशाभ्यस्तथा स्त्रीभ्यः कुमारीभ्यः प्रयत्नतः ।।७६६।।
वसनं भूषणं तद्वन्मधुरद्रव्यभोजनम् ।
स्वयं तथैव भुञ्जीत नराणां तु विवर्जयेत् ।।७६७।।
एतेन तु महासिद्धिर्जायते भुवि दुर्लभा ।
राज्यं श्रियं परानन्दो वैरिराष्ट्रजयं तथा ।।७६८।।
जगन्मोहनवश्यादि कविताकौशलं पुनः ।
संग्रामे च तमुद्दिश्य साधकं वैरिवाहिनी ।।७६९।।
पलायते प्रगल्भाऽपि किं पुनः क्षुद्रवैरिणः ।
नानाविधाष्टसिद्धीनां साधको भाजनं भवेत् ।।७७०।।
इदं मयोक्तं देवेशि न प्रकाश्यं कदाचन ।
एतत् ते परमं गोप्यं विशेषात् पशुसंसदि ।।
रहस्यमेतत् परममागमस्यैकजीवितम् ।।७७१।।

इति वीरसाधनविधिः ।

विभ्रत्यद्भुतभूतिभूतपवचो वैचित्रचित्रामृत ।
स्रोतःशालिनि सन्निबन्धनसरित्संभेदमभ्यर्हितम् ।
नव्येऽस्मिन् नरदेवनिर्मितपुरश्चर्यार्णवे सप्तमः
सद्युक्तिस्फुटमैक्तिकोत्कररुचोत्तुङ्गस्तरङ्गो गतः ।।७७२।।

इति श्रीमन्महाराजाधिराजप्रतापसिंहसाहविरचिते पुरश्चर्यार्णवे मन्त्रसिद्धिलक्षणोपायपुरश्चरणभेदनिरूपणं नाम सप्तमस्तरङ्गः सम्पन्नः ।।



# अथाष्टमतरङ्गः

## अथ गणेशादिमन्त्रास्तत्पुरश्चरणविशेषाश्च

तत्रादौ विघ्नराजमन्त्र उक्तो मेरुतन्त्रे—

असिद्धो गुरुणा दत्तो मन्त्रः स्याद्बहुविघ्नदः ।
तत्रादौ साधयेद्विघ्नराजमन्त्रं ततः पुनः ।।१।।
निष्पापस्य पुरश्चर्याबलात् सिद्ध्येन्मनूत्तमः ।
तत्राम्नायविभेदेन सर्वतन्त्रेषु गोपितम् ।।२।।
एकबीजात्मकं वक्ष्ये विघ्नमन्त्रं सुसिद्धिदम् ।
तत्रादौ वैदिकानां तु गकारः केवलो मतः ।।३।।
दक्षिणानां बिन्दुयुक्तो द्विबिन्दुः पूर्वमार्गिणाम् ।
एतद्वययुतः प्रश्चादूर्ध्वाम्नाये च गौमिति ।।४।।
ग्लौमुत्तरे गोमति च पातालाम्नायमीरितम् ।
गणपोऽस्य मुनिश्छन्दो निवृद्विघ्नोऽस्य देवता ।।५।।
गणं जपायं स्वाहा हृत्कमेकदंष्ट्राय हुँफट् ।
अचलकर्णिनि नमः शिखा प्रोक्ताऽथ वर्म तु ।।६।।
गजवक्त्राय च नमो नेत्रमस्त्रमुदीर्यते ।
महादशमचण्डाय हुँ फडेत्रच्च वैदिकैः ।।
षड्दीर्घयुक्तबीजेन तान्त्रिको न्यासमाचरेत् ।।७।।

अथ ध्यानम्—

रक्ताम्बरं रक्तवर्णं रक्तगन्धानुलेपनम् ।
रक्तपुष्पैः पूज्यमानं तुन्दिलं चन्द्रमौलिनम् ।।८।।
त्रिनेत्रं वामनं बिभ्रद्बीजपूरं च शुण्डया ।
वामदक्षोर्ध्वयोः पाशाङ्कुशौ चक्रं वरस्त्वधः ।।
पद्मासनं सर्पभूषं ध्यायेद्विघ्नविनायकम् ।।९।।

शारदायाम्—

सिन्दूराभं त्रिनेत्रं पृथुतरजठरं हस्तपद्मैर्दधानं
दन्तं पाशाङ्कुशेष्टान्युरुकरविलसद्बीजपूराभिरामम् ।
बालेन्दुद्योतिमौलिं करिपतिवदनं दानपूरार्धगण्डं
भोगीन्द्राबद्धमौलिं भजत गणपतिं रक्तवस्त्राङ्गरागम् ।।१०।।

अस्य मन्त्रस्य पुरश्चरणमुक्तं मेरुतन्त्रे—

लक्षमेकं मनुं जप्त्वा जुहुयात् तद्दशांशतः ।।११।।

शारदायां तु—

मोदकैः पृथुकैर्लाजैः सक्तुभिश्चेक्षुपर्वभिः ।
नारिकेलैस्तिलैर्मोचैर्होमं कुर्यात् पृथक् पृथक् ।।१२।।
सहस्रमेकं द्विशतं पञ्चाशत्प्रमितं तथा ।
दलैस्त्रिमधुराक्तैः स्याद्धोमः काम्योऽथ कथ्यते ।।१३।।
दौग्धान्नेन घृताक्तेन होमोऽभीष्टफलप्रदः ।
लक्ष्मीकामो नारिकेलैश्चतुर्थ्यां जुहुयात् तथा ।।१४।।

मोचं कदलीफलम् ।

अथ लक्ष्मीगणेशमन्त्रस्तत्रैव—

वक्ष्येऽथ दक्षिणाम्नाये लक्ष्मीगणपतिं सुराः ।
गजलक्ष्मीसमायुक्तमयं योगोऽतिदुर्लभः ।।१५।।
श्रीगँ सौम्याय वोच्चार्य महागणपतिं तथा ।
ङेऽन्तमुक्त्वा वरवरदोक्त्वा सर्वजनं वदेत् ।।१६।।
मे वशमानय स्वाहेत्येकोनत्रिंशदक्षरः ।
अन्तर्यामी मुनिश्छन्दो गायत्री निवृदन्विता ।।१७।।
देवो लक्ष्मीगणेशोऽत्राथाद्यबीजद्वयेन तु ।
षड्दीर्घयुक्तेनाङ्गानि जातियुक्तानि कारयेत् ।।१८।।

अथ ध्यानम्—

हेमाभं पीतवसनं चक्रशङ्खगदाभयान् ।
दक्षोर्ध्वकरमारभ्य दक्षिणाधःकरावधि ।।१९।।
दधतं शुण्डया स्वर्णघटं पद्मोपरि स्थितम् ।
वामाङ्काविष्टलक्ष्म्या चाश्लिष्टं दक्षभुजेन च ।।२०।।

अस्य पुरश्चरणं तत्रैवोक्तम्—

लक्षं जपो हुनेद्बिल्वसमिधो मधुरप्लुताः ।
तर्पणादि ततः कृत्वा काम्यकर्मादि साधयेत् ।।२१।।
हुनेच्चतुस्सहस्राणि श्रीफलैर्मधुराप्लुतैः ।
महालक्ष्मीकरो होमः पुत्रमित्रकलत्रदः ।।२२।।

अथ शक्तिगणेशमन्त्रस्तन्त्रान्तरे—

पञ्चान्तको वह्निसंस्थो वामनेत्रार्धचन्द्रवान् ।
मायासंपुटितास्त्र्यर्णो मन्त्रः शक्तिगणेशितुः ।।२३।।

मेरुतन्त्रे—

अक्षरोऽयं विराट् छन्दो मुनिर्भार्गव ईरितः ।
देवता शक्तिगणपः षडङ्गानि समाचरेत् ।।२४।।
षड्दीर्घयुग्गकारेण ततो ध्यायेद्गजाननम् ।

ध्यानं यथा—

दक्षोर्ध्वे चाङ्कुशं वामे पाशं वामे त्वधःकरे ।।२५।।
बीजपूरं स्वदन्तं तु दक्षिणे स्वर्णवर्णकम् ।
पुष्करे मोदकं बिभ्रत् कर्णयोर्दीर्घचामरे ।।२६।।

अस्य मन्त्रस्य पुरश्चरणं तत्रैवोक्तम्—

लक्षमेकं जपेन्मन्त्रं हविष्याशी जितेन्द्रियः ।
तद्दशांशं प्रजुहुयादपूपैर्घृतसंप्लुतैः ।।
एवं सिद्धमनुर्मन्त्री काम्यकर्माणि साधयेत् ।।२७।।

अथ क्षिप्रप्रसादनगणेशमन्त्रो निबन्धे—

संवर्त्तको नेत्रयुतः पार्श्वो वह्न्यासने स्थितः ।
प्रसादनाय हृन्मन्त्रः स्वबीजाढ्यो दशाक्षरः ।।२८।।

मेरुतन्त्रे—

ऋषिर्गणक आख्यातश्छन्दः प्रोक्तं विराडिति ।
देवता कथितः क्षिप्रप्रसादनविनायकः ।।
षड्दीर्घभाजा बीजेन कुर्यादङ्गक्रियां मनोः ।।२९।।

अथ ध्यानं शारदायाम्—

पाशाङ्कुशौ कल्पलतां विषाणं
दधत् सुतुण्डाहितबीजपूरः ।
रक्तस्त्रिनेत्रस्तरुणेन्दुमौलि-
र्हारोज्ज्वलो हस्तिमुखोऽवताद्वः ।।३०।।

अस्य पुरश्चरणं मेरुतन्त्रे—

लक्षमेकं जपेन्मन्त्रं[1] त्रिस्वाद्वक्तैस्तिलैर्हुनेत् ।
पूर्वोदिताष्टद्रव्यैर्वा तर्पणादि ततश्चरेत् ।।३१।।

अथ वक्रतुण्डमन्त्रस्तत्रैव—

वक्रतुण्डाय हुँ चेति प्रोक्तो मन्त्रः षडक्षरः ।
ह्रस्वं तु कवचं स्त्रीभिर्जप्तव्यं सर्वसिद्धिदम् ।।३२।।
भार्गवो मुनिराख्यातोऽनुष्टुप् छन्द उदाहृतम् ।
देवता वक्रतुण्डोऽस्य सुरासुरनमस्कृतः ।।
षड्भिर्मन्त्रगतैर्वर्णैः षडङ्गानि प्रकल्पयेत् ।।३३।।

अथ ध्यानम्—

उद्यद्दिनेश्वररुचिं पाशाङ्कुशवराभयान् ।
हस्तैर्दधानं स्मेरास्यमरुणं चिन्तयेद्धृदि ।।३४।।

पुरश्चरणमाह—

वर्णलक्षं जपेन्मन्त्रं जुयात् तद्दशांशतः ।
अष्टद्रव्यैः पुरा प्रोक्तैर्मधुराक्तैर्यथाविधि ।।३५।।

अथ हेरम्बमन्त्रः शारदायाम्—

पञ्चान्तको बिन्दुयुतो वामकर्णविभूषितः ।
तारादिहृदयान्तोऽयं हेरम्बमनुरीरितः ।।३६।।
चतुर्वर्णात्मको नृणां चतुर्वर्गफलप्रदः ।

मेरुतन्त्रे—

मुनिर्गणक आख्यातो गायत्री छन्द ईरितम् ।।३७।।
पञ्चवक्त्रोऽस्य हेरम्बो देवता सिंहवाहनः ।।
षड्दीर्घबीजयुक्तेन षडङ्गविधिरीरितः ।।३८।।

---

१. त्रिमध्वक्तैरिति ३ पु. पा. ।

ध्यानं तु शारदायाम्—

मुक्ताकाञ्चननीलकुन्दघुसृणच्छायैस्त्रिनेत्रान्वितै-
र्नागास्यैर्हरिवाहनं शशधरं हेरम्बमर्कप्रभम् ।
दृप्तं दानमभीतिमोदकरदान् टङ्कं शिरोऽक्षात्मिकां
मालां मुद्गरमङ्कुशं त्रिशिखकं दोर्भिर्दधानं भजे ।।३९।।

अस्य पुरश्चरणमुक्तं मेरुतन्त्रे—

लक्षत्रयं जपित्वा तं तिलैर्हुत्वा दशांशतः ।
मधुरत्रयसंयुक्तैस्तर्पणादि समाचरेत् ।।
एवं सिद्धमनुर्मन्त्री प्रयोगानाचरेत् ततः ।।४०।।

अथ हरिद्रागणेशमन्त्रस्तन्त्रान्तरे—

पञ्चान्तको धरासंस्थो बिन्दुभूषितमस्तकः ।
एकाक्षरो महामन्त्रः सर्वकामफलप्रदः ।।४१।।

यद्वा मन्त्रान्तरम्—

मन्त्रोद्धारं प्रवक्ष्यामि शृणुष्व कमलानने ।
इन्द्रबीजं समुद्धृत्य निजबीजं समुद्धरेत् ।।४२।।
चतुर्दशस्वरेणाढ्यं बिन्दुभूषितमस्तकम् ।
एकाक्षरी महाविद्या कथिता पद्मयोनिना ।।
बीजेन दीर्घयुक्तेन कराङ्गन्यासकल्पना ।।४३।।

मन्त्रान्तराणि विस्तरभयादुपेक्षितानि ।

अथ ध्यानम्—

हरिद्राभं चतुर्बाहुं हारीतवसनं विभुम् ।
पाशाङ्कुशधरं देवं मोदकं दन्तमेव च ।।४४।।

अस्य पुरश्चरणमुक्तं मेरुतन्त्रे—

वेदलक्षं जपित्वाऽन्ते हरिद्राचूर्णमिश्रितैः ।
दशांशैस्तण्डुलैर्हुत्वा ब्राह्मणानपि भोजयेत् ।।४५।।

अस्य महागणपतिमन्त्रो मेरुतन्त्रे—

ऊर्ध्वाम्नाये प्रवक्ष्यामि गणेशान् सिद्धिदायकान् ।
भुक्तिमुक्तिप्रदं तत्र महागणपतिं शृणु ।।४६।।

तारः श्रीबीजहृल्लेखा कामो भूबीजमेव च ।
गणेशबीजं गणपतये वरवरेति च ।।४७।।
दसर्वजनं मे वशमानयाग्निवधूरिति ।
अष्टाविंशतिवर्णोऽयं गणकोऽस्य मुनिर्मतः ।।४८।।
निवृद्गायत्रिका छन्दो महागणपतिः सुरः ।
गँ बीजं ह्रीं च शक्तिः स्याद्दीर्घषट्कयुतस्तु गः ।।४९।।
तारादिबीजषट्केन पृथग् युक्तेन कारयेत् ।
षडङ्गानि मनोरस्य जातियुक्तान्यथाचरेत् ।।५०।।
अथ वा तारपूर्वेण दीर्घषट्कयुतेन च ।
स्वबीजेनाङ्गुलिन्यासं षडङ्गानि समाचरेत् ।।५१।।

अथ ध्यानम्—

ऐक्षवे जलधौ द्वीपे नवरत्नमये शुभे ।
तत्तरङ्गलसत्तोयैर्धौते शीतमहीतले ।।५२।।
तत्तोयगणसंपृक्तगन्धवाहनिषेविते ।
कल्पपादपसंशोभिभूभागे समलङ्कृते ।।५३।।
नानाकुसुमसङ्कीर्णे नानापक्षिविराजिते ।
अनेकफलसंकीर्णे सेविते चाऽप्सरोगणैः ।।५४।।
उद्यद्बालातपज्योतिश्चन्द्रज्योत्स्नासमाकुले ।
विलसत्पद्मरागौघकुट्टिमारुणभूतले ।।५५।।
कल्पपाद पुष्पस्थषट्पदस्वनमञ्जुले ।
पारिजातं कल्पतरुं तस्य मध्ये विचिन्तयेत् ।।५६।।
युगपदृतुषट्केन खचितं पुष्पशोभितम् ।
नवरत्नमयं तस्याधस्तात् सिहासनं स्मरेत् ।।५७।।
तन्मध्ये लिपिपद्मं च षडारं तस्य मध्यतः ।
कर्णिकायां गणेशं च तत्संस्थं च महागणम् ।।५८।।

शरदायाम्—

षट्कोणान्तस्त्रिकोणस्थं महागणपतिं स्मरेत् ।।५९।।

हस्तीन्द्राननमिन्दुचूडमरुणच्छायं त्रिनेत्रं रसा-
शिलष्टं स्वप्रियया सुपद्मकरया स्वाङ्कस्थया सन्ततम् ।
बीजापूरगदाधनुस्त्रिशिखयुक्चक्राब्जपाशोत्पल-
व्रीह्यग्रस्वविषाणरत्नकलशान् हस्तैर्वहन्तं भजे ।।६०।।
गण्डपालीगलद्दानपानलालसमानसान् ।
द्विरेफान् कणतालाभ्यां वारयन्तं मुहुर्मुहुः ।।६१।।
कराग्रधृतमाणिक्यकुम्भवक्त्रविनिःसृतैः ।
रत्नवर्षैः प्रीणयन्तं साधकान् मदविह्वलम् ।।६२।।
माणिक्यमुकुटोपेतं रत्नाभरणभूषितम् ।

अस्य मन्त्रस्य पुरश्चरणमुक्तं मेरुतन्त्रे—

एकादशायुतं जप्त्वा सहस्रोत्तरमादरात् ।।६३।।
दशांशं जुहुयादष्टद्रव्यैरेकाक्षरोदितैः ।
तर्पयित्वा दशांशेन चाभिषिक्तोऽणुना ततः ।।६४।।
ब्राह्मणान् भोजयेत् सम्यक् षड्रसैर्भूरिदक्षिणाम् ।
दत्वा प्रणम्य विसृजेदेवं सिद्धो भवेन्मनुः ।।६५।।

शारदायां तु—

ध्यायेन्मन्त्रं जपेन्मन्त्री चतुर्लक्षं समाहितः ।
चतुस्सहस्रसंयुक्तं चत्वारिंशत्सहस्रकम् ।।६६।।—इत्युक्तम् ॥

अथ विरिञ्चिगणनायकमन्त्रो मेरुतन्त्रे—

अथातः संप्रवक्ष्यामि पूर्वाम्नायगणेश्वरान् ।

विरञ्चिविघ्नेशमुक्तम्—

अथान्यत् संप्रवक्ष्यामि ब्रह्मणा समुपासितम् ।।६७।।
काश्यां ब्रह्मेशसौम्यस्थं विरिञ्चिगणनायकम् ।
ह्रीँ विरिञ्चिपदं प्रोक्त्वा ङेऽन्तं गणपतिं ततः ।।६८।।
प्राग्वद्वरवरेत्यादि षड्विंशत्यक्षरो मनुः ।
वेदपञ्चेषुपञ्चेषुद्व्यरुक्तं षडङ्गकम् ।।६९।।

तथा—

अस्य ध्यानं प्रवक्ष्यामि ह्यूर्ध्वमूर्ध्वकरेषु च ।
बीजपूरं गदां चापं चक्रं मालां च दक्षिणे ।।७०।।
वामे पद्मं पाशबाणान् दन्तं रत्नाढ्यकुम्भकम् ।
पद्मद्वयकरो पुष्टिमङ्कस्थामरुणप्रभाम् ।।७१।।

अलिङ्गयन्तमरुणं स्रवन्मदकपोलकम् ।
त्रिनेत्रं पीतवसनं दृढमुत्थापितध्वजम् ।।
किरीटिनं कुण्डलिनं ध्यायेद्देवं गजाननम् ।।७२।।

अस्य पुरश्चरणम्—

वेदलक्षमिता प्रोक्ता सर्वेषां तु पुरस्क्रिया ।
मधुरत्रयसंयुक्तैः पूर्वोक्तैरष्टभिर्हुनेत् ।।७३।।

सर्वेषामिति । अत्र विस्तरभयादुपेक्षितानां विरिञ्चिविघ्नेशादिमन्त्राणाम् ।

अथ विघ्नगणेशमन्त्रस्तत्रैव—

अथातः संप्रवक्ष्यामि पश्चिमाम्नायसिद्धिदान् ।
नानाश्चर्यकरान् काशीसंस्थितान् गणनायकान् ।।७४।।
महागणपतेरंशाश्चतुःषष्टिविनायकाः ।
एकैकान्ते गृहीत्वा तु योगिनी चेटिकामपि ।।७५।।
स्वर्णभूमिं समासाद्य यावदन्तर्गृहं मम ।
अष्टावरणकैरष्टौ संस्थिताः सिद्धिदायकाः ।।७६।।
तत्राष्टौ काशिकाबाह्ये स्वर्गभूमौ समास्थिताः ।
योजनैकं बहिः काश्यां कीर्त्तितः परिधिस्तु सः ।।७७।।
गँ विघ्नाय नमः प्रोक्तो मन्त्र एव षडक्षरः ।
क्षिप्रप्रसादनसममष्टानां साधनं स्मृतम् ।।७८।।

पुरश्चरणे विशेषमाह तत्रैव—

वेदायुतं जपेन्मन्त्रं होमश्च घृतपायसैः ।
प्रयोगाः क्षिप्रमेवात्र क्षिप्रमेव च सिद्धयः ।।७९।।

अथोच्छिष्टगणेशमन्त्रस्तत्रैव—

अथातः संप्रवक्ष्यामि उत्तराम्नायसिद्धिदान् ।
वदेद्धस्तिपिशाचीति लिखेत् स्वाहा नवाक्षरः ।।८०।।
कङ्कालोऽस्य मुनिश्छन्दो विराडुच्छिष्टनामकः ।
गणेशो देवता प्रोक्तः सर्वसंपत्प्रदायकः ।।
द्वित्रिद्विद्विद्विभिश्चास्य पञ्चाङ्गविधिरीरितः ।।८१।।

अस्य ध्यानं तन्त्रान्तरे—

रक्तमूर्त्तिं गणेशानं सर्वाभरणभूषितम् ।
रक्तवस्त्रं त्रिनेत्रं च रक्तपद्मासनस्थितम् ।।८२।।

चतुर्भुजं महाकायं द्विदन्तं सस्मिताननम् ।
इष्टं च दक्षिणे वामे दधन्तमभयं करे ।।८३।।
पाशाङ्कुशौ च हस्ताभ्यां जटामण्डलमण्डितम् ।
ललाटं चन्द्रेरेखाढ्यं सर्वालङ्कारभूषितम् ।।८४।।
सर्वाभीष्टप्रदं ध्यायेदुच्छिष्टगणनायकम् ।

अस्य पुरश्चरणं मेरौ—

अथान्यमस्य वक्ष्यामि द्वादशार्णं महामनुम् ।।८५।।
ॐ ह्रीं गँ हस्तिपिशाचि लिखेत् स्वाहेति मन्त्रकः ।
नवार्णमन्त्रवत् सर्वं ध्यानपूजाजपादिकम् ।।८६।।

पुरश्चरणमाह—

पुरश्चर्याऽर्कलक्षं स्यात् प्रयोगादि च पूर्ववत् ।।८७।।

इति गणेशप्रकरणम् ।

अथ सूर्यमन्त्रः

शारदायाम्—

तारो घृणिर्भृगुः पश्चाद्वामकर्णविभूषितः ।
वह्न्यासनो मरुच्छेषः सनेत्रोऽद्रिस्त्य पश्चिमः ।।८८।।
अष्टाक्षरो मनुः प्रोक्तो भानोरभिमतप्रदः ।
देवभागो मुनिः प्रोक्तो गायत्री छन्द ईरितम् ।।८९।।
आदित्यो देवता प्रोक्तो दृष्टादृष्टफलप्रदः ।
सत्याय हृदयं प्रोक्तं ब्रह्मणे शिर ईरितम् ।।९०।।
विष्णवे स्याच्छिखा वर्म रुद्राय परिकीर्त्तितम् ।
अग्नये नेत्रमाख्यातं सर्वायास्त्रमुदाहृतम् ।।
तेजो ज्वाला मणिं हुँ फट् द्विठान्ताः पृथगीरिताः ।।९१।।

न्यासान्तराणि तत्रैव द्रष्टव्यानि ।

अथ ध्यानं—

रक्ताब्जयुग्माभयदानहस्तं
केयूरहाराङ्गदकुण्डलाढ्यम् ।
माणिक्यमौलिं दिननाथमीडे
बन्धूककान्ति विलसत्त्रिनेत्रम् ।।९२।।

अस्य पुरश्चरणं तत्रैवोक्तम्—

वसुलक्षं जपेन्मन्त्रं समिद्भिः क्षीरशाखिनाम् ।
तत्सहस्रं प्रजुहुयात् क्षीराक्ताभिर्जितेन्द्रियः ।।९३।।

अथ मन्त्रातरं तत्रैव—

आकाशमग्निदीर्घेन्दुसंयुतं भुवनेश्वरी ।
सर्गान्वितो भृगुर्भानोस्त्र्यक्षरो मनुरीरितः ।।९४।।
आधारादिपदाग्रान्तं कण्ठादाधारकावधि ।
मूर्धादिकण्ठपर्यन्तं क्रमाद्बीजत्रयं न्यसेत् ।।
षड्दीर्घस्वरयुक्तेन मध्येनाङ्गानि कल्पयेत् ।।९५।।

अथ ध्यानम्—

रक्ताम्बुजासनमशेषगुणैकसिन्धुं
भानुं समस्तजगतामधिपं भजामि ।
पद्मद्वयाभयवरान् दधतं कराब्जै-
र्माणिक्यमौलिमरुणाङ्गरुचिं त्रिनेत्रम् ।।९६।।

अथास्य पुरश्चरणम्—

भानुलक्षं जपेन्मन्त्रमन्नाज्येन दशांशतः ।
तिलैर्वा मधुरासिक्तैर्जुहुयाद्विजितेन्द्रियः ।।९७।।

मेरुतन्त्रे—

अथ मन्त्रान्तरं वक्ष्ये दिनेशस्य षडक्षरम् ।
हँ खँ खखोल्काय वाऽथ खखोल्कायाग्निगेहिनी ।।९८।।
मुनिर्ब्रह्मा च गायत्री छन्दः सवितृदैवतम् ।
सूक्ष्मरूपायाग्निवधूमन्त्रेण हृदयं मतम् ।।९९।।
सूक्ष्माकारायाग्निवधूरिति मन्त्रेण शीर्षकम् ।
सूक्ष्मबालाय स्वाहेति कवचं च सनेत्रकम् ।।१००।।
सूक्ष्मकाय हुँ फडिति शस्तं पञ्चाङ्गमीरितम् ।
मन्त्रवर्णैः षडङ्गं स्याद्ध्यानमस्योच्यतेऽधुना ।।१०१।।
रक्तपद्मद्वयं हस्तैर्बिभ्राणं वरदाभये ।
बन्धूकाभं त्रिनेत्रं च रविं ध्यायेत् सुभूषितम् ।।१०२।।

अथास्य पुरश्चरणं तत्रैव—

लक्षमेकं जपेन्मन्त्रं नियतात्मा जितेन्द्रियः ।
जुहुयात् तद्दशांशेन विल्वाश्वत्थपलाशजैः ।।१०३।।
उदुम्बरसमुद्भूतैस्त्रिमध्वक्तैः समिद्वरैः ।
तर्पणादि ततः कुर्यात् प्राक्प्रोक्तविधिना सुधीः ।।१०४।।

अथ मन्त्रान्तरं शारदायाम्—

वियदर्धेन्दुलसितं तदादिः सर्गसंयुतः ।
अजपाख्यो मनुः प्रोक्तो द्व्यक्षरः सुरपादपः ।।१०५।।
ऋषिर्ब्रह्मा स्मृतो देवी गायत्री छन्द इरितम् ।
देवता जगतामादिः संप्रोक्तो गिरिजापतिः ।।
हसा षड्दीर्घयुक्तेन कुर्यादङ्गक्रियां मनोः ।।१०६।।

ध्यानम्—

उद्यद्भानुस्फुरिततडिदाकारमूर्धाम्बिकेशं
पाशाभीती वरदपरशु सन्दधानं कराब्जैः ।
दिव्याकल्पैर्नवमणिमयैः शोभितं विश्वमूलं
सौम्याग्नेयं वपुरवतु वश्चन्द्रचूडं त्रिनेत्रम् ।।१०७।।

अथ पुरश्चरणम्—

भानुलक्षं जपेन्मन्त्रं पायसेन ससर्पिषा ।
दशांशं जुहुयात् सम्यक् ततः सिद्धो भवेन्मनुः ।।१०८।।

अथ मार्त्तण्डभैरवमन्त्रस्तत्रैव—

आकाशमग्निपवनसाद्यान्तार्घीशबिन्दुमत् ।
मार्त्तण्डभैरवं नाम बीजमेतदुदाहृतम् ।।१०९।।
पुटितं विम्बबीजेन सर्वकामफलप्रदम् ।
ठान्तं दहननेत्रेन्दुसहितं तदुदाहृतम् ।।११०।।
पञ्चह्रस्वाद्यबीजेन पञ्चमूर्त्तीः प्रविन्यसेत् ।
मध्यमादिकनिष्ठान्तमङ्गुलीषु क्रमादिमाः ।।१११।।
सूर्याख्यो भास्करो भानुस्ततो रविदिवाकरौ ।
शिरावदनहृद्गुह्यपाददेशेषु ताः पुनः ।।११२।।

दीर्घयुक्तेन बीजेन नेत्राङ्गानि प्रविन्यसेत् ।
व्यापकं मूलबीजेन कुर्वीत तदनन्तरम् ।।११३।।

ध्यानम्—

हेमाम्भोजप्रवालप्रतिमनिजरुचिं चारुखट्वाङ्गपद्मौ
चक्रं शक्तिं सपाशंसृणिमतिरुचिरामक्षमालां कपालम् ।
हस्ताम्भोजैर्दधानं त्रिनयविलसद्वेदवक्त्राभिरामं
मार्त्तण्डं वल्लभार्धं मणिमयमुकुटं हारदीप्तं भजामः ।।११४।।

अथ पुरश्चरणम्—

लक्षत्रयं जपेन्मन्त्री बीजं विम्बपुटीकृतम् ।
दशांशं कमलैः फुल्लैर्जुहुयान्मधुरोक्षितैः ।।११५।।

इति सूर्यप्रकरणम् ।

अथ विष्णुमन्त्राः

शारदायाम्—

अथ वक्ष्ये महामन्त्रान् विष्णोः सर्वार्थसाधकान् ।
येषां संस्मरणात् सन्तो भवाब्धेः पारमाश्रिताः ।।११६।।
तारं नमःपदं पश्चान्नरौ दीर्घसमन्वितौ ।
पवनो णायमन्त्रोऽयं प्रोक्तो वस्वक्षरात्मकः ।।११७।।
साध्यो नारायणः प्रोक्तो मुनिश्छन्द उदाहृतम् ।
मन्त्रस्य देवी गायत्री देवता विष्णुरव्ययः ।।११८।।
क्रुद्धोल्काय हृदाख्यातं महोल्काय शिरः स्मृतम् ।
वीरोल्काय शिखा प्रोक्ता व्युल्काय कवचं मतम् ।।११९।।
सहस्रोल्कायास्त्रमुक्तमङ्गक्लप्तिरियं मता ।
भूयोवर्णैर्मनोः षड्भिः षडङ्गानि समाचरेत् ।
अवशिष्टौ पुनर्वर्णौ विन्यसेत् कुक्षिपृष्ठयोः ।।१२०।।

अथ ध्यानम्—

उद्यत्कोटिदिवाकराभमनिशं शङ्खं गदां पङ्कजं
चक्रं बिभ्रतमिन्दिरावसुमतीसंशोभि पार्श्वद्वयम् ।
कोटीराङ्गदहा कुण्डलधर पीताम्बर कौस्तुभो-
दीप्तं विश्वधरं स्ववक्षसि लसच्छ्रीवत्सचिह्नं भजे ।।१२१।।

अथ पुरश्चरणम्—

विकारलक्षं प्रजपेन्मनुमेनं समाहितः ।
तद्दशांशं सरसिजैर्जुहुयान्मधुराप्लुतैः ।।१२२।।

विकारलक्षं षोडशलक्षम् ।

अथ मन्त्रान्तरं तत्रैव—

प्रणवो हृद्भगवते वासुदेवाय कीर्त्तितः ।
प्रधानं वैष्णवे तन्त्रे मन्त्रोऽयं द्वादशाक्षरः ।।१२३।।
ऋषिः प्रजापतिश्छन्दो गायत्री परिकीर्त्तिता ।
देवताऽस्य मनोः प्रोक्तो वासुदेवो मनीषिभिः ।।१२४।।
तारेण हृदयं प्रोक्तं नमसा शिर ईरितम् ।
चतुर्वर्णैः शिखा प्रोक्ता पञ्चार्णैः कवचं मतम् ।।
समस्तेन भवेदस्त्रमङ्गकल्पनमीरितम् ।।१२५।।

अथ ध्यानम्—

विष्णुं शारदचन्द्रकोटिसदृशं शङ्खं रथाङ्गं गदा-
मम्भोजं दधतं सिताब्जनिलयं कान्त्या जगन्मोहनम् ।
आवद्धाङ्गदहारकुण्डलमहामौलिं स्फुरत्कङ्कणं
श्रीवत्साङ्कमुदारकौस्तुभधरं वन्दे मुनीन्द्रैः स्तुतम् ।।१२६।।

अथ पुरश्चरणम्—

वर्णलक्षं जपेन्मन्त्रं दीक्षितो विजितेन्द्रियः ।
तत्सहस्रं प्रजुहुयात् तिलैराज्यपरिप्लुतैः ।।१२७।।

अथ लक्ष्मीवासुदेवमन्त्रस्तत्रैव—

हृल्लेखाबीजयुगलं रमाबीजयुगं ततः ।
लक्ष्म्यन्ते वासुदेवाय हृदन्तः प्रणवादिकः ।।१२८।।
चतुर्दशाक्षरैः प्रोक्तो मन्त्रोऽयं सुरपादपः ।
हृदयं शक्तिबीजाभ्यां रमाभ्यां शिर ईरितम् ।।१२९।।
लक्ष्म्या प्रोक्ता शिखा वर्म वासुदेवाय ईरितम् ।
नमः सास्त्रं समादिष्टं सर्वं तारादि कल्पयेत् ।।१३०।।

ध्यानम्—

विद्युच्चन्द्रनिभं वपुः कमलजावैकुण्ठयोरेकतां
प्राप्तं स्नेहवशेन रत्नविलसद्भूषाभरालङ्कृतम् ।
विद्यापङ्कजदर्पणान् मणिमयं कुम्भं सरोजं गदां
शङ्खं चक्रममूनि विभ्रदमितां दिश्याच्छ्रियं वः सदा ।।१३१।।

अथ पुरश्चरणम्—

वर्णलक्षं जपेन्मन्त्रं तत्सहस्त्रं सरोरुहैः ।
होमं कुर्याद्विकसितैर्मधुरत्रयसंयुतैः ।।१३२।।
पूजा स्याद्वैष्णवे पीठे द्वादशाक्षरवर्त्मना ।
पायसेन कृतो होमो लक्ष्मीवश्यप्रदायकः ।।१३३।।
मधुराक्तैस्तिलैर्हुत्वा सर्वकार्याणि साधयेत् ।।१३४।।

विष्वक्सेन्याम्—

अथ मन्त्रान्तरं वक्ष्ये विष्णोः सर्वार्थसाधकम् ।
ङेऽन्तं विष्णुं समुद्धृत्य हृदयं वाणवर्णकः ।।
भवाब्धेः सेतुभूतोऽयमव्यक्ताद्यः षडक्षरः ।।१३५।।

अव्यक्त प्रणवः ।

नारदोऽस्य मुनिच्छन्दो गायत्रीविष्णुरव्ययः ।
देवता मन्त्रवर्णैस्तु षडङ्गानि प्रकल्पयेत् ।।१३६।।
शङ्खचक्रगदापद्मधरं लक्ष्मीसमावृतम् ।
पीताम्बरं घनश्यामं ध्यायेद्विष्णुं सनातनम् ।।१३७।।

अथ पुरश्चरणम्—

वर्णलक्षं जपेन्मन्त्रं त्रिमध्वक्तैस्तिलैर्हुनेत् ।
तर्पणादि ततः कुर्यादेवं सिद्धो भवेन्मनुः ।।१३८।।

अथ मत्स्यमन्त्रो मेरुतन्त्रे—

एक एवाभवन्मत्स्यावतारः कल्प आदिमे ।
तस्य मन्त्रं प्रवक्ष्यामि भुक्तिमुक्तिप्रदायकम् ।।१३९।।
तारो नमो भगवते मँ मत्स्याय रमां वदेत् ।
द्वादशाक्षरमन्त्रोऽयं मुनिर्ब्रह्मा समीरितः ।।१४०।।
गायत्री छन्द उद्दिष्टं देवता मीनविग्रहः ।
भगवान् स रमानाथो बीजं श्रीमँ च कीलकम् ।।१४१।।

मन्त्रपदैः कराङ्गन्यासौ कार्यौ ।

अथ ध्यानम्—

नाभ्याधो रोहितसमं आकण्ठं च नराकृतिः ।
घनश्यामश्चतुर्बाहुः शङ्खचक्रगदाधरः ।।१४२।।
शृङ्गीमत्स्यनिभो मूर्धा लक्ष्मीवक्षोविराजितः ।।
पद्मचिह्नितसर्वाङ्गः सुन्दरश्चारुलोचनः ।।१४३।।

पुरश्चरणमाह—

जपेद् द्वादशसाहस्त्रं त्रिमध्वक्तैस्तिलैर्हुनेत् ।
प्रत्यहं तद्दशांशेन वैशाखे कार्त्तिके तथा ।।१४४।।
माघे च मार्गशीर्षे च हविष्याशी जितेन्द्रियः ।
आरभ्य भाद्रबहुलमष्टमीषोडशाहकम् ।।१४५।।
लक्ष्मीमनुं जपेन्नित्यमिदं चापि कलाशतम् ।
तथैव होमः कर्त्तव्यस्तथाऽन्यदिवसेषु तु ।।१४६।।
तर्पयेद् द्वादशशतं तिलतण्डुलचन्दनैः ।
आद्यन्तयोः शतं चाष्टौ तर्पयेच्च तथा श्रियम् ।।१४७।।
रक्तोत्पलैर्वा पद्मैर्वा मालत्याद्यैः सुगन्धिभिः ।
एवं कृते वर्षमेकं मन्त्रसिद्धिः प्रजायते ।।१४८।।
नित्यं द्वादशविप्रांश्च श्रीरूपां च सुवासिनीम् ।
भोजयेत् पूजनं चास्य चरेत् तोयाशये सदा ।।१४९।।

तथा—

एवं सिद्धमनुर्मन्त्री जायते सिद्धिभाजनम् ।
एतद्युक्तं शतं मन्त्रं जपेदष्टोत्तरं शतम् ।।१५०।।
तद्दैवतादिने सिद्धः पुस्तकादेव जायते ।
अकुण्ठितप्रयोगेषु न पुनस्तस्य संस्कृतिः ।।१५१।।
एतत्पल्लविता मन्त्रा मम सिध्यन्ति पार्वति ।
एतत्संपुटिताः सर्वे वैदिकाः सिद्धिदाः कलौ ।।१५२।।
अनेन ग्रथिता जप्ताः कौले स्युर्द्रुतसिद्धिदाः ।।
गाणेशा वैष्णवाः सौराः सिद्धिं दद्युर्विदर्भिताः ।।१५३।।
यद्बलात् सर्वमन्त्राणां स्वयं सिद्धिः प्रजायते ।
तस्मान्नोक्तो नान्यतन्त्रे मेरुतन्त्रे प्रकाशितः ।।१५४।।

अथ कूर्ममन्त्रस्तत्रैव—

अथातः संप्रवक्ष्यामि कूर्ममन्त्रं महोद्भुतम् ।
एकः कूर्मावतारोऽभून्मथ्यमाने महादधौ ।।१५५।।
तारो नमो भगवते कुँ कूर्माय धराधर ।
धुरन्धराय णस्यान्ते सिद्धवर्णो मतो मनुः ।।१५६।।
प्रकृतिश्छन्द उदितं कश्यपोऽस्य मुनिर्मतः ।
देवता भगवान् विष्णुर्मतः कच्छपरूपधृक् ।।१५७।।
धराधरेत्यादिशक्तिः कुँ बीजं स्वेष्टसिद्धये ।
नियोगो देवता ध्यानं शङ्खचक्रगदाधरम् ।।१५८।।
पीताम्बरं कूर्मपृष्ठं न्यस्तलाङ्गूलशोभितम् ।
दीर्घग्रीवं महाग्राहं गिलन्तं रक्तलोचनम् ।।१५९।।
मन्त्रवर्णैः षडङ्गानि जपो लक्षचतुष्टयम् ।
आज्यहोमस्तर्पणं तु चन्दनोत्पलवारिभिः ।।१६०।।

अथ वराहमन्त्रस्तत्रैव—

अथातः संप्रवक्ष्यामि वराहस्य मनून् शुभान् ।
कल्पे जाताश्चतुर्वर्णा अवतारा रमापतेः ।।१६१।।
तारो नमो भगवते वराहेति च संवदेत् ।
रूपाय भूभुर्वः सुवः पतये भूपतीति च ।।१६२।।
त्वं मे देहि दापयेति स्वाहान्तः सुरवर्णकः ।

शारदायाम—

भार्गवो मुनिराख्यातश्छन्दोऽनुष्टुबुदाहृतम् ।।१६३।।
देवताऽऽदिवराहोऽस्य मन्त्रस्य कथितो बुधैः ।
एकदंष्ट्राय हृदयं व्योमोल्काय शिरः स्मृतम् ।।१६४।।
शिखा तेजोऽधिपतये विश्वरूपाय वर्म च ।
महादंष्ट्राय अस्त्रं स्यात् पञ्चाङ्गमिति कल्पयेत् ।।१६५।।

अथ ध्यानम्—

आपादं जानुदेशाद्वरकनकनिभं नाभिदेशादधस्तान्
मुक्ताभं कण्ठदेशात् तरुणरविनिभं मस्तकान्नीलभासम् ।
ईडे हस्तैर्दधानं रथ चरणदरौ खड्गखेटौ गदाख्यां
शक्तिं दानाभये च क्षितिधरणलसद्दंष्ट्रमाद्यं वराहम् ।।१६६।।

अस्य पुरश्चरणं तत्रैव—

लक्ष्मेकं जपेन्मन्त्रं मधुराक्तैः सरोरुहैः ।
जुहुयात् तद्दशांशेन पीठे विष्णोः प्रपूजयेत् ।।१६७।।

अथ मन्त्रान्तराणि—

अथान्यं संप्रवक्ष्यामि वराहाष्टाक्षरं परम् ।
ॐ भूर्वराहाय नमो मुनिर्ब्रह्मा समीरितः ।।१६८।।
जगती छन्द उद्दिष्टं वराहो देवता स्मृतः ।
पदैः समस्तमन्त्रेण पञ्चाङ्गानि प्रकल्पयेत् ।।१६९।।

ध्यानम्—

कृष्णाङ्गं नीलवक्त्रं च मलिनं पद्मसंस्थितम् ।
पृथ्वीशक्तियुतं ध्यायेच्छङ्खं चक्राम्बुजं गदाम् ।।१७०।।
भूलक्ष्मीकान्तिरतिभिः समन्तात् परिवारितम् ।
वर्मासिवद्भिश्च कलौ द्रुतसिद्धिप्रदायकम् ।।१७१।।
जपपूजादिकं सर्वमस्य पूर्ववदाचरेत् ।
एतं मनुं यः प्रभजेत् स भवेच्च धरापतिः ।।१७२।।
इमित्येकाक्षरो मन्त्रो वराहस्य प्रकीर्त्तितः ।
हयग्रीवो मुनिः प्रोक्तश्छन्दोऽनुष्टुप् च देवता ।।१७३।।
वराहो दीर्घयुक्तेन बीजेनैवाङ्गकल्पनम् ।
प्राग्वद्ध्यायेद्रक्तवर्णं पूजाद्यं पूर्ववद्भवेत् ।।१७४।।
भूरित्येकाक्षरं बीजं सर्वं प्राग्वत् समीरितम् ।
पीतवर्णं सदा ध्यायेद् द्वापरे द्रुतसिद्धिदम् ।।१७५।।

अथ धरणीमन्त्रः शारदायाम्—

हृदयं भगवत्यै स्याद्धरण्यै तदनन्तरम् ।
धरण्यन्ते धरेद्वन्द्वं द्विठान्तोऽयं ध्रुवादिकः ।।१७६।।
एकानेविंशत्यर्णाढ्यं धराहृदयमीरितम् ।
वराहोऽस्य मुनिः प्रोक्तश्छन्दो निवृदुदाहृतम् ।।१७७।।
देवता सर्वभूतानां प्रकृतिर्वसुधा मता ।
हृदयं त्रिभिराख्यातं चतुर्भिः शिर ईरितम् ।।१७८।।
त्रिभिः शिखा समुद्दिष्टा पञ्चभिः कवचं मतम् ।
द्वाभ्यां नेत्रं समाख्यातं द्वाभ्यामस्त्रं पुनर्भवेत् ।।
मन्त्रवर्णैः षडङ्गानि कुर्यादेवं विधानवित् ।।१७९।।

ध्यानम्—

श्यामां विचित्रांशुकरत्नभूषणां
पद्मासनां तुङ्गपयोधराननाम् ।
इन्दीवरं द्वे नवशालिमञ्जरीं
शुकं दधानां वसुधां भजामः ।।१८०।।

पुरश्चरणमाह—

लक्षमेनं जपेन्मन्त्री धराहृदयमादरात् ।
ससर्पिषा पायसेन जुहुयात् तद्दशांशतः ।।१८१।।
तां विष्णोः पूजयेत् पीठे वक्ष्यमाणविधानतः ।।१८२।।
स जयति जगतां नाथः करुणावरुणालयो नृहरिः ।
शरणीकृतयच्चरणा भवजलधिं तुलयन्ति गोष्पदेन ।।१८३।।
अथ दुस्तरसंसारसागरोत्तारसेतवः ।
चतुर्णां पुरुषार्थानामसाधारणहेतवः ।।१८४।।
उच्यन्ते चन्द्रचूडेन तन्त्रेषु प्रकटीकृताः ।
मन्त्राः श्रीदिव्यसिंहस्य ब्रह्माद्यैः समुपासिताः ।।१८५।।

मेरुतन्त्रे—

अथातः संप्रवक्ष्यामि नृसिंहस्य मनून् शुभाम् ।
प्रतिमन्वन्तरं चाऽयमवतारो हरेर्भवेत् ।।१८६।।
द्वीपान्तरे नृसिंहस्तु चतुर्दशसु मूर्त्तिषु ।
आकल्पं वसते तत्र भक्तानुग्रहकारकः ।।१८७।।
आदिमन्वन्तरे जातो नृसिंहो वक्ष्यतेऽधुना ।
द्वात्रिंशद्वर्णको गोप्यो भुक्तिमुक्तिप्रदो यतः ।।१८८।।

वैष्वक्सेन्यां ब्रह्मनारदसंवादे—

मन्त्रराजं प्रवक्ष्यामि शृणुश्वावहितो मुने ।
यत्प्रसादादविकलं सृजामि सकलं जगत् ।।१८९।।
आदौ विष्णुं समुद्धृत्य शार्ङ्गिणं वलिसंस्थितम् ।
प्रद्युम्नसहितं पश्चादुद्धरेद्[1] भूमिबालकम् ।।१९०।।

---

१. भूधरं तत इति २-३-४-५ पु. पा. ।

सगोविन्दं ततः प्रीतियुक्तं बलिनमुद्धरेत् ।
वैकुण्ठान्ते वराहं च नारायणसमन्वितम् ।।१९१।।
समाधववृषघ्नाख्यं वृषं नरकजिद्गतम् ।
शङ्कर्षणान्तमधुसूदनादिभ्यां समन्वितम् ।।१९३।।
बालस्थं च मुशल्यन्तमुद्धरेच्च वलानुजम् ।
वीरभागनिरुद्धाद्यसंयुतं हरिमुद्धरेत् ।।१९४।।
हंसान्ते वलिनाऽऽक्रान्तं भूधरं च ततो हरिम् ।
वासुदेवान्वितं विश्वमूर्त्यन्तं विष्णुसंयुतम् ।।१९५।।
सानिरूद्धं च गदिनं शूलाढ्यं सत्रिविक्रमम् ।
बिन्दुमाधवसंयुक्तं हंसहंसान्तमिन्दुकम् ।।१९६।।
गोविन्दयुग्विश्वमूर्त्तिं वृषहर्याद्यमिन्दुकम् ।
भूधरान्तं ततः सत्यं वलिं प्रद्युम्नसंयुतम् ।।१९७।।
सवामेनाद्यं वैकुण्ठं हरिं सपुरुषोत्तमम् ।
सविष्णुमेतदुभयं द्विरुद्धृत्यान्तिमे शिरः ।।१९८।।
दद्यात् ततः सात्त्वतान्तं पुरुषोत्तमपूर्वजम् ।
सकेशवान्त्यमुद्धृत्य वैकुण्ठपुरुषोत्तमौ ।।१९९।।
योगिनौ विश्वमूर्त्तेश्च दशमं सेन्दुमुद्धरेत् ।
द्वात्रिंशदक्षरात्माऽयं मन्त्रराजः सुरद्रुमः ।।२००।।
स धर्मार्थकाममोक्षाणां बीजभूतोऽयमद्भुतः ।
आद्यस्तूलौघदहनो भवतीति विनाशनः ।।२०१।।
यन्महावैष्णवं धाम परब्रह्मेति गीयते ।
स्वप्रकाशं जगद्व्यापि सच्चिदानन्दलक्षणम् ।।२०२।।
तदेव त्वं विजानीहि मन्त्ररूपमिदं मुने ।
न नृसिंहात् परो देवो नैतन्मन्त्रात् परो मनुः ।।२०३।।
न तद्ध्यानात् परं ध्यानं संसारभयनाशनम् ।
भगवद्भक्तितत्त्वज्ञैरुपास्योऽयं महामनुः ।।२०४।।
न प्रकाश्यस्त्वया वत्स देवानामपि दुर्लभः ।
अनेकमन्त्रकोटीनां चूडामणिरयं मनुः ।।२०५।।

यथा नृसिंहो भगवान् देवतानां शिरोमणिः ।
यन्नामस्मरणादेव न पुनर्जायते भवः ।। २०६ ।।
किं पुनः श्रद्धया भक्त्या भजतां तत्पदाम्बुजम् ।
सकृदुच्चरितं येन नृसिंहेत्यक्षरत्रयम् ।। २०७ ।।
धर्मराजभटैस्तस्य किमर्थं दृश्यते मुखम् ।
चतुर्णामपि वेदानां सारांशस्त्वेक एव हि ।।
नृसिंहेति नृसिंहेति नृसिंहेति च कीर्त्तनम् ।। २०८ ।।

मेरुतन्त्रे—

लोभधिक्यात् कलियुगे न गुरुर्न च देवता ।
एकं श्रेयस्करं प्रोक्तं नृहरेर्नामगर्जनम् ।। २०९ ।।

संहितायाम्—

अथोक्तमन्त्रराजस्य ऋष्यादीन् शृणु नारद ।
ऋषिर्ब्रह्माऽहमुद्दिष्टश्छन्दोऽनुष्टुबुदाहृतम् ।। २१० ।।
देवता श्रीनृसिंहोऽस्य देवदेवो जगद्गुरुः ।
ध्रुवमाये बीजशक्ती नारसिंहस्तु कीलकम् ।। २११ ।।
उदात्तस्तु स्वरः प्रोक्तो वर्णः शुक्ल उदाहृतः ।
धर्मार्थकाममोक्षार्थे विनियोगः प्रकीर्त्तितः ।। २१२ ।।

मेरुतन्त्रे—

वेदवेदाष्टषट्षट्कं वेदार्णैः स्यात् षडङ्गकम् ।। २१३ ।।

अथ ध्यानं संहितायाम्—

क्षीरार्णवे सितद्वीपे कल्पवृक्षवनं स्मरेत् ।
नानापुष्पफलाकीर्णं मुक्तारत्नौघवर्षणम् ।। २१४ ।।
विकसद्बालमन्दारपुष्पामोदमनोहरम् ।
कुसुमान्तर्मधुस्वादमत्तालिकुलसंकुलम् ।। २१५ ।।
कोकिलालापमुखरं नानापक्षिगणान्वितम् ।
ऋतुषट्केन युगपत् सेव्यमानं सुखास्पदम् ।। २१६ ।।
उत्फुल्लाम्बुजकह्लारकुमुदोत्पलशालिभिः ।
हंसकारण्डवाकीर्णैः सरोभिरुपशोभितम् ।। २१७ ।।
तस्य मध्ये स्फुरदीप्तिं चिन्तयेन्मणिमण्डपम् ।
तदन्तःपद्मरागौघकुट्टिमारक्तभूतले ।। २१८ ।।

नानारत्नप्रभोद्भासिस्वर्णसिंहासनोपरि ।
भोगीन्द्रभोगतल्पे च पद्ममष्टदलं स्मरेत् ।।२१९।।
तत्कार्णिकासमासीनं श्रीनृसिंहं विचिन्तयेत् ।
चन्द्रकोटिप्रतीकाशं भास्वत्पीताम्बरावृतम् ।।२२०।।
ज्वलत्कालानलप्रख्यज्वालामालिदुरासदम् ।
चक्रं सुदर्शनं चापं सबाणं वरमुद्रिकाम् ।।२२१।।
अभयाख्यां तथा मुद्रां निजभक्तेषु सार्थिकाम् ।
धारयन्तं महावाहुं चतुर्भिः करपल्लवैः ।।२२२।।
सोमसूर्याग्निनयनमीषद्व्यानाननाम्बुजम् ।
स्फुरत्सौदामिनीजिह्वं दंष्ट्राद्भुतमुखाम्बुजम् ।।२२३।।
तप्तचामीकरप्रख्यजटामण्डलमण्डितम् ।
हैमं किरीटं बिभ्राणं भास्वन्मणिगणोज्ज्वलम् ।।२२४।।
श्रीवत्सकौस्तुभोरस्कं स्फुरन्मकरकुण्डलम् ।
योगपट्टपिनद्धाङ्गं वनमालाविराजितम् ।।२२५।।
हारकेयूरमञ्जीरस्फुरत्काञ्चीगुणादिभिः ।
भूषितं भूषणैर्दिव्यैर्नानारत्नोपकल्पितैः ।।२२६।।
ज्वलन्मणिशिखादीप्तफणीन्द्रफणपङ्क्तिभिः ।
कृतच्छत्रं स्वतेजोभिर्भासयन्तं दिशो दश ।।२२७।।
कल्पान्तकालदहनज्वालजालविडम्बिभिः ।
ललाटनयनज्वालैर्दुर्निरीक्ष्यं सुरैरपि ।।२२८।।
स्ववामाङ्कगतां लक्ष्मीं तप्तजाम्बुनदप्रभाम् ।
शुद्धक्षौमपरीधानां नानालङ्कारभूषिताम् ।।२२९।।
वराभयं पद्मयुग्मं बिभ्राणां करपङ्कजैः ।
शरत्पूर्णेन्दुवदनां मन्दस्मितमुखाम्बुजाम् ।।२३०।।
आश्लिष्यन्तं कृताश्लेषामानन्दोत्फुल्ललोचनाम् ।
भारत्या दक्षिणे देशे स्तूयमानं हि सर्वदा ।।२३१।।
शङ्खचक्रगदापद्मधारिभिर्वनमालिभिः ।
इन्द्रनीलनिभैर्वीरैः पार्षदैः परितो वृतम् ।।२३२।।
ब्रह्मादिभिः सुरगणैः सनकाद्यैर्महर्षिभिः ।
योगिभिः सिद्धगन्धर्वैरप्सरोभिश्च सेवितम् ।।२३३।।

अतिप्रसन्नवदनं भक्ताभीष्टवरप्रदम् ।
एवंविधमनिर्देश्यमवाङ्मनसगोचरम् ।।२३४।।
दिव्यसिंहं हृदिं ध्यायेत् परमात्मानमच्युतम् ।
एवं ध्यात्वा महाविष्णुं दिव्यकेशरिणं तनुम् ।।२३५।।
सान्द्रानन्दमयं शान्तं नित्यविज्ञानविग्रहम् ।
हृत्पद्मे नृहरिं ध्यात्वा साक्षान्नारायणो भवेत् ।।२३६।।
आदिषोडशचक्रस्थमथ वा बिन्दुवर्जितम् ।
अनादिमपरिच्छिन्नं योगिगम्यमतीन्द्रियम् ।।२३७।।
परात्परतरं नित्यं निरुपाधिमनाविलम् ।
स्वतः प्रकाशं जगतः साक्षीभूतं निरञ्जनम् ।।२३८।।
ज्योतिर्मयं नरहरिं ध्यात्वा ब्रह्ममयो भवेत् ।
अथ वा विश्वमखिलं भावयेन्नृहरेस्तनुम् ।।
जीवन्मुक्तो भवेत् सद्यो निराधिरकुतोभयः ।।२३९।।

ध्यानान्तरमुक्तं शारदायाम्—

माणिक्याद्रिसमप्रभं निजरुचा संत्रस्तरक्षोगणं
जानुन्यस्तकराम्बुजं त्रिनयनं रत्नोल्लसद्भूषणम् ।
बाहुभ्यां धृतशङ्खचक्रमनिशं दंष्ट्रोग्रवक्त्रोल्लस
ज्ज्वालाजिह्वमुदग्रकेशनिचयं वन्दे नृसिंहं विभुम् ।।२४०।।

मेरुतन्त्रे—

वामे शङ्खमरिं दक्षे जानुविन्यस्तबाहुकम् ।
ग्रसन्तं दैत्यराजानं कृशानूपमतेजसा ।।२४१।।
द्रंष्टाप्रदीप्तवदनं ललज्जिह्वं त्रिलोचननम् ।
सुरैश्च मुनिभिर्लक्ष्म्या कृताञ्जलिकया स्तुतम् ।।२४२।।

कामनाभेदेन ध्यानभेदा उक्तास्तत्रैव—

काम्यप्रयोगसिद्ध्यर्थं ध्यानभेदान् वदाम्यहम् ।
उद्यत्सहस्रार्कभासं त्रिनेत्रं भीषणाकृतिम् ।।२४३।।
वज्रतुल्येक्षणं वह्निकान्तिं नानाभुजैर्वृतम् ।
नखैर्दारितदैत्येशं रक्तधाराक्तकायकम् ।।२४४।।
क्रूरकर्मादिविषये स्मरेद्देवं भयानकम् ।
विश्वरूपमयं ध्यानं नृहरेः प्रोच्यतेऽधुना ।।२४५।।

नृसिंहं तं महाभीमं कालानलसमप्रभम् ।
अक्षमालाधरं रौद्रं कण्ठं हारेण शोभितम् ।।२४६।।
नागयज्ञोपवीतं च पञ्चाननसुशोभितम् ।
चन्द्रमौलिं नीलकण्ठं प्रतिवक्त्रं त्रिलोचनम् ।।२४७।।
भुजैः परिघसंकाशैर्दशभिश्चोपशोभितम् ।
अक्षसूत्रं गदां पद्मं शङ्खं गोक्षीरसन्निभम् ।।२४८।।
धनुश्च मुशलं चैव बिभ्राणं चक्रमुत्तमम् ।
खड्गं शूलं च बाणं च नृहरिं रुद्रगोपनम् ।।२४९।।
इन्द्रनीलकनीलाभं चन्द्राभं स्वर्णसन्निभम् ।
पूर्वोदयोत्तरज्वालदूर्ध्वास्यं सर्ववर्णकम् ।।२५०।।
एवमुग्रहरिं ध्यायेत् सर्वव्याधिनिवृत्तये ।
ध्येयो यदा महत् कर्म तदा षोडशहस्तवान् ।।२५१।।
नृसिंहः सर्वलोकेशः सर्वाभरणभूषितः ।
द्वौ विदारणकर्माहौं द्वौ चात्रोद्धरणक्षमौ ।।२५२।।
चक्रशङ्खधरावन्यावन्यौ बाणधनुर्धरौ ।
खड्गखेटधरावन्यौ द्वौ गदापद्मधारिणौ ।।२५३।।
पाशाङ्कुशधरावन्यौ द्वौ रिपोर्मुकुटार्पितौ ।
इति षोडशदोर्दण्डमण्डितं नृहरिं विभुम् ।।२५४।।
ध्यायेदम्बुजनीलाभमुग्रकर्मण्यनन्यधीः ।
ध्येयो महत्तमे कार्ये तदा षड्विंशहस्तवान् ।।२५५।।
नृसिंहः सर्वभूषाढ्यः सर्वसिद्धिकरः प्रभुः ।
दक्षिणे खड्गचक्रे च परशुं पाशमेव च ।।२५६।।
हलं च मुशलं सम्यगभयं चाङ्कुशं तथा ।
पट्टिशं भिन्दिपालं च खेटतोमरमुद्गरान् ।।२५७।।
वामभागकरैः शङ्खं खड्गं पाशं च शूलकम् ।
हुताशनं वरं शक्ति सम्यग्मृण्मयकुण्डिकाम् ।।२५८।।
कार्मुकं तर्जनीमुद्रां गदां डमरुसर्पकान् ।
करद्वन्द्वैः क्रमाच्छत्रोर्जानुमस्तकपत्तलम् ।।२५९।।
ऊर्ध्वीकृताभ्यां हस्ताभ्यां मन्त्रमालाधरं हरिम् ।
अधः स्थिताभ्यां हस्ताभ्यां हिरण्यकविदारणम् ।।२६०।।

प्रियङ्करं च भक्तानां दैत्यानां च भयङ्करम् ।
नृसिंहं संस्मरेद्दिव्यं महामृत्युभयापहम् ।। २६१।।
अथोच्यते ध्यानमन्यन्मुखरेण हरं परम् ।
विषरोगहरं मृत्युहरं शत्रु भयावहम् ।। २६२।।
स्वर्णौघतुल्ये गरुडे स्थितं पूर्णेन्दुवर्णकम् ।
सुमुखं विद्युदाभासनेत्रत्रयविराजितम् ।। २६३।।
सुभूषं पीतवसनं शङ्खचक्रवराभयान् ।
धारयन्तं चतुर्भिश्च करैः क्ष्वेडादिनाशकम् ।।
अपमृत्युमहाकृत्यानाशकं नृहरिं स्मरेत् ।। २६४।।

शारदायाम्—

उद्यत्कोटिरविप्रभं नरहरिं कोटिरहारोज्ज्वलं
दंष्ट्राभीममुखं लसन्नखमुखैर्दीर्घैरनेकैर्भुजैः ।
निर्भिन्नासुरनाथमग्निशशभृत्सूर्यात्मनेत्रत्रयं
विद्युत्पुञ्जजटाकलापभयदं वह्निं वमन्तं भजे ।। २६५।।
सौम्ये सौम्यं स्मरेत् कार्यक्रूरे क्रूरमिमं भजेत् ।। २६६।।

पुरश्चरणमाह मेरौ—

अष्टलक्षं जपेन्मन्त्रं दीक्षितो विजितेन्द्रियः ।
तत्सहस्रं प्रजुहुयाद्घृताक्तहविषाऽनले ।। २६७।।
तर्पणं मार्जनं कृत्वा ब्राह्मणाराधनं तथा ।
कुर्यात् संसिद्धमन्त्रस्तु प्रयोगानाचरेत् ततः ।। २६८।।

शारदायां तु—

वर्णलक्षं जपेन्मन्त्रं तत्सहस्रं घृतप्लुतैः ।
पायसान्नैः प्रजुहुयाद्विधिवत्पूजितेऽनले ।।
एवं कृते भवेन्मन्त्री सिद्धमन्त्रः प्रतापवान्।। २६९।।

अथ मन्त्रभेदा मेरुतन्त्रे—

अथातः संप्रवक्ष्यामि द्वितीयं नृहरिं विभुम् ।। २७०।।

संहितायाम्—

अथ वक्ष्ये नृसिंहस्य बीजरूपं मनूत्तमम् ।
संवर्त्तो वह्निमारूढो मनुस्वरविभूषितः ।। २७१।।

बिन्दुनादकलाकान्तो भुक्तिमुक्तिप्रदो मनुः ।
अत्रिरस्य मुनिः प्रोक्तो गायत्री छन्द ईरितम् ।।२७२।।
देवता नृहरिः प्रोक्तः सुरासुरनमस्कृतः ।
षड्दीर्घभाजा बीजेन षडङ्गानि प्रकल्पयेत् ।।
ध्यानपूजादिकं सर्वं मन्त्रराजोदितं चरेत् ।।२७३।।

अस्य पुरश्चरणमुक्तं मेरुतन्त्रे—

एकलक्षं जपेन्मन्त्रं हविष्याशी जितेन्द्रियः ।
तद्दशांशं हुनेत् सम्यग्घृताक्तैः पायसैः शुभैः ।।२७४।।
तर्पयेच्छुद्धसलिलैः कृत्वा चात्माभिषेचनम् ।
ब्राह्मणान् सम्यगाराध्य सिद्धमन्त्रः समाचरेत् ।।
मन्त्रराजोदितान् सर्वान् प्रयोगानत्र साधकः ।।२७५।।

तत्रैव—

अथातः संप्रवक्ष्यामि तृतीयं नृहरेर्मनुम् ।।२७६।।

शारदायाम्—

पाशः शक्तिर्नरहरिरङ्कुशो वर्म फड्मनुः ।
षडक्षरो नरहरेः कथितः सर्वकामदः ।।२७७।।
ऋषिर्ब्रह्मा समुद्दिष्टः पङ्क्तिश्छन्द उदाहृतम् ।
देवता नरसिंहोऽस्य षड्बीजैरङ्गकल्पना ।।२७८।।

अथ ध्यानम्—

कोपादालोलजिह्वं विवृतनिजमुखं सोमसूर्याग्निनेत्रं
पादादानाभिरक्तप्रभमुपरिसितं भिन्नदैत्येन्द्रगात्रम् ।
शङ्खं चक्रं सपाशाङ्कुशकुलिशगदादारणान्युद्वहन्तं
भीमं तीक्ष्णाग्रदंष्ट्रं मणिमयविविधाकल्पमीडे नृसिंहम् ।।२७९।।

पुरश्चरणमाह—

ऋतुलक्षं जपेदेनं घृतेन जुहुयात् ततः ।
तत्सहस्रं समिद्धेऽग्नौ तोषयेद्द्रविणैर्गुरुम् ।।२८०।।

मेरुतन्त्रे—

अथातः संप्रवक्ष्यामि तुर्यमन्वन्तरोद्भवम् ।
ज्वालामालिनृसिंहस्य मनुं भूतादिनाशकम् ।।२८१।।

शारदायाम्—

बीजं नमो भगवते नरसिंहाय तत्परम् ।
स्याज्ज्वालामालिने पश्चाद्दीप्तदंष्ट्राय तत्परम् ।।२८२।।
अग्निनेत्राय सर्वादिरक्षोघ्नाय पदं वदेत् ।
सर्वभूतविनाशान्ते नकारो दीर्घवान्मरुत् ।।२८३।।
एवं ज्वरविनाशान्ते नायार्णो दहयुग्मकम् ।
पचद्वयं रक्षयुग्मं हुँ फट्स्वाहा ध्रुवादिकः ।।२८४।।
सप्तषष्ट्यक्षरैः प्रोक्तो ज्वालामालिमहामनुः ।
हृत् त्रयोदशभिः प्रोक्तं शिरो दशभिसंरितम् ।।२८५।।
शिखैकादशभिः प्रोक्ता वर्माष्टादशभिर्मतम् ।
वर्णैर्द्वादशभिर्नेत्रमस्त्रं स्यात् करणाक्षरैः ।।
एवमङ्गानि विन्यस्य चिन्तयेन्मन्त्रदेवताम् ।।२८६।।

ध्यानम् —

प्रज्वलन् प्रलयानलाभमयुग्मनेत्रमनारतम् ।
भासुरं शिखिनः शिखाभिरुपदंष्ट्रमुखाम्बुजम् ।।२८७।।
रक्षसां भयदं विकीर्णसटाकलापविभीषणम् ।
शङ्खचक्रकृपाणखेटकधारिणं नृहरिं भजे ।।२८८।।

अथ पुरश्चरणम्—

लक्षमेकं जपेन्मन्त्रं तद्दशाशं समाहितः ।
कपिलाज्येन जुहुयात् समिद्धे हव्यवाहने ।।२८९।।

मेरुतन्त्रे—

अथातः संप्रवक्ष्यामि यो जातः पञ्चमे विभुः ।
मन्वन्तरे स लक्ष्मीकः सेव्यते यो गृहस्थितैः ।।२९०।।

संहितायाम्—

अथ लक्ष्मीनृसिंहस्य मन्त्रं वक्ष्ये सुदुर्लभम् ।
तारेन्दिराशक्तिरमाः शूलिनं पुरुषोत्तमम् ।।२९१।।
लक्ष्मीप्रियपदं ङेऽन्तं नित्यमामुदितोत्तरम् ।
चेतसं तादृशं प्रोक्त्वा लक्ष्मीश्रितपदोत्तरम् ।।२९२।।
अर्धदेहपदं ङेऽन्तं रमा माया रमा च हृत् ।
सुरवर्णो मनुः प्रोक्तश्चतुर्वर्गफलप्रदः ।।२९३।।

मुनिः प्रजापतिः प्रोक्तश्छन्दोऽनुष्टुबुदाहृतम् ।
लक्ष्मीनृसिंहो भगवान् देवताऽस्य प्रकीर्त्तितः ।।
स्वबीजेन षडङ्गानि कृत्वा न्यासान्तरं चरेत् ।।२९४।।

तदुक्तं मेरुतन्त्रे—

पुरस्तात् केशवः पातु चक्री जाम्बूनदप्रभः ।
पश्चान्नारायणः शङ्खी नीलजीमूतसन्निभः ।।२९५।।
इन्दीवरदलश्यामो माधवोर्ध्वगदाधरः ।
गोविन्दो दक्षिणे पार्श्वे धन्वी चन्द्रप्रभो महान् ।।२९६।।
उत्तरे हलधृग्विष्णुः पद्मकिञ्जल्कसन्निभः ।
आग्नेय्यामरविन्दाक्षो मुशली मधुसूदनः ।।२९७।।
त्रिविक्रमः खड्गपाणिर्नैर्ऋत्यां ज्वलनप्रभः ।
वायव्यं वामनो वज्री तरुणादित्यदीप्तिमान् ।।२९८।।
ऐशान्यां पुण्डरीकाक्षः श्रीधरः पट्टिशायुधः ।
विद्युत्प्रभो हृषीकेशो वायव्यां दिशि मुद्गरी ।।२९९।।
हृत्पद्मं पद्मनाभो मे सहस्रार्कसमप्रभः ।
सर्वायुधः सर्वशक्तिः सर्वज्ञः सर्वतो मुखः ।।३००।।
इन्द्रगोपकसंकाशः पाशहस्तोऽपराजितः ।
सबाह्याभ्यन्तरं देहं व्याप्य दामोदरः स्थितः ।।३०१।।
एवं सर्वत्र निश्छिद्रं नामद्वादशपञ्जरम् ।
प्रविष्टोऽहं न मे किञ्चिद्भयमस्ति कदाचन ।।
इति न्यासं विधायादौ लक्ष्मीनरहरिं स्मरेत् ।।३०२।।

ध्यानं यथा—

सर्पेन्द्रभोगशयनः सर्पेन्द्रफणच्छत्रवान् ।
आलिङ्गितश्च रमया दीप्तया चन्द्रसन्निभः ।।३०३।।
पद्मचक्रवराभीतिधरस्त्र्यक्षेन्दुशेखरः ।
(संहितायां) तु मन्त्रराजोक्तमेवं ध्यानमुत्तमम् ।।३०४।।

पुरश्चरणमाह—

षष्ट्युत्तरं त्रिलक्षं तु प्रजपेत् तत्सहस्रकम् ।
मध्वक्तमल्लिकापुष्पैर्जुहुयान्मन्त्रवित्तमः ।।३०५।।

अभ्यर्च्य सलिले देवं तर्पयेन्मनुना ततः ।
अभिषिञ्चेत् स्वमूर्धानं ब्राह्मणान् भोजयेत् ततः ।।३०६।।
ततः प्रयोगान् कुर्वीत साधको निजवाञ्छितान् ।।३०७।।

तत्रैव—

अथातः संप्रवक्ष्यामि षष्ठमन्वन्तरेऽभवत् ।
लक्ष्म्या सह नृसिंहोऽयंस्तन्मन्त्रः सर्वकामदः ।।३०७।।
ॐ श्रीँ लक्ष्मीनृसिंहाय मनुरष्टाक्षरो मतः ।
मुनिः प्रजापतिश्छन्दोऽनुष्टुब्लक्ष्मीहरिः सुरः ।।३०८।।
षड्दीर्घयुक्तं क्ष्रौँ बीजैः षडङ्गविधिरीरितः ।
ध्यानपूजादिकं सर्वं षडक्षरवदीरितम् ।।३०९।।

अथ पुरश्चरणम्—

वर्णलक्षं जपेन्मन्त्रं तद्दशांशं घृतप्लुतैः ।
पायसैर्जुहुयान्मन्त्री तर्पणादि ततश्चरेत् ।।३१०।।
अथातः संप्रवक्ष्यामि यो जातः सप्तमे हरिः ।
जय जय श्रीनृसिंह मनुरष्टाक्षरो मतः ।।३११।।
ऋष्याद्यष्टार्णवत् प्रोक्तं पूजा चास्य षडर्णवत् ।
एकार्णवत् प्रयोगाँश्च गृहस्थः साधयेच्छुचिः ।।३१२।।
अथातः संप्रवक्ष्यामि त्वष्टमके यस्तु जायते ।
दशावतारनृहरिर्दक्षसावर्णिकान्तरे ।।३१३।।
ॐ क्ष्रौँ नमो भगवते नृसिंहाय संवदेत् ।
ॐ क्ष्रौँ च मत्स्यरूपाय कूर्मरूपाय तद्द्वयात् ।।३१४।।
ॐ क्ष्रौँ वराहरूपाय ततो बीजद्वयं वदेत् ।
नृसिंहरूपाय ततो वेदादि क्ष्रौँ वदेत् ततः ।।३१५।।
प्रोक्त्वा वामनरूपाय त्रिधा बीजद्वयं वदेत् ।
रामाय तच्च कृष्णाय तद्द्वयं कल्किने वदेत् ।।३१६।।
जयशब्दद्वयान्ते तु शालग्रामनिवासिने ।
दिव्यसिंहायेति चोक्त्वा वदेत् पश्चात् स्वयम्भुवे ।।३१७।।
पुरुषाय नमस्तारः क्ष्रौमेकोनशतार्णकः ।
अद्विजेन तु बुद्धाय वक्तव्यं बीजपूर्वकम् ।।३१८।।

तदा मन्त्रः समाख्यातश्चतुरूर्ध्वशताक्षरः ।
छन्दोऽतिजगती प्रोक्तमृषिरत्रिः प्रकीर्त्तितः ।।३१९।।
दशावतारनृहरिर्देवता सर्वकामदः ।
षड्दीर्घयुक्तबीजेन षडङ्गानि प्रकल्पयेत् ।।३२०।।
मन्त्रराजवदेवास्य ध्यानपूजादिकं भवेत् ।
यजेत् षडङ्गपूजान्ते मत्स्यादीनवतारकान् ।।३२१।।

अथ पुरश्चरणम्—

अयुतं प्रजपेन्मन्त्रं साज्येन हविषा ततः ।
जुहुयात् तद्दशांशेन तर्पणादि ततश्चरेत् ।।३२२।।
काम्यकर्माणि सर्वाणि मन्त्रराजवदेव हि ।
अस्य संसेवनाद्विप्रा ब्रह्मचर्यादिविच्युताः ।।३२३।।
नृसिंहरूपतां प्राप्य जाताः स्थाननृसिंहकाः ।
आविशंति च ते देहे सम्यक् कुर्वन्ति पूजिताः ।।३२४।।
अथातः संप्रवक्ष्यामि जायते नवमे तु यः ।
नरसिंहो वीरनामा शृणु तत्साधनं प्रिये ।।३२५।।
बाले च तरुणे वृद्धे प्रयोगार्थं मनुत्रयम् ।
प्रोक्तं संसाधिके वक्रशुद्धे सिद्धास्त्रयोऽपि च ।।३२६।।
तारो नमो भगवते बीजान्ते नरपदं वदेत् ।
सिंहायेति ततः प्रोक्त्वा ज्वालामालापदं वदेत् ।।३२७।।
पिनद्धाङ्गाय इत्युक्त्वा अग्निनेत्राय संवदेत् ।
सर्वभूतविनाशेति नायेत्युक्त्वा द्विधा दह ।।३२८।।
पच युग्मं रक्षयुग्मं ह्रीँ श्रीँ रक्षाग्निगेहिनी ।
चतुष्पञ्चाशदर्णोऽयं मन्त्रः प्रथम ईरितः ।।३२९।।
वर्णाः षोडशपूर्वस्य लीने दीप्तपदं वदेत् ।
दंष्ट्राय चाग्निनेत्राय सर्वरक्षोपदं ततः ।।३३०।।
ध्यायोक्त्वा सर्वभूतेति ङेऽन्तं विनाशनं वदेत् ।
सर्वज्वरविनाशाय हनद्वन्द्वं दहद्वयम् ।।३३१।।
पचयुग्मं बन्धयुग्मं हुँ फट् स्वाहा क्वगार्णकः ।
तृतीयमथ वक्ष्यामि पूर्वार्णा गजबाहवः ।।३३२।।

विनाशनाय चान्ते स्यात् पूर्वसर्वपदं त्रिधा ।
मध्ये भूतज्वरदोषपदानि त्रीणि योजयेत् ।।३३३।।
हनादिचतुरन्ते तु रक्षयुग्मं च मां च माम् ।
हूँ फट्स्वाहा नवकृतिवर्णतुल्यो मतो मनुः ।।३३४।।
मन्त्रराजोक्तवच्चास्य पूजाध्यानजपादिकम् ।
मालामन्त्रा इमे ख्याता द्रुतसिद्धिविधायकाः ।।३३५।।
अथातः संप्रवक्ष्यामि दशमे जायते तु यः ।
ॐ क्ष्रौँ महानृसिंहाय नमोऽन्तो दशवर्णकः ।।३३६।।
वामदेवो मुनिश्छन्दो विराड्देवो नृसिंहकः ।
षड्दीर्घयुक्स्वबीजेन षडङ्गन्यासमाचरेत् ।।३३७।।
ध्यानपूजापुरश्चर्या होमो लक्ष्मीनृसिंहवत् ।
वर्णलक्षं जपेन्मन्त्रं प्रयोगोऽष्टाक्षरोदितः ।।३३८।।
अथातः संप्रवक्ष्यामि मन्त्रमेकादशस्य तु ।
ॐ क्ष्रौँ नमो भगवते नरसिंहाय मन्त्रकः ।।३३९।।
त्रयोदशार्णं उद्दिष्टो भुक्तिमुक्तिप्रदायकः ।
वामदेवो मुनिः प्रोक्तो जगती छन्द ईरितम् ।।३४०।।
देवतानरसिंहोऽत्र स्वबीजेनाङ्गकल्पनम् ।
ध्यानपूजाप्रयोगादि षडक्षरवदीरितम् ।।३४१।।
अथातः संप्रवक्ष्यामि द्वादशे जायते तु यः ।
काश्यां स वसते नित्यं दुष्टबुद्धिप्रचालकः ।।३४२।।
तारं सहस्रारज्वालावर्त्तिने क्ष्रौँ हनद्वयम् ।
हुँ फट्स्वाहा चोनविंशवर्णो मन्त्र उदाहृतः ।।३४३।।
मुनिर्जयन्त आख्यतश्छन्दो गायत्रमुच्यते ।
सुदर्शननृसिंहोऽस्य देवता परिकीर्त्तितः ।।३४४।।
चक्रराजाय हृत् प्रोक्तं ज्वालाचक्राय वै शिरः ।
गजचक्राय च शिखा कवचं त्वस्य संमतम् ।।३४५।।
असुरान्तकचक्राय ह्यस्त्राय फडितीरितम् ।
सुदर्शनायेति मनुः पञ्चाङ्गमेतदीरितम् ।।३४६।।

अथ ध्यानम्—

चक्राणां तु सभामध्ये कालाग्निसदृशप्रभम् ।
चतुर्भुजं विवृत्तास्यं चतुश्चक्रधरं हरिम् ।।३४७।।
तप्तकाञ्चनसंकाशं त्रिनेत्रं चाद्यविग्रहम् ।
ध्यायेत् समस्तदुःखघ्नं तादृग्लक्ष्म्या समन्वितम् ।।३४८।।

अथ पुरश्चरणम्—

रविलक्षं जपेन्मन्त्रं तद्दशांशं तिलैः शुभैः ।
हुनेत् पुष्पैस्ततश्चापि चत्वारिंशत्सहस्रकम् ।।३४९।।
पुनराज्येन जुहुयात् सहस्रं च नमस्क्रियाः ।
तर्पणादि ततः कृत्वा प्रयोगानाचरेत् ततः ।।३५०।।
अथातः संप्रवक्ष्यामि भुक्तिमुक्तिप्रदायकम् ।
जातं त्रयोदशे देवं नृहरिं क्ष्रौँ तु संपुटः ।।३५१।।
मायया भोगदाता स्यात् प्रणवेन च मोक्षदः ।
अस्य पूजाप्रयोगाद्यमैकाक्षरसमं भवेत् ।।३५२।।
अथातः संप्रवक्ष्यामि जातं मन्वन्तरे विभुम् ।
अभयाख्यो नृसिंहोऽयं समस्तभयनाशनः ।।३५३।।
तारो नमो भगवते नरसिंहाय हृद्वदेत् ।
तेजस्तेजस इत्युक्त्वा आविराविर्भवेति च ।।३५४।।
वज्रनख वज्रदंष्ट्र कर्माशयान् द्वी रन्धय ।
तमोर्द्विग्रस वह्निस्त्री वदेदभयमात्मनि ।।३५५।।
भूयिष्ठा ॐ क्ष्रौमिति च द्विषष्ट्यर्णो मनुर्मतः ।
मुनिः शुकोऽतिजगती छन्दः प्राग्वदिवाखिलम् ।।३५६।।
चतुर्दशनृसिंहानां साधनं वेदबोधितम् ।
तदत्र कथितं देवा भुक्तिमुक्तिप्रदायकम् ।।३५७।।

अथ वामनमन्त्रो मेरुतन्त्रे—

अथातः संप्रवक्ष्यामि वामनस्य शुभान् मनून् ।
मन्वन्तरं तपत्येकं सुरेशं वाधते परम् ।।३५८।।
पुनर्ददाति हरये त्रैलोक्यं स वलिर्नृपः ।
एकं मन्वन्तरं शक्रः स्वयमेवाभवद्बलिः ।।
एवं षड्वामनाः कल्पे तेषां मन्त्रान् वदाम्यहम् ।।३५९।।

षड्वामनाश्च तन्त्रान्तरे—

दधिवामनयज्ञेशवामनौ भोगवामनः ।
बालको वामनो विश्वरूपोऽन्यो वलिवामनः ।।३६०।।

तत्र दधिवामनमन्त्रः शारदायाम्—

तारो हृद्विष्णवे पश्चाद्ङेन्तः सुरपतिर्भवेत् ।
महाबलाय ठद्वन्द्वं मनुरष्टादशाक्षरः ।।३६१।।
ऋषिरिन्दुर्विराट्छन्दो देवता दधिवामनः ।
हृदेकेन शिरो द्वाभ्यां शिखा त्रिभिरुदाहृतम् ।।३६२।।
कवचं पञ्चभिः प्रोक्तं नेत्रं तावद्भिरक्षरैः ।
द्वाभ्यामस्त्रमिति प्रोक्तः प्रकारोऽङ्गस्य सूरिभिः ।।३६३।।

अथ ध्यानम्—

मुक्तागौरं नवमणिलसद्भूषणं चन्द्रसंस्थं
भृङ्गाकारैरलकनिकरैः शोभिवक्त्रारविन्दम् ।
हस्ताग्राभ्यां कनककलशं शुद्धतोयाभिपूर्णं
दध्यन्नाढ्यं कनकचषकं धारयन्तं भजामः ।।३६४।।

अथ पुरश्चरणम्—

गुणलक्षं जपेन्मन्त्रं तद्दशांशं घृतप्लुतैः ।
पायसान्नैः प्रजुहुयाद्दध्यन्नैर्वा यथाविधि ।।३६५।।

वामनमन्त्रभेदास्तु मेरौ द्रष्टव्याः ।

अथ त्रिविक्रममन्त्रा मेरौ—

अथातः संप्रवक्ष्यामि मन्त्रं त्रैविक्रमं परम् ।
तारो नमो भगवते व्याहृतित्रितयं वदेत् ।।३६६।।
व्यापकाय परं पश्चाद् ङेऽन्तं चापि त्रिविक्रमम् ।
विंशत्यर्णो महामन्त्रो गतराज्यप्रदायकः ।।३६७।।
पदपञ्चकसर्वेण षडङ्गविधिरीरितः ।
मुनयो बालखिल्याः स्युश्छन्दो गायत्रमीरितम् ।।३६८।।
देवता विश्वरूपोऽयं त्रिविक्रम उदाहृतः ।

ध्यानम्—

दक्षाङ्घ्रीव्याप्तपातालं वामाङ्घ्रीव्याप्तभूतलम् ।।३६९।।

दक्षिणं पुनरुत्थाप्य स्वर्गव्याप्तिकरं हरिम् ।
वलिदत्तैः कुशतिलतोयैः संप्रस्त्रवत्करम् ।।३७०।।
अभयं वामहस्तेन कुर्वन्तं च सुरेश्वरम् ।
गङ्गौघधौतपादाब्जं ध्यायेद् ब्रह्मादिकस्तुतम् ।।३७१।।

अथ पुरश्चरणम्—

विंशल्लक्षं जपेन्मन्त्रं तिलतण्डुलसर्षपैः ।
त्रिमध्वक्तैर्हुनेत् पश्चात् तर्पणाद्यं च कारयेत् ।।
एवं सिद्धमनुर्मन्त्री लभते वाञ्छितं फलम् ।।३७२।।

अथ परशुराममन्त्रस्तत्रैव—

अथातः संप्रवक्ष्यामि राममन्त्रं महाद्भुतम् ।
आकल्पमेक एवायं जामदग्न्यो महाबलः ।।३७३।।
ब्रह्मक्षेत्राय विद्महे क्षत्रियान्ताय धीमहि ।
तन्नो रामः प्रचोदयात् .... .... ।।३७४।।

तथा—

श्रीमत्परशुरामस्य गायत्र्येषा महाद्भुता ।
राज्यकृत् कलिभूपानां सर्वतन्त्रेषु गोपिता ।।३७५।।
भरद्वाजो मुनिः प्रोक्तो गायत्री छन्द ईरितम् ।
श्रीमान् परशुरामोऽस्य देवता भक्तवत्सलः ।।
अष्टेषुत्रिद्विबाह्वब्धिवर्णैः प्रोक्त षडङ्गकम् ।।३७६।।

अथ ध्यानम्—

सात्त्विकं श्वेतवर्णं च भश्मोद्धूलितविग्रहम् ।
अग्निहोत्रस्थलासीनं नानामुनिगणावृतम् ।।३७७।।
कम्बलासनमारूढं स्वर्णतारकुशाङ्गुलिम् ।
श्वेतवस्त्रद्वयोपेतं जुह्वन्तं शान्तमानसम् ।।३७८।।
ध्यायेच्च राजसं रामं कुङ्कुमारुणविग्रहम् ।
किरीटिनं कुण्डलिनं परश्वब्जवराभयान् ।।३७९।।
करैर्दधन्तं तरुणं विप्रक्षत्रौघसंवृतम् ।
पीताम्बरधरं कामरूपं बालनिरीक्षितम् ।।३८०।।
ध्यायेच्च तामसं क्षत्ररुधिराक्तपरश्वधम् ।
आरक्तनेत्रं कर्णस्थब्रह्मसूत्रं यमप्रभम् ।।३८१।।

धनुष्टङ्कारसंघोषसंत्रस्तभुवनत्रयम् ।
चतुर्बाहुं मुशलिनं संक्रुद्धंभ्रातृसंयुतम् ।।३८२।।

अथ पुरश्चरणम्—

वर्णलक्षं जपेन्मन्त्रं सिताज्यघृतपायसैः ।
हुनेद्व्राह्मणभोज्यान्तं कृत्वा सिद्धो भवेन्मनुः ।।३८३।।
ब्रह्मकर्मरतो नित्यं गायत्रीजपतत्परः ।
स एवं जायते सिद्धो नान्यो विप्रः कदाचन ।।३८४।।

तथा—

फिरङ्गा यवनाश्चीनाः खुरासानाश्चलेन्धुजाः ।
रामभक्तं प्रदृष्ट्वैते त्रसन्ति प्रणमन्ति च ।।३८५।।

अथ श्रीरघुनाथमन्त्रा वशिष्ठसंहितायाम्—

कृष्णं द्वैपायनं व्यासं गुरुं सत्यवतीसुतम् ।
समाधिस्थं मुनिं शान्तं प्रसन्नादित्यतेजसम् ।।३८६।।
गङ्गातीरे महापुण्ये समासीनं तपोनिधिम् ।
शौनकः परिपप्रच्छ साष्टाङ्गं प्रणिपत्य च ।।३८७।।

**श्रीशौनक उवाच**

अयि प्रसादसुमुख कुरुष्व मयि मानसम् ।
त्वत्प्रासादान्महामन्त्रा विहिता वहवो मया ।।३८८।।
करुणारसपूर्णाभ्यां नेत्राभ्यां मां विलोकय ।
सच्चिदानन्दमात्मानं ज्ञातवान् ब्रह्मशास्वतम् ।।३८९।।
इदानीं श्रोतुमिच्छामि मन्त्रं साङ्गं सहार्चनम् ।
रामात्मनाऽवतीर्णस्य विष्णोरमिततेजसः ।।३९०।।
ब्रूहि मे भगवन् सर्वं श्रोतुं योग्योऽस्म्यहं यदि ।
असौ भाग्येन लोकोऽयं दारिद्र्येण च पीडितः ।।३९१।।
येन सौभाग्यमतुलं महदैश्वर्यसम्भवम् ।
शास्त्रज्ञानं कवित्वं च सर्वज्ञत्वं लभेन्नरः ।।३९२।।

**श्रीव्यास उवाच**

साधु पृष्टं त्वया ब्रह्मन् कथये सकलं तव ।
ब्रह्मणा कथितं पूर्वं वशिष्ठाय महात्मने ।।३९३।।

वशिष्ठोऽपि स्वपुत्राय मत्पित्रे दत्तवान्मनुम् ।
प्रसन्नहृदयः शुद्धः पिता मे करुणानिधिः ।।३९४।।
कुरुक्षेत्रे महापुण्ये सूर्यपर्वणि दत्तवान् ।
मया च साधितो मन्त्रो जपहोमार्चनादिभिः ।।३९५।।
इतः पूर्वं मया नोक्तो मन्त्रराजस्तु कस्य चित् ।
एवं परम्पराप्रोक्तं भक्त्या मन्त्रं शृणुष्व मे ।।३९६।।
अयोग्याय न दातव्यो मन्त्रराजस्त्वया मुने ।
यत्नेन गोपय त्वं च रहस्यं श्रीप्रसिद्धिदम् ।।३९७।।

शिष्यलक्षणमुक्त्वा—

ईदृग्विधाय शिष्याय मन्त्रं दद्यात् तु नान्यथा ।
यदन्यथावदेत् तस्मिन् देवता शापदा भवेत् ।।३९८।।

मन्त्रोद्धारमाह—

मान्तान्तं बिन्दुसंयुक्तं नारायणविभूषितम् ।
बीजमेतत् समुद्धृत्य बिन्दुहीनं पुनश्च तत् ।।३९९।।
भान्तं चाकारसंयुक्तं मान्तान्तां नतिमुद्धरेत् ।
एतत् षडक्षरं मन्त्रं सर्वैश्वर्यप्रदायकम् ।।४००।।
सर्वसौभाग्यजननं सर्वलोकवशङ्करम् ।
विद्यासिद्धिकरं नृणां महदाज्ञाकरं मुने ।।४०१।।
ऋषिर्ब्रह्माऽस्य मन्त्रस्य गायत्रं छन्द उच्यते ।
रामाख्यं वैष्णवं धाम देवता परिकीर्त्तिता ।।
जानीयात् प्रथमं वर्णं बीजं शक्तिं नतिं तथा ।।४०२।।

मन्त्रार्थमाह रामार्चनचन्द्रिकायाम्—

श्रीराममन्त्रराजस्य सम्यगर्थोऽभिधीयते ।
रकारो वह्निवचनः प्रकाशे पर्यवस्यति ।।४०३।।
सच्चिदानन्दरूपोऽस्य परमात्मार्थ उच्यते ।
व्यञ्जनं निष्कलं ब्रह्म प्राणो मायेति च स्वरः ।।४०४।।
व्यञ्जनैः स्वरसंयोगो विद्धि तत्प्राणयोजनम् ।
रेफे ज्योतिर्मये तस्मात् कृतमाकारयोजनम् ।।४०५।।
मकारोऽभ्युदयार्थत्वान्मायात्मेति च कथ्यते ।
तस्मादनेन बीजेन समायं ब्रह्म उच्यते ।।४०६।।

रामोपनिषदि—

स्वप्रकाशः स्वयं ज्योतिः स्वानुभूत्येकचिन्मयः ।
तदेव मन्त्रराजस्य मनुराड्द्व्यक्षरः स्मृतः ।।४०७।।
अखण्डैकरसानन्दस्तारको ब्रह्मवाचकः ।
रामायेति सुविज्ञेयः सत्यानन्दचिदात्मकः ।।४०८।।
नमःपदं सुविज्ञेयं पूर्णानन्दैकविग्रहम् ।
सदा नमन्ति हृदये सर्वे देवा मुमुक्षवः ।।४०९।।

आद्यबीजभेदात् षड्विधोऽयं मन्त्रस्तदुक्तं मेरुतन्त्रे

अथातः संप्रवक्ष्यामि भुक्तिमुक्तिप्रदायकान् ।
राममन्त्रान् स भगवान् प्रतिमन्वन्तरे ह्यभूत् ।।४१०।।
युगानां परिवर्त्तेन कल्पे शक्रावतारकः ।
तत्राद्यस्य प्रवक्ष्यामि मन्त्रराजं षडक्षरम् ।।४११।।
रामाय नम इत्येष राँ क्लीँ ह्रीँ ऐँ तु पूर्वकः ।
श्रीताराद्यश्च षड्वर्णः षड्विधः परिकीर्त्तितः ।।४१२।।
ब्रह्मा संमोहनः शक्तिर्दक्षिणामूर्त्तिरेव च ।
अगस्त्यः श्रीशिवः प्रोक्तो मुनयोऽनुक्रमादिमे ।।४१३।।
छन्दो गायत्रसंज्ञं च श्रीरामो देवता मतः ।

षडक्षरस्यैव भूयांसः प्रभेदास्तत्रैवोक्ताः—

पञ्चाशन्मातृकामन्त्रवर्णः प्रत्येकपूर्वकः ।।४१४।।
लक्ष्म्यादिर्वाग्भवादिश्च मन्मथादिर्भुवादिकः ।
रामचन्द्रस्तथा भेदाः शतद्वयमिता अमी ।।४१५।।
रामभद्रेति शब्देन चैवं भेदाः शतद्वयम् ।
रमाबीजादिकानां तु विश्वामित्रो मुनिर्मतः ।।४१६।।
वाग्बीजपूर्वकाणां तु दक्षिणामूर्त्तिरुच्यते ।
कामबीजादिपूर्वेषां मुनिः संमोहनो मतः ।।४१७।।
तारादि पूर्वकाणां तु श्रीशिवः प्रोच्यते मुनिः ।
श्रीमायामन्मथैकैकबीजाद्यन्तगतो यदा ।।४१८।।
रामभद्रो रामचन्द्रः षोढा षड्वर्ण उच्यते ।
षोढा नमोऽन्तः प्राक् प्रोक्तः फट्करान्तः स एव हि ।।४१९।।

षोढा स्याद्वह्निजायान्तः स एवं षड्विधो मतः ।
चतुःशतं चतुर्विंशभेदास्तेन निरूपिताः ।।४२०।।

तथा—

तारादिर्मुक्तये ह्येष रमादिर्भुक्तये भवेत् ।
वाक्सिद्धये च वागादिः सर्ववश्याय मन्मथः ।।
ताराद्यैः पुटितान् मन्त्रान् सर्वार्थं विनियोजयेत् ।।४२१।।

तथा—

ब्रह्मरन्ध्रे भ्रुवोर्मध्ये हृन्नाभ्यन्धुषु पादयोः ।
बीजैः षड्दीर्घसंयुक्तैः षडङ्गविधिरीरितः ।।४२२।।

वशिष्ठसंहितायाम्—

आधारे भावयेच्छक्तिं चिदानन्दस्वरूपिणीम् ।
उद्यदादित्यसंकाशमाधारं तत्प्रभामयम् ।।४२३।।
आधारभावनामेव संभाव्य मुनिसत्तम ।
ततः समुत्थितं तेजः शिखारूपं च चिन्तयेत् ।।४२४।।
विद्युत्कोटिप्रतीकाशं चन्द्रकोटिसुशीतलम् ।
सुषम्नामुखमुन्मील्य प्रापयेदुपदेशतः ।।४२५।।
ब्रह्माध्वनाऽऽनयेदूर्ध्वं द्वादशान्तेन्दुमण्डलम् ।
प्राप्य्य विधिना बुद्ध्या स्रावयेत् तत् सुधामृतम् ।।४२६।।
ततः परिगलच्छुद्धसुधाधाराभिरावृतम् ।
निजदेहं जगत् सर्वमेकीभूतं विचिन्तयेत् ।।४२७।।
निष्प्रपञ्चं निराकारं निरवद्यं निरञ्जनम् ।
अशून्यशून्योपरमं सदसद्भाववर्जितम् ।।४२८।।
अखण्डानन्दमात्मानं भावयेन्मुनिसत्तम ।
देवतागुरुमन्त्राणां भावयेदैक्यमात्मनः ।।४२९।।
एवं संचिन्तयेन्मन्त्री मन्त्रं प्रतिदिनं जपेत् ।
ऐहिकानखिलान् भोगान् भुक्त्वा चान्ते पदं व्रजेत् ।।४३०।।
उपसंहृत्य तत् तेजो यद्वा हृदयपङ्कजे ।
रामं ज्योतिर्मयं ध्यायेत् सर्वलोकैकसाक्षिणम् ।।४३१।।
जगदुद्भूतिसम्भूतिपरिभूतिकरं हरिम् ।
देवासुरमनुष्यैश्च योगिवृन्दैश्च सेवितम् ।।४३२।।

अथ ध्यानम् —

चतुर्भुजं शङ्खचक्रगदापङ्कजधारिणम् ।
किरीटहारकेयूररत्नकुण्डलमण्डितम् ।।४३३।।
एवं ध्यात्वा जपेन्मन्त्रं षट्सहस्रं दिने दिने ।
वाचः श्रियः पतिर्भूत्वा कविर्भवति वत्सरात् ।।४३४।।

ध्यानान्तरमाह—

ध्यायेत् कल्पतरोर्मूले सौवर्णमण्डपं मुने ।
तन्मध्ये पुष्पकाख्यं च विमानं दिव्यमुत्तमम् ।।४३५।।
मध्ये सिंहासनं तस्य नानारत्नविभूषितम् ।
तन्मध्येऽष्टदलंपद्ममुद्यदादित्यसन्निम् ।।४३६।।
श्रीराममेनं तन्मध्ये समासीनं महामुने ।
सम्यग्ज्ञानमयीं मुद्रां दधानं दक्षिणे करे ।।४३७।।
तेजःप्रकाशनं वामं जानुमूर्धनि चापरम् ।
जानकीवल्लभं देवमिन्द्रनीलसमप्रभम् ।।४३८।।
उद्यानिरतं देवं द्विभुजं रघुनन्दनम् ।
वशिष्ठवामदेवादिमुनिभिः परिवारितम् ।।४३९।।
वामभागे समासीनां सीतां काञ्चनसन्निभाम् ।
भजतां कामदां नित्यं रक्तोत्पलकराम्बुजाम् ।।४४०।।
लक्ष्मणं पश्चिमे भागे धृतच्छत्रसुचामरम् ।
पार्श्वे भरतशत्रुघ्नौ तालवृन्तकरावुभौ ।।
एवं ध्यात्वा जपेन्मन्त्रं ज्ञानलक्ष्म्योश्च भाजनम् ।।४४१।।

शारदायामपि—

कालाम्भोधरकान्तिकान्तमनिशं वीरासनाध्यासिनं
मुद्रां ज्ञानमयीं दधानमपरं हस्ताम्बुजं जानुनि ।
सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं
पश्यन्तं मुकुटाङ्गदादिविविधाकल्पोज्ज्वलाङ्गं भजे ।।४४२।।

मेरुतन्त्रे—

वीरासनसमारूढं व्याख्यामुद्रोपशोभितम् ।
वामोरुन्यस्ततद्धस्तं सीतालक्ष्मणसंयुतम् ।।४४३।।

तन्त्रान्तरे पूर्वोक्तध्यानमुक्त्वा—

एवं तद्ध्यानमात्रेण सर्वपापैः प्रमुच्यते ।
राममिन्दीवरश्यामं पद्मपत्रायतेक्षणम् ।।४४४।।
ध्यात्वा तु हृदयाम्भोजे ये जपन्ति षडक्षरम् ।
करामलकवज्ज्ञेया मुक्तिस्तेषां महात्मनाम् ।।४४५।।

वशिष्ठसंहितायाम्—

शास्त्रज्ञानं कवित्वं च षण्मासाज्जायते मुने ।
जपतां मन्त्रिणामेवं जपयोगेन धीमताम् ।।
पुरश्चरणकृत्येन विनाऽपि फलदो मनुः ।।४४६।।

अस्य पुरश्चरणमुक्तं मेरुतन्त्रे—

वर्णलक्षं जपेन्मन्त्रं दशांशं मधुरप्लुतैः ।
विल्वपत्रैः फलैः पुष्पैस्तिलैर्वा पङ्कजैर्हुनेत् ।।४४७।।

अथ मालामन्त्रस्तत्रैव—

अथातः संप्रवक्ष्यामि लक्ष्मणोपासितं मनुम् ।
तारो नमो भगवते ङेऽन्तः स्याद्रघुनन्दनः ।।४४८।।
रक्षोघ्नविशदायेति मधुरेति पदं ततः ।
प्रसन्नवदनायेति ततश्चामिततेजसे ।।४४९।।
बलायेति च रामाय विष्णवे नम इत्ययम् ।
सप्तचत्वारिंशदर्णो मालामन्त्र उदाहृतः ।।४५०।।
मुनिः पितामहश्छन्दः स्यादनुष्टुप् च देवता ।
राज्याभिषिक्तो रामश्चों बीजं शक्तिर्नमोऽस्त्विति ।।
सप्तर्त्तुसप्तदशषड्रससङ्ख्यैः षडङ्गकम् ।।४५१।।

तथा—

ध्यानं दशाक्षरं प्रोक्तं लक्षमेकं जपेन्मनुम् ।।४५२।।
विल्वैः प्रसूनैः पत्रैर्वा तिलैस्त्रिमधुना युतैः ।
मधुरत्रययुक्तेन पायसेनाथ वाऽम्बुजैः ।।४५३।।
होमं दशांशतः कुर्यात् तथा सर्वत्र तर्पणम् ।
मार्जनं भोजयेद् विप्रान् प्रयोगादि च पूर्ववत् ।।४५४।।

दशाक्षरमन्त्रो वक्ष्यते । मन्वन्तरभेदेन श्रीराममन्त्रभेद उक्तस्तत्रैव—

अथातः संप्रवक्ष्यामि स्वारोचिषसमुद्भवम् ।
रामस्यैकाक्षरं मन्त्रं कीर्त्यते स तु रामिति ।।४५५।।
ब्रह्मा मुनिः स्याद्गायत्रं छन्दो रामोऽस्य देवता ।
मूर्त्तिपञ्जरनामानं तत्त्वन्यासं च कारयेत् ।।४५६।।
षड्दीर्घार्धेन्दुयुक्तेन बीजेनैव षडङ्गकम् ।
अथातः संप्रवक्ष्यामि तृतीयान्तर्मनोर्विधिम् ।।४५७।।
राम एत्येष कथितो द्व्यक्षरो भुक्तिमुक्तिदः ।
एकाक्षरोक्तमृष्यादि स्यादाद्येन षडङ्गकम् ।
ध्यानपूजाप्रयोगादि सर्वं ज्ञेयं षडर्णवत् ।।४५८।।

एवं पुरश्चरणमपि ज्ञेयम् ।

अथातः संप्रवक्ष्यामि चतुर्थान्तर्मनोर्विधिम् ।
तारमायारमानङ्गवाक्स्वबीजैश्च षड्विधः ।।४५९।।
द्व्यक्षरो मन्त्रराजस्तु त्र्यक्षरः परिजायते ।
न्यासपूजाप्रयोगादि सर्वं पूर्ववदाचरेत् ।।४६०।।
अथातः संप्रवक्ष्यामि पञ्चमान्तर्मनोर्विधिम् ।
द्व्यक्षरश्चन्द्रभद्रान्तो द्विविधश्चतुरक्षरः ।।४६१।।
ऋषिन्यासार्चनाद्यं तु सर्वं पूर्ववदाचरेत् ।
विशेषतश्चतुर्वर्गफलदोऽयं मतो मनुः ।।४६२।।
अथातः संप्रवक्ष्यामि षष्ठमन्वन्तरोद्भवम् ।
रामाय नम इत्येष मनुः पञ्चाक्षरो मतः ।।४६३।।
विश्वामित्रो मुनिः प्रोक्तः पङ्क्तिश्छन्दोऽस्य देवता ।
रामभद्रो बीजशक्ती प्रथमार्णनती क्रमात् ।।४६४।।
भ्रूमध्ये हृदि नाभ्यधो पादयोर्विन्यसेन्मनुम् ।
षडङ्गं पूर्ववद्यद्वा मन्त्रार्णैर्मनुनाऽस्त्रकम् ।।४६५।।

ध्यानमाह—

मध्ये वनं कल्पतरोर्मूले पुष्पलतासने ।
लक्ष्मणेन प्रगुणितमक्ष्णः कोणेन सायकम् ।।४६६।।

अवेक्षमाणं जानक्या कृतव्यजनमीश्वरम् ।
जटाभारलसच्छीर्षं श्यामं मुनिगणावृतम् ।।४६७।।
लक्ष्मणेन धृतच्छत्रमथ वा पुष्पकोपरि ।
दशास्यमथनं शान्तं ससुग्रीवविभीषणम् ।।४६८।।
विजयार्थी विशेषेण वर्णलक्षं जपेन्मनुम् ।
प्रागवद्धोमस्तर्पणादि प्रयोगाद्यं च साधयेत् ।।४६९।।
अथातः संप्रवक्ष्यामि मन्त्रं सावर्णिकोद्भवम् ।
तारादिषड्भिः संयुक्तो द्वेधा सप्ताक्षरो मनुः ।।४७०।।
अष्टाक्षरो द्वादशधा कीर्त्तितों राज्यदायकः ।
सर्वं षडर्णवज्ज्ञेयं ध्यानपूजाजपादिकम् ।।४७१।।
अथातः संप्रवक्ष्यामि मन्त्रान् नवमसम्भवान् ।
तारो रामश्चतुर्थ्यन्तः क्रोधोऽस्त्रं वह्निवल्लभा ।।४७२।।
अष्टार्णोऽयं परो मन्त्रो मुन्यादिः स्यात् षडर्णवत् ।
नाशकः सर्वदोषाणां सङ्ग्रामविजयप्रदः ।।४७३।।
अथातः संप्रवक्ष्यामि मन्त्रान् दशमसम्भवान् ।
ॐ ह्रीँ नमश्च रामाय ह्रीमित्यष्टाक्षरः परः ।।४७४।।
ऋषिः सदाशिवः प्रोक्तो गायत्रं छन्द उच्यते ।
शिवोमारामचद्रोऽस्य देवता परिकीर्त्तितः ।।४७५।।
दीर्घया माययाऽङ्गानि तारपञ्चार्णयुक्तया ।
ॐनमो रामाय ह्रीँ हृदयाय नमः।।४७६।।—इत्यादि ।

ध्यानपुरश्चरणे प्राह—

रामं त्रिनेत्रं सोमार्धधारिणं शूलिनं वरम् ।
भस्मोद्धूलितसर्वाङ्गं कपर्दिनमुपास्महे ।।४७७।।
रामाभिरामां सौन्दर्यसीमां सोमावतंसिनीम् ।
पाशाङ्कुशधनुर्बाणधरां ध्यायेत् त्रिलोचनाम् ।।४७८।।
रामशक्तिं तु सीताख्यां वर्णलक्षं जपेन्मनुम् ।
होमपूजादिकं सर्वं षडक्षरवदीरितम् ।।४७९।।
विशेषतो भोगदाता सङ्ग्रामविजयप्रदः ।
अथैकादशसम्भूतान् राममन्त्रान् वदाम्यहम् ।।४८०।।

सप्तार्णैर्यौ मनू प्रोक्तौ षड्भिस्तारादिकैः पृथक् ।
संपुटौ ते द्वादशधा नवार्णा मनवः सुराः ।।४८१।।
ध्यानपूजादिकं सर्वं तेषां सप्तार्णवद्भवेत् ।
अथातः संप्रवक्ष्यामि द्वादशान्तरसम्भवम् ।।४८२।।
जानकीवल्लभो ङेऽन्तः स्वाहान्त हुमादिकः ।
दशाक्षरोऽयं मन्त्रः स्याद्वशिष्ठोऽस्य मुनिश्च राट् ।।४८३।।
छन्दश्च देवता रामः सीतापाणिपरिग्रहः ।
आद्यं बीजं द्विठः शक्तिरङ्गं षड्दीर्घको मतः ।।४८४।।
शिरोललाटभ्रूमध्यतालुकण्ठेषु हृद्यपि ।
नाभ्यन्घ्रुजानुपादेषु दशार्णान् विन्यसेन्मनोः ।।४८५।।

ध्यानमाह—

अयोध्यानगरे रत्नचिते सौवर्णमण्डपे ।
मन्दारपुष्पैराबद्धविताने तोरणान्विते ।।४८६।।
सिंहासनसमारूढं पुष्पकोपरि राघवम् ।
रक्षोभिर्हरिभिर्देवैर्दिव्ययानगतैः शुभैः ।।४८७।।
संस्तूयमानं मुनिभिः प्रह्वष्टैरुपसोभितम् ।
सीतालङ्कृतवामाङ्गं लक्ष्मणेनोपशोभितम् ।।४८८।।
श्यामं प्रसन्नवदनं सर्वाभरणभूषितम् ।
ध्यायन्नेवं जपेन्मन्त्रं वर्णलक्षमनन्यधीः ।।४८९।।
जपपूजाप्रयोगादि सर्वमस्य षडर्णवत् ।
अथ त्रयोदशे जातं राममन्त्रं वदाम्यहम् ।।४९०।।
रामो ङेऽन्तो धनुष्पाणिस्तथा स्याद्वह्निसुन्दरी ।
दशाक्षरो मुनिर्ब्रह्मा विराट् छन्दोऽस्य देवता ।।४९१।।
राक्षसान्तकरो रामो राँ बीजं परिकीर्त्तितम् ।
स्वाहा शक्तिश्च बीजेन षडङ्गानि समाचरेत् ।।४९२।।
वर्णन्यासं तथा ध्यानं पौरश्चरणिकं विधिम् ।
दशाक्षरोक्तवत् कुर्याच्चापवाणधरं स्मरेत् ।।
विशेषाज्जयदश्चायं भ्रष्टराज्यप्रदायकः ।।४९३।।

एवं हनुमदाद्युपासिता मन्त्रा मेरौ द्रष्टव्याः ।

अथ रामगायत्री तत्रैव—

**अथातः संप्रवक्ष्यामि शत्रुघ्नोपासितां पराम् ।**
**जयदां रामगायत्रीमुपास्यां सूर्यवंशजैः ।।४९४।।**
**दाशरथये विद्महे सीतावल्लभाय धीमहितन्नोरामः प्रचोदयात् ।**
**एषा स्याद्रामगायत्री भक्तानां भुक्तिमुक्तिदा ।**
**जन्मप्रभृति यत् पापं दशभिर्यातिमक्षयम् ।।४९५।।**
**पुरा कृतं शतेनैव सहस्रेण जपेन वा ।**
**पुरश्चरणमस्याश्च चतुर्लक्षजपो विधिः ।।४९६।।**
**यच्च यावच्च पूजादि सर्वं पूर्ववदाचरेत् ।**
**तारादिरेषा गायत्री मुक्तिमेव प्रयच्छति ।।४९७।।**
**मायादिरपि वैश्वर्यं रमादिश्च श्रियं पराम् ।**
**मदनेनापि संयुक्तो संमोहयति मेदिनीम् ।।४९८।।**

अथ सीतामन्त्रो वशिष्ठसंहितायाम्—

**श्रीबीजं पूर्वमुच्चार्य सीतायै पदमुद्धरेत् ।**
**वह्निजायान्वितो मन्त्रो भजतां कल्पमूरुहः ।।४९९।।**
**जनकोऽस्य ऋषिः प्रोक्तो गायत्री छन्द उच्यते ।**
**सीताख्या या जगद्धात्री देवता सा जगन्मयी ।।५००।।**

मेरुतन्त्रे—

**सीता भगवती प्रोक्ता श्रीबीजं शक्तिरन्त्यकौ ।**
**दीर्घस्वरयुजाऽऽद्येन षडङ्गानि प्रकल्पयेत् ।।५०१।।**
**पूजयेद्वैष्णवे पीठे ध्यायेद्राघवसंयुताम् ।**
**स्वर्णाभामम्बुजकरां रामालोकनतत्पराम् ।।५०२।।**

पुरश्चरणमाह—

**वर्णलक्षं जपेन्मन्त्रमिष्टार्थं साधयेत् ततः ।।५०३।।**

अथ बलराममन्त्रस्तन्त्रान्तरे—

**तारान्ते बलभद्राय हृदयं वसुवर्णवान् ।**
**मुनिस्तु जैमिनिश्छन्दो गायत्रं देवताऽस्य च ।।**
**बलरामो मन्त्रवर्णैर्द्विरावृत्त्या षडङ्गकम् ।।५०४।।**

अथ ध्यानम्—

शुभ्राभ्रगौरं नीलाभं वसनं रेवतीप्रियम् ।
दधानं सीरमुशले वलरामं समाश्रये ।।५०५।।

अथ पुरश्चरणम्—

वर्णलक्षं जपेन्मन्त्रं जुहुयात् तद्दशांशतः ।।५०६।।—इति ।

अथ श्रीकृष्णमन्त्राः मेरुतन्त्रे—

अथातः संप्रवक्ष्यामि कृष्णमन्त्रान् महाद्भुतान् ।
कृष्णः स एव भगवान् कलिद्वापरसन्धिगः ।।५०७।।
वर्धयेत् कलिधर्माणां भक्तानां तारणाय सः ।
एकसप्ततिरूपोऽसौ प्रतिमन्वन्तरे भवेत् ।।५०८।।
तदुक्ताचरणान्मोक्षस्तत्कृताचरणाच्च्युतिः ।
इति तत्त्वं समाख्यातं विभवस्य भवस्य च ।।५०९।।
जातश्चाद्ये कलियुगे नानागोपीरते रतः ।
तत्कर्म कुर्वतां पातस्तत्सामर्थ्यं विभाविना ।।५१०।।
स्वधर्मनिरतानां तु कलौ जन्म प्रजायते ।
तस्य मन्त्रं प्रवक्ष्यामि भुक्तिमुक्तिप्रसाधनम् ।।
गोपीजनवल्लभाय स्वाहामन्त्रो दशाक्षरः ।।५११।।

गौतमीये—

गोपीजनपदस्यान्ते वल्लभाय द्विठावधिः ।
अयं दशाक्षरो मन्त्रो दृष्टादृष्टफलप्रदः ।।४१२।।
बीजपूर्वो जपश्चास्य रहस्यं कथितं मुने ।
लुप्तबीजस्वभावत्वाद्दशाक्षरमिहोच्यते ।।४१३।।

बृहद्गौतमीये—

भोगमोक्षैकनिलयो लुप्तबीजो दशाक्षरः ।
उद्धारे तु पृथक् तेन कामबीजं महामुने ।।
यद्योगात फलदो मन्त्रो नान्यथा कल्पकोटिभिः ।।४१४।।

मेरुतन्त्रे—

नारदोऽस्य मुनिः प्रोक्तो विराट् छन्द उदाहृतम् ।।५१५।।

देवता नन्दपुत्रः क्लीँ बीजं शक्ति शिखिप्रिया ।
आविशुः पूर्वपदकैस्त्रैलोक्यरक्षणादिकैः ।।५१६।।
असुरान्तादिकैश्चक्रशब्दैः स्वाहान्तकैश्चरेत् ।
जातियुक्तैश्च पञ्चाङ्गं तथा पञ्चाङ्गुलीष्वपि ।।५१७।।
हृदये शीर्षके चैव शिखायां कवचे तथा ।
अस्त्रे पार्श्वद्वये कट्यां पृष्ठे मूर्धनि च क्रमात् ।।५१८।।

न्यासान्तराण्युक्त्वा ध्यानमाह—

एवं कृत्वा विधानेन मन्त्री मन्त्रकलेवरम् ।
त्रय्यन्तबोधितं नित्यं कृष्णं ध्यायेज्जगत्पतिम् ।।५१९।।
पूर्वं वृन्दावनं रम्यं स्मरेत् पूर्वं विराजितम् ।
नवीनपल्लवोद्रेकफलसम्पत्तिसंयुतम् ।।५२०।।
मधुपैः कृतझङ्कारैः कीराद्यैश्च निनादितम् ।
आदित्यतनयापार्श्वलहरीकणशीतलम् ।।५२१।।
तस्मिन वने कल्पतरुं नवपल्लवशोभितम् ।
स्वर्णशाखाग्रसंयुक्तं नवरत्नफलान्वितम् ।।५२२।।
दिव्यामृतौघवर्षेण स्रवन्तं विश्वमुच्छ्रितम् ।
ज्वलद्रत्नसमावद्धां पुष्परेणुविभूषिताम् ।।५२३।।
षडूर्मिरहितां मन्त्री तस्याधस्ताद्ध्रुवं स्मरेत् ।
माणिक्यकुट्टिमं तत्र योगपीठं विचिन्तयेत् ।।५२४।।
पद्ममष्टदलं तत्र यथोक्तं रक्तवर्णकम् ।
तस्य मध्ये सुखासीनं कृष्णं ध्यायेदनन्यधीः ।।५२५।।
उद्यदादित्यसंकाशं प्रसन्नवदनं विभुम् ।
इन्द्रनीलमणिप्रख्यं स्निग्धदीर्घशिरोरुहम् ।।५२६।।
मायूरेण सुपिच्छेन राजमानोत्तमाङ्गकम् ।
भ्रमराक्रान्तकल्पद्रुपुष्पसंशोभिमस्तकम् ।।५२७।।
कुटिलालकविभ्राजद्भालं कर्णकृतोत्पलम् ।
गोरोचनाक्ततिलकं पूर्णचन्द्रनिभं स्मरेत् ।।५२८।।
पद्मनेत्रं दीप्तमणिमकराकृतिकुण्डलम् ।
कपोलस्थललावण्यविजितस्वच्छदर्पणम् ।।५२९।।

अत्यद्भुतोन्नासिकं च पक्वविम्बकलाधरम् ।
दाडिमीबीजरदनं कम्बुसुन्दरकन्धरम् ।।५३०।।
आरण्यपल्लवैः पुष्पैः कृतग्रैवेयसंपदम् ।
कौस्तुभप्रभया दीप्तविशालोन्नतवक्षसम् ।।५३१।।
श्रीवत्सकाङ्कितोरस्कं वृषस्कन्धं च हारिणम् ।
आजानुलम्बिदोर्दण्डं वलित्रययुतोदरम् ।।५३२।।
क्षुद्रघण्टिकया बद्धकटिं ग्रैवेयराजितम् ।
चक्रशङ्खलसत्पद्मपीतांशुकपटादिभिः ।।५३३।।
कुलिशप्रमुखैश्चिह्नैरङ्कितस्वच्छपत्तलम् ।
मुखाम्बुजसमासक्तवंशच्छिद्रार्पिताङ्गुलिम् ।।५३४।।
तदुत्थदिव्यसद्रागश्रवणाहृतमानसम् ।
अपाङ्गैः प्राणिजातं तु मोहयन्तमनारतम् ।।५३५।।
परमानन्दसन्दोहसंपूर्णीकृतमानसम् ।
मुखपद्मसमासक्तस्वान्तनेत्राभिरावृतम् ।।५३६।।
गोभिरूघ्नभराक्रान्तमन्दयानाभिरेव च ।
कवलीकृतसंत्यक्तघासलेशाभिरप्यलम् ।।५३७।।
प्रस्तुतस्तनपानेन संभृताननिर्गतैः ।
डिण्डीरपिण्डसंयुक्तैर्दुग्धैर्दृष्टिमनोहरैः ।।५३८।।
वंशवादनसोद्गीतगीताकर्णनलालसैः ।
उत्तम्भिनीकृतश्रोत्रपुटयुग्मैश्च तर्णकैः ।।५३९।।
किंविषाणान्तरोद्भूतिजातकण्डूतिमस्तकैः ।
परस्परविमर्दार्थं खुरस्पर्शमहीतलैः ।।५४०।।
स्निग्धैर्गुरुत्पुच्छैः सुशोभिगलकम्बलैः ।
वत्सवत्सासमूहैश्च संवृतं वदनन्तरम् ।।५४१।।
कृतहुंभाष[1]वज्जालैर्गुरुदीर्घककुद्वरैः ।
उच्चकर्णपुटापीतवेणुशब्दसुधारसैः ।।५४२।।
सवयस्कैश्च गायद्भिर्नृत्यद्भिस्तुल्यभूषणैः ।
नानावेषधरैर्गोपैः संस्तुवद्भिः समावृतम् ।।५४३।।

१. शब्दजालैरिति ४ पु. पा. ।

मधुराकृतिभिर्बालैरस्पष्टाद्भुतभाषणैः ।
शार्दूलनखसंक्लृप्तगलाकल्पैस्तथाऽऽवृतम् ।।५४४।।
ततो गोपपुरन्ध्रीणां स्मरेद्वृन्दं समाहितः ।
तद्भावभावकल्लोलसंजीवितमनोभवम् ।।५४५।।
वल्लवीवल्लवगवां देववृन्दं बहिः स्मरेत् ।
संमुखे देवदेवस्य काङ्क्षन्तं घनसंचयम् ।।५४६।।
ऋषिसङ्घं तथा दक्षे वेदाध्ययनतत्परम् ।
धर्मार्थिभिः स्मरेत् पश्चात् सनकप्रमुखाँस्तथा ।।५४७।।
वामे सस्त्रीकयोगीन्द्रान् यक्षगन्धर्वकिन्नरान् ।
सिद्धविद्याधराँश्चापि चारणानप्सरोगणान् ।।५४८।।
अनेकश्रुतिसंपूर्णवीणावादनतत्परम् ।
आकाशे नारदं ध्यायेन्मुनिवर्यं गतस्मयम् ।।५४९।।

अथ पुरश्चरणम्—

ततः पूर्वोक्तविधिना दीक्षितः प्रजपेन्मनुम् ।
मन्त्रार्थं चिन्तयेन्मन्त्री नियमस्थो जितेन्द्रियः ।।५५०।।
चत्वारिंशत् सहस्राणि श्वेतपद्माक्षमालया ।
पश्चान्मन्त्रस्य सिद्ध्यर्थं दशलक्षं जपेत् सुधीः ।।५५१।।
लक्षं हुनेद्रक्तपद्मैः सितासर्पिर्मधुप्लुतैः ।
शर्कराघृतयुक्तेन हविर्द्रव्येण वा हुनेत् ।।५५२।।
तर्पयेत् सलिलैः शुद्धैश्चन्द्रचन्दनवासितैः ।
आत्माभिषेकं कृत्वाऽथ भूदेवान् पूजयेत् ततः ।।५५३।।
नानाविधैर्भक्ष्यभोज्यैस्ताम्बूलैश्च सदक्षिणैः ।
ततो निजगुरुं सम्यक् प्रणिप्रत्य यथाविधि ।।५५४।।
धनधान्यम्बराद्यैश्च वित्तशाठ्यविवर्जितः ।
तोषयेत् परया भक्त्या निजकार्यस्य सिद्धये ।।५५५।।
ततः सिद्धमनुर्मन्त्री प्रयोगान् निजवाञ्छितान् ।
कुर्याद्भक्तियुतः सम्यङ्नित्यनैमित्तिके रतः ।।५५६।।
तत्काले देवकीजातं शङ्खचक्रगदाम्बुजान् ।
दधतं पीतवसनं सुन्दरं गगनप्रभम् ।।५५७।।

निशायामे चतुर्थ्यां तु ध्यात्वा लक्षं जपेन्मनुम् ।
त्रिमध्वक्तैस्तद्दशांशं किंशुकप्रसवैर्हुनेत् ।।
वीर्यं प्रज्ञां स्मृतिं प्राप्य कवीनामग्रणीर्भवेत् ।।५५८।।

अथ मन्त्रान्तरं शारदायाम् —

कृष्णाय पदमाभाष्य गोविन्दाय ततः परम् ।
गोपीजनपदस्यान्ते वल्लभाय द्विठावधिः ।।५५९।।
कामबीजादिराख्यातो मनुरष्टादशाक्षरः ।
नारदोऽस्य मुनिः प्रोक्तो गायत्रं छन्द उच्यते ।।५६०।।
देवता कथितः कृष्णः सर्वकामफलप्रदः ।
चतुष्करणवेदाब्धिनेत्रसङ्ख्याक्षरक्रमात् ।।
पञ्चाङ्गानि मनोः कुर्यान्मन्त्रविज्जातिसंयुतैः ।।५६१।।

ध्यानम्—

स्मरेद्वृन्दावने रम्ये मोहयन्तमनारतम् ।
गोविन्दं पुण्डरीकाक्षं गोपकन्याः सहस्रशः ।।५६२।।
आत्मनो वदनाम्भोजप्रेषिताक्षिमधुव्रताः ।
पीडिताः कामबाणेन चिरमालिङ्गिनोत्सुकाः ।।५६३।।
मुक्ताहारलसत्पीनतुङ्गस्तनभराननाः ।
स्रस्तधुम्मिल्लवसना मन्दस्खलितभाषणाः ।।५६४।।
दन्तपङ्क्तिप्रभोद्भासिस्यन्दमानाधराञ्चिताः ।
विलोभयन्तीर्विविधैर्विभ्रमैर्भावगर्वितैः ।।५६५।।
फुल्लेन्दीवरकान्तिमिन्दुवदनं वर्हावतंसप्रियं
श्रीवत्साङ्कमुदारकौस्तुभधरं पीताम्बरं सुन्दरम् ।
गोपीनां नयनोत्पलार्चिततनुं गोगोपसङ्घावृतं
गोविन्दं करवेणुवादनपरं दिव्याङ्गभूषं भजे ।।५६६।।

अथ पुरश्चरणम्—

मन्त्रमेनं यथान्यायमयुतद्वितयं जपेत् ।
जुहुयादरुणाम्भोजैर्दशांशं सुसमाहितः ।।५६७।।

अथ मन्त्रान्तराण्युक्तानि मेरुतन्त्रे—

अथातः संप्रवक्ष्यामि क्रमाज्जाता युगत्रये ।
ये मन्त्रा दशवर्णस्य भेदाः सिद्धिविधायकाः ।।५६८।।

कामामायेन्दिरापूर्वो मायाश्रीकामपूर्वकः ।
लक्ष्मीमायास्मराद्यश्च मन्त्रराजो दशाक्षरः ।।५६९।।
त्रयोदशाक्षरो मन्त्रस्त्रय एते युगत्रये ।
मुन्याद्यन्तविधिस्तेषां पङ्क्त्यामुक्तविधानतः ।।५७०।।

पङ्क्त्यामिति दशाक्षर इत्यर्थः ।

ध्यानं तृतीयमन्त्रे तु दशार्णवदुदाहृतम् ।
विशार्णोक्तं द्वितीये तु प्रथमेऽथ निगद्यते ।।५७१।।
दरारिचापसद्बाणमुद्गराब्जकराम्बुजम् ।
वेणुमादाय हस्ताभ्यां वादयन्तं मुदाऽन्वितम् ।।
रविमण्डलगं कृष्णं ध्यायेदिष्टफलाप्तये ।।५७२।।

अथ पुरश्चरणम्—

बाणलक्षं जपित्वाऽग्नौ दशांशं हविषा हुनेत् ।
तर्पणादि ततः कृत्वा सिद्धमन्त्रः समाचरेत् ।।५७३।।

अथ मन्त्रान्तरं तत्रैव—

अथातः संप्रवक्ष्यामि सप्तविंशतिके कलौ ।
तारो नमो भगवते वासुदेवाय वै वदेत् ।।५७४।।
द्वादशार्णो मनुः प्रोक्तो नारदोऽस्य मुनिर्मतः ।
गायत्री छन्द इत्युक्तं श्रीकृष्णो देवता मतः ।।
चन्द्रनेत्राब्धिबाणार्णैः संपूर्णेनाङ्गकल्पना ।।५७५।।

ध्यानमाह—

कल्पद्रुमतले रम्ये रत्नसिंहासने शुभे ।
सर्वलक्षणसंपूर्णं निविष्टं नन्दनन्दनम् ।।५७६।।
प्रस्तुतस्तनभारेण गोवृन्देन युतं स्मरेत् ।
मेघश्यामं करे दण्डौ हस्ताभ्यां बिभ्रतं तथा ।।५७७।।
पद्मायताक्षं शक्रस्य हस्तिकुम्भामृतस्य तु ।
धारया सिच्यमानं तु ध्यातव्यो विष्णुरव्ययः ।।५७८।।

पुरश्चरणमाह—

एवं संचिन्त्य देवेशं वर्णलक्षं जपेन्मनुम् ।
तत्सहस्राणि गोक्षीरैर्जुहुयात् तर्पयेत् ततः ।।५७९।।

अथ मन्त्रान्तरं तन्त्रान्तरे—

तारं हृद्भगवते रुक्मिणीवल्लभाय ठद्वयम् ।
नारदोऽस्य मुनिः प्रोक्तश्छन्दोऽनुष्टुप् प्रकीर्त्तितम् ।।
रुक्मिणीवल्लभो देवः पञ्चाङ्गं मान्त्रिकैः पदैः ।।५८०।।

ध्यानम्—

तापिच्छच्छविरङ्कगां प्रियतमां स्वर्णप्रभामम्बुज-
प्रोद्यद्वामभुजां स्वबाहुलतयाऽऽशिलष्यत्सचित्तास्मयाम्।
शिलष्यन्तीं स्वयमन्यहस्तविलसत्सौवर्णवेत्रश्श्रिरं
पायाद्वोऽशनसूनपीतवसनो नानाविभूषो हरिः ।।५८१।।

अथ पुरश्चरणम्—

ध्यात्वैवं रुक्मिणीनाथं जपेल्लक्षममुं मनुम् ।
अयुतं जुहुयात् पद्मैररुणैर्मधुराप्लुतैः ।।५८२।।

अथ मन्त्रान्तरं मेरौ—

अथातो नगवेदाख्ये क्लीँ कृष्णायाग्निगेहिनी ।
षडक्षरो मन्त्रराजो जपध्यानादि पूर्ववत् ।।५८३।।

दशार्णवदित्यर्थः । एवं भूयांसो मन्त्रभेदा विस्तरभयादुपेक्षिताः ।

अथ बुद्धमन्त्रस्तत्रैव—

अथातः संप्रवक्ष्यामि बौद्धमन्त्रं महाफलम् ।
सत्यत्वान्न द्विजादीनामधिकारो हि कर्हिचित् ।।५८४।।
वाममार्गरता विप्राः कुण्डका जातिविच्युताः ।
हीना वैदिकसंस्कारैः प्रमादात् स्वेच्छतां गताः ।।५८५।।
गोलकाश्च तथा जात्या कायस्थादय एव च ।
बौद्धं विष्णुं समाराध्य भुक्तिं मुक्तिं प्रयान्ति ते ।।५८६।।
नमो भगवते बुद्ध संसारार्णवतारक ।
कलिकालादहं भीतः शरण्यं शरणं गतः ।।५८७।।
आद्यैः पदैश्चतुर्भिश्च चरणद्वितयेन च ।
षडङ्गविधिराख्यातः पूर्णेन व्यापकं त्रिशः ।।५८८।।

अथ ध्यानम्—

पद्मे पद्मासनस्थं तमूर्वोर्न्यस्तकरद्वयम् ।
गौरं मुण्डितसर्वाङ्गं ध्यानस्तिमितलोचनम् ।।५८९।।

पुस्तकासनहस्तैश्च नानाशिष्यैश्च शोभितम् ।
इन्द्रादिलोकपालैश्च नुतं श्वेताम्बरावृतम् ।।५९०।।

अथ पुरश्चरणम्—

वर्णलक्षं जपेन्मन्त्रं होमयेच्च घृतोदनम् ।
तुलसीमिश्रितोयैश्च भगवन्तं प्रतर्पयेत् ।।५९१।।

अथ कल्किमन्त्रस्तत्रैव—

अथातः संप्रवक्ष्यामि कल्किमन्त्रं महाफलम् ।
कँ कल्किने हृदन्तोऽयं प्रोक्तो मन्त्रः षडक्षरः ।।
मन्त्रार्णैश्च षडङ्गानि पूर्णेन व्यापकं चरेत् ।।५९२।।

अथ ध्यानम्—

ध्यायेन्नीलसमारूढं श्वेतोष्णीषविराजितम् ।
महाप्रतोदहस्तं च कौस्तुभोद्दामकञ्चुकम् ।।५९३।।
मर्दयन्तं म्लेच्छगणं क्रोधघूर्णितलोचनम् ।
अन्तर्हितैर्देवमुनिगन्धर्वैः संस्तुतं हरिम् ।।५९४।।

अथ पुरश्चरणम्—

षड्लक्षं तु जपेन्मन्त्रं ससितैः पायसैर्हुनेत् ।
तर्पयेत् सलिलैः शुद्धैः प्रीणयेद् भूसुरानपि ।।५९५।।
एवमाराधितो मन्त्रः संग्रामे विजयप्रदः ।
एतत्साधनमालोक्य दूरतो दुःक्षितीश्वराः ।।५९६।।
प्रणमन्ति तथा स्वेच्छाच्छत्रवो यान्ति संशयम् ।
दिने दिने वर्द्धते श्रीर्मृतो वैकुण्ठमाप्नुयात् ।।५९७।।

अथ हयग्रीवमन्त्रो मेरुतन्त्रे—

अथोच्यते हयग्रीवमन्त्रः सर्वसमृद्धिदः ।
हसावुकारसंयक्तौ बिन्दुना परिशोभितौ ।।५९८।।
विप्रसेव्यो बीजमन्त्रो हयग्रीवस्य चादिमः ।
हसावौकारसंयुक्तौ सबिन्दू क्षत्रियस्य तु ।।५९९।।
हसावेकारसंयुक्तौ सबिन्दुर्वैश्यजन्मनः ।
त्रिष्टुप् छन्दो मुनिर्ब्रह्मा हयग्रीवोऽस्य देवता ।।६००।।

षड्दीर्घयुक्तबीजेन षडङ्गविधिरीरितः ।

अथ ध्यानम्—

कमलं जपमालां च भयं पुस्तकमेव च ।।६०१।।

श्वेतपद्मस्थितं गौरं श्वेतवस्त्रानुलेपनम् ।

भक्तप्रियं हयग्रीवं वन्देऽहं दानवान्तकम् ।।६०२।।

अथ पुरश्चरणम्—

वेदलक्षं जपेदन्ते दशांशं जुहुयाद्घृतैः ।

सुगन्धाद्यैस्तर्पणं स्यान्मार्जनाद्विप्रभोजनात् ।।

सिद्धो मन्त्रः प्रयोगार्हो जायते भुक्तिमुक्तिदः ।।६०३।।

अथ मन्त्रान्तरं शारदायाम्—

उद्गिरत्पदमाभाष्य प्रणवोद्गीथशब्दतः ।।६०४।।

सर्ववेदमयाचिन्त्यपदान्ते सर्वमुच्चरेत् ।

सर्ववागीश्वरेत्यन्तं प्रवदेदीश्वरेत्यथ ।।६०५।।

बोधय द्वितयोन्तोऽयं मन्त्रस्तारादिरीरितः ।

ऋषिर्ब्रह्माऽस्य संदिष्टश्छन्दोऽनुष्टुबुदाहृतम् ।।६०६।।

देवता स्याद्धयग्रीवो वागैश्वर्यप्रदो विभुः ।

तारेण पादैर्मन्त्रस्य पञ्चाङ्गानि प्रकल्पयेत् ।।६०७।।

अथ ध्यानम्—

शरच्छशाङ्कप्रभमश्ववक्त्रं
मुक्तामयैराभरणैरुपेतम् ।
रथाङ्गशङ्खार्चितबाहुयुग्मं
जानद्वयन्यस्तकरं भजामः ।।६०८।।

अथ पुरश्चरणम्—

वर्णलक्षं जपेन्मन्त्रं कुन्दपुष्पैर्मधुप्लुतैः ।

दशांशं वैष्णवे वह्नौ जुहुयान्मन्त्रसिद्धये ।।६०९।।

अथ मन्त्रान्तरं मेरुतन्त्रे—

अथ मन्त्रान्तरं वक्ष्ये तीक्ष्णबुद्धिकरं वरम् ।

विश्वोत्तीर्णस्वात्मरूपचिन्मयानन्दरूपिणे ।।६१०।।

तुभ्यं नमो हयग्रीव विद्याराजाय विष्णवे ।
स्वाहा सोऽहं च हंसादिरष्टत्रिंशाक्षरो मनुः ।।६११।।
तारमन्त्रपदैश्चात्र पञ्चाङ्गविधिरीरितः ।

ध्यानं पूर्ववत् । अथ पुरश्चरणम्—

पुरश्चर्या तु षट्त्रिंशल्लक्षोऽन्यत् पूर्ववन्मतम् ।।६१२।।

अथ चक्रमन्त्रः शारदायाम्—

तारो भृगुर्वियद्भूयस्तदाद्यं वह्निदीर्घयुक् ।
पावकः कवचास्त्रान्तो मनुः सप्ताक्षरः स्मृतः ।।६१३।।
अहिर्बुध्न्या मुनिः प्रोक्तश्छन्दोऽनुष्टबुदाहृतम् ।
देवता मुनिभिः प्रोक्ता चक्ररूपी हरिः स्वयम् ।।६१४।।
आचक्राय हृदाख्यातं विचक्राय शिरः स्मृतम् ।
सुचक्राय शिखा प्रोक्ता धीचक्राय तनुच्छदम् ।।६१५।।
संचक्राय स्मृतं नेत्रं ज्वालाचक्राय तत्परम् ।
षडङ्गमन्त्राः प्रत्येकं द्विठान्ता यान्ति संयुताः ।।६१६।।

अथ ध्यानम् —

कल्पान्तार्कप्रकाशं त्रिभुवनमखिलं तेजसा पूरयन्तं
रक्ताक्षं पिङ्गकेशं रिपुकुलभयदं भीमदंष्ट्राट्टहासम् ।
चक्रं शङ्खं गदाब्जे पृथुतरमुशलं चापपाशाङ्कुशान् वै
बिभ्राणं दोर्भिराद्यं मनसि मुररिपुं भावयेच्चक्रसंज्ञम् ।।६१७।।

अथ पुरश्चरणम्—

अर्कलक्षं जपेन्मन्त्रं जुहुयात् तत्सहस्रकम् ।
तिलैः ससर्षपैः पद्मैर्बिल्वैर्दुग्धोदनैः क्रमात् ।।६१८।।

अथानन्तमन्त्रस्तत्रैव—

अथान्यं संप्रवक्ष्यामि विष्णोः प्रीतिकरं मनुम् ।
अनन्ताय नमश्चेति षडर्णोऽयमुदाहृतः ।।६१९।।
व्यासो मुनिश्च गायत्री छन्दोऽनन्तश्च देवता ।
नियोगो रोगनाशार्थमन्यद् गोविन्दवद्भवेत् ।।६२०।।

अथ गोपालसुन्दरीमन्त्रस्तत्रैव—

अथ मार्गद्वयोपास्यां वक्ष्ये गोपालसुन्दरीम् ।
मायाश्रीकामबीजानि कृष्णायेति ततो वदेत् ।।६२१।।
एकोनत्रिंशकं वर्णं रुद्रदेवस्वरौ तथा ।
पञ्चमं च त्रपाबीजमेभिः सप्तमकूटकम् ।।६२२।।
गोविन्दाय पदं पश्चाच्चित्रैश्वर्याद्यकूटकम् ।
गोपीजनवल्लभाय ततश्च सकलत्रपाम् ।।६२३।।
कूटरूपां समुच्चार्य वदेद्वह्नेश्च गेहिनी ।
त्रयोविंशाक्षरो मन्त्रो भुक्तिमुक्तिफलप्रदः ।।६२४।।
मुनिर्विधाता दक्षे स्याद्वामे त्वानन्दभैरवः ।
छन्दस्तु देवी गायत्री देवो गोपालसुन्दरी ।।६२५।।
त्रित्रिवेदाब्धिवेदाब्धिवर्णैः कूटविहीनितैः ।
षडङ्गविधिरुद्दिष्टो मन्त्रवर्णान् न्यसेत् तनौ ।।६२६।।

न्यासान्तराण्युक्त्वा ध्यानमाह—

कमलावसुधायुक्तं ध्यायेच्छ्रीचक्रगं हरिम् ।
क्षीराम्भोधौ सितद्वीपे वने कल्पद्रुमादिभिः ।।६२७।।
व्याप्ते तस्मिन् स्वर्णमयं चिन्तयेद्रत्नमण्डपम् ।
तत्र श्रीपीठमध्ये तु स्थितं विधिमुखैः स्तुतम् ।।६२८।।
पद्ममष्टलं शङ्खं वर्णान् वंशीश्च दक्षिणैः ।
भुजैर्दधन्तं वामैस्तु चापं पाशं तथाऽङ्कुशम् ।।६२९।।
विपञ्चीं चारक्तवर्णं नानाभरणभूषितम् ।
पीताम्बरधरं गोपीसमूहैः परितो वृतम् ।।६३०।।

अथ पुरश्चरणम्—

लक्षमेकं जपेन्मन्त्रं जुहुयात् पायसाऽन्धसा ।
तर्पणादि ततः कुर्यान्मन्त्रसिद्धिः प्रजायते ।।६३१।।

अथ श्रीधरमन्त्रस्तत्रैव—

अथातः संप्रवक्ष्यामि श्रीधरस्य मनुं परम् ।
रमारुद्धं कामबीजं श्रीधराय ततो वदेत् ।।६३२।।

त्रैलोक्यमोहनायेति नमोऽन्तः षोडशाक्षरः ।
ऋषिर्ब्रह्मा भवेच्छन्दो गायत्रं श्रीधरः सुरः ।।६३३।।
श्रीबीजेन षडङ्गानि कुर्यात् षड्दीर्घसंयुजा ।

अथ ध्यानम्—

उद्घाट्ये च सिते द्वीपे सर्वर्त्तुफलितद्रुमे ।
तत्र कल्पद्रुमाधस्तात् पक्षीन्द्ररचितासने ।।६३४।।
शङ्खचक्रगदापद्मपाणिं चामीकरद्युतिम् ।
किरीटिनं कुण्डलिनं श्रीवत्साङ्कितवक्षसम् ।।६३५।।
हृदि लक्ष्मीधरं ध्यायेच्छ्रीधरं पुरुषार्थदम् ।

अथ पुरश्चरणम्—

लक्षमेकं जपेन्मत्रं तद्दशांशं घृतैर्हुनेत् ।
तर्पणादि ततः कुर्यात् पूर्ववत् साधकोत्तमः ।।६३६।।

इति विष्णुप्रकरणम् ।

शारदायाम् ।

अथ वक्ष्ये महेशस्य मन्त्रान् सर्वार्थसिद्धिदान् ।
यैः पूर्वमृषयः प्रोक्ताः शिवसायुज्यमञ्जसा ।।६३७।।
हृदयं वपरं साक्षि लान्तोऽनन्तान्वितो मरुत् ।
पञ्चाक्षरो मनुः प्रोक्तस्ताराद्योऽयं षडक्षरः ।।६३८।।

एतन्मन्त्रार्थ उक्तो वामदेवसंहितायाम्—

ॐ कारः परिपूर्णस्य ब्रह्मणो वाचकः स्मृतः ।
नमःशब्दो नमस्कारवाचकः परिकीर्त्तितः ।।६३९।।
प्रह्वत्वलक्षणः प्रोक्तो नमस्कारः पुरातनैः ।
प्रह्वता नाम जीवस्य शिवात् सत्यादिलक्षणात् ।।६४०।।
भेदेन भासमानस्य मायया सर्वरूपतः ।
सम्बन्धं नम इत्याह शिवतादात्म्यलक्षणम् ।।६४१।।
सत्यज्ञानपरानन्दस्वरूपा चित् कलाऽपरा ।
अतिव्यक्ततथा ज्ञेया शिवशब्देन शाम्भवि ।।
वाचकोऽयं ततः शब्दो ब्रह्मणश्चित्कलात्मनः ।।६४२।।

ऋष्यादिन्यासमाह—

वामदेवो मुनिश्छन्दः पङ्क्तिरीशोऽस्य देवता ।
षड्भिर्वर्णैः षडङ्गानि कुर्यान्मन्त्रस्य देशिकः ।।६४३।।

अथ ध्यानम्—

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ।
पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ।।६४४।।

अथ पुरश्चरणम्—

तत्त्वलक्षं जपेन्मन्त्रं दीक्षितः शैववर्त्मना ।
तावत्सङ्ख्यासहस्राणि जुहुयात् पायसैः शुभैः ।।६४५।।
ततः सिद्धो भवेन्मन्त्रः साधकाभीष्टसिद्धिदः ।

अथ मन्त्रान्तरं तत्रैव—

षडक्षरः शक्तिरुद्धः कथितोऽष्टाक्षरो मनुः ।।६४६।।
ऋषिश्छन्दः पुरा प्रोक्तो देवता स्यादुमापतिः ।
अङ्गानि पूर्वमुक्तानि सोममीशं विचिन्तयेत् ।।६४७।।

अथ ध्यानम्—

बन्धूकाभं त्रिनेत्रं शशिशकलधरं स्मेरवक्त्रं वहन्तं
हस्तैः शूलं कपालं वरदमभयदं चारुहारं भजामि ।
वामोरुस्तम्भगायाः करतलविलसच्चारुरक्तोत्पलाया
हस्तेनाश्लिष्टदेहं मणिमयविलसद्भूषणायाःप्रियायाः ।।६४८।।

अथ पुरश्चरणम्—

मनुलक्षं जपेन्मन्त्रं तत्सहस्रं यथाविधि ।
जुहुयान्मधुरासिक्तैरारग्बधसमिद्वरैः ।।६४९।।

मन्त्रान्तरमाह—

सान्तः सद्यान्तसंयुक्तो बिन्दुभूषितमस्तकः ।
प्रासादाख्यो मनुः प्रोक्तो भजतां सर्वसिद्धिदः ।।६५०।।
षड्दीर्घयुक्तबीजेन षडङ्गविधिरीरितः ।
वामदेवो मुनिश्छन्दः पङ्क्तिर्देवः सदाशिवः ।।६५१।।
ईशानादीर्न्यसेन्मूर्त्तीरङ्गुष्ठादिषु देशिकः ।
ईशानाख्यं तत्पुरुषमघोरं तदनन्तरम् ।।६५२।।

वामदेवाह्वयं सद्यमाद्यं बीजं क्रमाद्विदुः ।
ततः समाहितो भूत्वा ध्यायेद्देवं सदाशिवम् ।।६५३।।

अथ ध्यानम्—

मुक्तापीतपयोदमौक्तिकजपावर्णैर्मुखैः पञ्चभि-
त्र्यक्षैरञ्चितमीशमिन्दुमुकुटं पूर्णेन्दुकोटिप्रभम् ।
शूलं टङ्ककृपाणवज्रदहनान् नागेन्द्रघण्टाङ्कुशान्
पाशं भीतिहरं दधानममिताकल्पोज्ज्वलं चिन्तयेत् ।।६५४।।

अथ पुरश्चरणम्—

एवं ध्यात्वा जपेन्मन्त्रं पञ्चलक्षं मधुप्लुतैः ।
प्रसूनैः करवींरोत्थैर्जुहुयात् तद्दशांशकम् ।।६५५।।

मन्त्रान्तरमाह—

तारो माया वियद्बिन्दुमनुस्वरसमन्वितम् ।
पञ्चाक्षरसमायुक्तो वसुवर्णो मनुर्मतः ।।
पञ्चाक्षरोक्तवत् कुर्यादङ्गन्यासादिकं बुधः ।।६५६।।

ध्यानम्—

वन्दे सिन्दूरवर्णं मणिमुकुटलसच्चारुचन्द्रावतंसं
भालोद्यन्नेत्रमीशं स्मितमुखकमलं दिव्यभूषाङ्गरागम् ।
वामोरुन्यस्तपाणेस्तरुणकुवलयं संदधत्या प्रियाया
वृत्तोत्तुङ्गस्तनाग्रे निहितकरतलं वेदटङ्केष्टहस्तम् ।।६५७।।

अथ पुरश्चरणम्—

अष्टलक्षं जपेदेवं मनुं वेदविदां वरः ।
तत्सहस्रं प्रजुहुयात् पायसान्नैर्घृतप्लुतैः ।।६५८।।

अथ मृत्युञ्जयमन्त्रस्तत्रैव—

तारं स्थिरा सकर्णेन्दुर्भृगुः सर्गविभूषितः ।
अक्षरात्मा निगदितो मनुर्मृत्युञ्जयात्मकः ।।६५९।।
ऋषिः कहोलो देव्यादिर्गायत्री छन्द ईरितम् ।
मृत्युञ्जयो महादेवो देवताऽस्य समीरितः ।।
भृगुणा दीर्घयुक्तेन षडङ्गानि समाचरेत् ।।६६०।।

अथ ध्यानम्—

चन्द्रार्काग्निविलोचनं स्मितमुखं पद्मद्वयान्तःस्थितं
मुद्रापाशमृगाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम् ।
कोटीरेन्दुगलत्सुधाप्लुततनुं हारादिभूषोज्ज्वलं
कान्त्या विश्वमनोहरं पशुपतिं मृत्युञ्जयं भावयेत् ।।६६१।।

अथ पुरश्चरणम्—

गुणलक्षं जपेन्मन्त्रं तद्दशांशं विशालधीः ।
जुहुयादमृताखण्डैः शुद्धदुग्धाज्यलोलितैः ।।६६२।।

अथ दक्षिणामूर्त्तिमन्त्रस्तत्रैव—

अथ वक्ष्ये मन्त्ररत्नं समस्तपुरुषार्थदम् ।
अवापुर्येन जप्तेन दिव्यं ज्ञानं मुनीश्वराः ।।६६३।।
दक्षिणामूर्त्तये पूर्वं तुभ्यं पदमनन्तरम् ।
वटमूलपदस्यान्ते पदं पञ्चाशान्निवासिने ।।६६४।।
ध्यानैकनिरताङ्गाय पश्चाद् ब्रूयान्नमःपदम् ।
रुद्राय शम्भवे तारशक्तिरुद्धोऽयमीरितः ।।६६५।।
षट्त्रिंशदक्षरो मन्त्रः सर्वकामफलप्रदः ।
मुनिः शुकः समुद्दिष्टच्छन्दोऽनुष्टुप् समीरितम् ।।६६६।।
दक्षिणामूर्त्तिनामाऽस्य देवता शम्भुरीरितः ।
षड्भिर्वर्णैर्हृदाख्यातं द्वाभ्यां शिर उदीरितम् ।।६६७।।
शिखाऽष्टभिः समादिष्टा वस्वर्णैः कवचं मतम् ।
षड्भिर्नेत्रमाख्यातं त्रिभिरस्त्रमुदाहृतम् ।।६६८।।
षडेते तारशक्त्याद्यास्ताराद्यन्ताः सजातयः ।
अङ्गमन्त्राः समुद्दिष्टा यथावद्देशिकोत्तमैः ।।६६९।।

अथ ध्यानम्—

हेमाचलतटे रम्ये सिद्धकिन्नरसेविते ।
विविधद्रुमशाखाभिः सर्वतो वारितातपे ।।६७०।।
सुपुष्पितैर्लताजालैराश्लिष्टकुसुमद्रुमे ।
शिलाविवरनिर्गच्छन्निर्झरानिलशीतले ।।६७१।।

गायद्भृङ्गाङ्गनासङ्घे नृत्यद्बर्हिकदम्बके ।
कूजत्कोकिलसङ्घेन मुखरीकृतदिङ्मुखे ।।६७२।।
परस्परविनिर्मुक्तमात्सर्यमृगसेविते ।
आद्यैः शुकाद्यैर्मुनिभिरजस्रं समुपस्थिते ।।६७३।।
पुरन्दरमुखैर्देवैः सेवायातैर्विलोकितम् ।
वटवृक्षं महोच्छ्रायं पद्मरागफलोज्ज्वलम् ।।६७४।।
गारुत्मतमयैः पत्रैर्निविडैरुपशोभितम् ।
नवरत्नमयाकल्पैर्लम्बमानैरलङ्कृतम् ।।६७५।।
जलजैः स्थलजैः पुष्पैरामोदिभिरलङ्कृतम् ।
शृण्वद्भिर्वेदशास्त्राणि शुकवृन्दैर्निषेवितम् ।।६७६।।
संसारतापविच्छेदकुशलस्थलमद्भुतम् ।
विचिन्त्य तस्य मूलस्थे रत्नसिंहासने शुभे ।।६७७।।
आसीनममिताकल्पं शरच्चन्द्रनिभाननम् ।
स्तूयमानं मुनिगणैर्दिव्यज्ञानाभिलाषिभिः ।।
संस्मरेज्जगतामाद्यं दक्षिणामूर्त्तिमव्ययम् ।।६७८।।
कैलाशाद्रिनिभं शशाङ्कशकलस्फूर्जज्जटामण्डितं
नासालोकनतत्परं त्रिनयनं वीरासनाध्यासिनम् ।
मुद्राटङ्ककुरङ्गजानुविलसत्पाणिप्रसन्नाननं
कक्षाबद्धभुजङ्गमं मुनिवृतं वन्दे महेशं परम् ।।६७९।।

अथ पुरश्चरणम्—

अयुतद्वयसंयुक्तं गुणलक्षं जपेन्मनुम् ।
तद्दशांशं तिलैः शुद्धैर्जुहुयात् क्षीरसंयुतैः ।।६८०।।

अथ मन्त्रान्तरं तत्रैव—

प्रणवो हृदयं पश्चात् ततो भगवते पदम् ।
ङेयुतं दक्षिणामूर्त्ति मह्यं मेधामुदीरयेत् ।।६८१।।
प्रयच्छ ठद्वयान्तोऽयं द्वाविंशत्यक्षरो मनुः ।
मुनिश्चतुर्मुखश्छन्दो गायत्री देवता मनोः ।।६८२।।
दक्षिणामुर्त्तिराख्यातो वेदव्याख्यानतत्परः ।
ताररुद्धैः स्वरैर्दीर्घैः षड्भिरङ्गानि कल्पयेत् ।।६८३।।

अथ वा मनुसम्भूतैः पदैर्वा कल्पयेत् क्रमात् ।
पूर्वोक्तवटमूलस्थं चिन्तयेन्मन्त्रनायकम् ।।६८४।।

अथ ध्यानम्—

स्फटिकरजतवर्णं मौक्तिकीमक्षमाला-
ममृतकलशविद्याज्ञानमुद्राकराग्रैः ।
दधतमुरगकक्षं चन्द्रचूडं त्रिनेत्रं
विधृतविविधभूषं दक्षिणामूर्त्तिमीडे ।।६८५।।

अथ पुरश्चरणम्—

लक्षमेकं जपेन्मन्त्रं ब्रह्मचारिव्रते स्थितः ।
जुहुयात् सघृतैः पद्मैर्दशांशं संस्कृतेऽनले ।।६८६।।

अथ नीलकण्ठमन्त्रस्तत्रैव—

लोहिताऽग्न्यासनः सद्योबिन्दुमान् प्रथमं ततः ।
द्वितीयं वह्निबीजस्था दीर्घा शान्तीन्दुभूषिता ।।६८७।।
तृतीयं लाङ्गली सर्गी मन्त्रो बीजत्रयान्वितः ।
नीलकठात्मकः प्रोक्तो विषद्वयहरः परः ।।६८८।।
हरद्वयं वह्निजाया हृदयं परिकीर्त्तितम् ।
कपर्दिने ठयुगलं शिरोमन्त्र उदाहृतः ।।६८९।।
नीलकण्ठाय ठद्वयं शिखामन्त्र उदाहृतः ।
कालकूटपदस्यान्ते विषभक्षणं ङेयुतम् ।।६९०।।
हुँ फट् कवचमादिष्टं बिद्वद्भिर्नीलकण्ठिने ।
स्वहान्तमस्त्रमेतानि पञ्चाङ्गानि मनोर्विदुः ।।६९१।।

अथ ध्यानम्—

बालार्कायुततेजसं धृतजटाजूटेन्दुखण्डोज्ज्वलं
नागेन्द्रैः कृतभूषणं जपवटीं शूलं कपालं करैः ।
खट्वाङ्गं दधतं त्रिनेत्रविलसत्पञ्चाननं सुन्दरं
व्याघ्रत्वक्परिधानमब्जनिलयं श्रीनीलकण्ठं भजे ।।६९२।।

अथ पुरश्चरणम्—

लक्षत्रयं जपेन्मन्त्रं तद्दशांशं ससर्पिषा ।
हविषा जुहुयात् सम्यक् संस्कृते हव्यावहने ।।६९३।।

अथार्धनारीश्वरमन्त्रस्तत्रैव—

अग्निः संवर्त्तकादित्यरानिलाः षष्ठबिन्दुमत् ।
चिन्तामणिरिरिति ख्यातं बीजं सर्वसमृद्धिदम् ।।६९४।।
कश्यपो मुनिराख्यातश्छन्दोऽनुष्टुबुदाहृतम् ।
अर्धनारीश्वरः प्रोक्तो देवता जगतां पतिः ।।
रेफादिर्व्यञ्जनः षड्भिः कुर्यादङ्गानि षट् क्रमात् ।।६९५।।

अथ ध्यानम्—

नीलप्रभातरुचिरं विलसत्त्रिनेत्रं
पाशारुणोत्पलकपालत्रिशूलहस्तम् ।
अर्धाम्बिकेशमनिशं प्रविभक्तभूषं
बालेन्दुबद्धमुकुटं प्रणमामि रूपम् ।।६९६।।

अथ पुरश्चरणम्—

एकलक्षं जपेद्बीजमित्थं मन्त्री विचिन्तयेत् ।
अयुतं मधुना सिक्तैर्जुहुयात् तिलतण्डुलैः ।।६९७।।

अथ शरभमन्त्रो मेरुतन्त्रे—

ॐ खँ खाँ खँ फडुच्चार्य द्विः प्राणान् ग्रसतीति च ।
हुँ फट् सर्वशत्रुसंहरणाय शरभेति च ।।६९८।।
शाल्वाय पक्षिराजाय हुँ फट् स्वाहान्तको मनुः ।
एकचत्वारिंशदर्णो वासुदेवो मुनिः स्मृतः ।।६९९।।
कालाग्निरुद्रः शरभो देवता परिकीर्त्तितः ।
छन्दस्तु जगती स्वाहा शक्तिर्बीजं खमुच्यते ।।
वेदषट्सप्तनवषण्णवाणैरङ्गकल्पनम् ।।७००।।

अथ ध्यानम्—

चन्द्रार्काग्निस्त्रिनयनं कालीदुर्गाद्विपक्षकम् ।
विद्युज्जिह्वं वज्रनखं वडवाग्न्युदरं तथा ।।७०१।।
व्याधिमृत्युरिपुघ्नं च चण्डवातातिवेगिनम् ।
हृद्भैरवस्वरूपं च वैरिवृन्दनिषूदनम् ।।७०२।।
मृगस्त्वर्धशरीरेण पक्षाभ्यां चञ्चुना द्विजः ।
अधोवक्त्रश्चतुष्पादस्तूर्ध्ववक्त्रश्चतुर्भुजः ।।७०३।।

कालान्तदहनप्रख्यो नीलजीमूतनिःश्वनः ।
अरिर्यद्दर्शनादेव विनष्टबलविक्रमः ।।७०४।।
सटाच्छटोपरूपाय पक्षविक्षिप्तभूभृते ।
अष्टपादाय रुद्राय नमः शरभमूर्त्तये ।।७०५।।

पुरश्चरणमाह—

एवं ध्यायन् सहस्रं तु प्रजपेत् पायसं हुनेत् ।
प्रत्यहं मासषट्केण मन्त्रसिद्धिः प्रजायते ।।७०६।।

अथ क्षेत्रपालमन्त्रः शारदायाम्—

वर्णान्त्यमौंबिन्दुयुक्तं क्षेत्रपालाय हृन्मनुः ।
ताराद्यो वसुवर्णोऽयं क्षेत्रपालस्य कीर्त्तितः ।।
षड्दीर्घभाजा बीजेन षडङ्गान्यस्य योजयेत् ।।७०७।।

अथ ध्यानम्—

नीलाञ्जनाद्रिनिभमूर्ध्वपिशङ्गकेशं
वृत्तोग्रलोचनमुपात्तगदाकपालम् ।
आशाम्बरं भुजगभूषणमुग्रदंष्ट्रं
क्षेत्रेशमद्भुततनुं प्रणमामि देवम् ।।७०८।।

अथ पुरश्चरणम्—

लक्षमेकं जपेन्मन्त्रं जुहुयात् तद्दशांशतः ।
चरुणा घृतसिक्तेन ततः क्षेत्रेशमर्चयेत् ।।७०९।।

अथापदुद्धारवटुकमन्त्रस्तत्रैव—

उद्धरेद्वटुकं ङेऽन्तमापदुद्धारणं तथा ।
कुरुद्वयं पुनर्ङेऽन्तं वटुकं तं समुद्धरेत् ।।७१०।।
एकविंशत्यक्षरात्मा शक्तिरुद्धो महामनुः ।
अभीष्टफलसंसिद्ध्यै कीर्त्तितः सुरपादपः ।।७११।।
बृहदारण्यक ऋषिश्छन्दोऽनुष्टुबुदाहृतम् ।
आपदुद्धारणो देवो भैरवो देवता बुधैः ।।७१२।।
अङ्गुलीदेहवक्त्रेषु मूर्त्तीर्न्यस्येद्यथा पुरा ।
सद्यादिपञ्चह्रस्वाढ्यं शक्तिबीजपुरःसरम् ।।७१३।।

वकारं पञ्चह्रस्वाढ्यमीशानादिषु योजयेत् ।
षड्दीर्घयुक्तया शक्त्या वकारेण च तद्वता ।।७१४।।
अङ्गानि जातियुक्तानि प्रणवाद्यादि कल्पयेत् ।
तस्य ध्यानं त्रिधा प्रोक्तं सात्त्विकादिविभेदतः ।।७१५।।

अथ ध्यानम्—

वन्दे बालं स्फटिकसदृशं कुण्डलोल्लासि वक्त्रं
दिव्याकल्पैर्नवमणिमयैः किङ्किणीनूपुराढ्यैः ।
दीप्ताकारं विसदवसनं सुप्रसन्नं त्रिनेत्रं
हस्ताक्षाब्जायां वटुकमनिशं शूलदण्डौ दधानम् ।।७१६।।
उद्यद्भास्करसन्निभं त्रिनयनं रक्ताङ्गरागस्रजं
स्मेरास्यं वरदं कपालमभयं शूलं दधानं करैः ।
नीलग्रीवमुदारभूषणधरं शीतांशुचूडोज्ज्वलं
बन्धूकारुणवाससं भयहरं देवं सदा भावयेत् ।।७१७।।
ध्यायेन्नीलाद्रिकान्तं शशिशकलधरं मुण्डमालं महेशं
दिग्वस्त्रं पिङ्गकेशं डमरुमथ श्रृणिं खड्गपाशाभयानि ।
नागं घण्टां कपालं करसरसिरुहैर्बिभ्रतं भीमदंष्ट्रं
सर्पाकल्पं त्रिनेत्रं मणिमयविलसत्किङ्किणीनूपुराढ्यम् ।।७१८।।
सात्त्विकं ध्यानमाख्यातमपमृत्युनिवारणम् ।
आयुरारोग्यजननमपवर्गफलप्रदम् ।।७१९।।
राजसं ध्यानमाख्यातं धर्मकामार्थसिद्धिदम् ।
तामसं शत्रुशमनं कृत्याभूतग्रहापहम् ।।७२०।।

अथ पुरश्चरणम्—

वर्णलक्षं जपेन्मन्त्रं हविष्याशी जितेन्द्रियः ।
तद्दशांशं प्रजुहुयात् तिलैर्मधुरसंयुतैः ।।७२१।।

अथ पाशुपतास्त्रमन्त्रः शारदायाम्—

तारो वान्तो धरासंस्थो वामनेत्रेन्दुभूषितः ।
पार्श्वो वक्रः कर्णयुतो वर्मास्त्रान्तः षडक्षरः ।।७२२।।
मनुः पाशुपतास्त्राख्यो ग्रहक्षुद्रनिवारणः ।
षड्भिर्वर्णैः षडङ्गानि हुं फडन्तैः सजातिभिः ।।७२३।।

अथ ध्यानम्—

मध्याह्नार्कसमप्रभं शशिधरं भीमाट्टहासोज्ज्वलं
त्र्यक्षं पन्नगभूषणं शिखिशिखाश्मश्रुस्फुरन्मूर्धजम् ।
हस्ताब्जैस्त्रिशिखं समुद्गरमसिं शक्तिं दधानं विभुं
दंष्ट्राभीमचतुर्मुखं पशुपतिं दिव्यास्त्ररूपं स्मरेत् ।।७२४।।

पुरश्चरणम्—

वर्णलक्षं जपेन्मन्त्रं जुहुयात् तद्दशांशतः ।
गव्येन सर्पिषा मन्त्री संस्कृते हव्यवाहने ।।७२५।।

अथ हरिहरमन्त्रस्तन्त्रान्तरे—

मायां पूर्वं समुद्धृत्य प्रासादं तत उद्धरेत् ।
ततः शङ्करनारायणाय हृत्प्रणवादिकः ।।७२६।।
त्रयोदशाक्षरो मन्त्रश्चतुर्वर्गफलप्रदः ।
नारदोऽस्य ऋषिः प्रोक्तश्छन्दोऽनुष्टुप् प्रकीर्त्तितम् ।।७२७।।
त्रैलोक्यवन्द्यपादाब्जो देवता हरिशङ्करः ।
षडङ्गानि प्रकुर्वीत दीर्घषट्काढ्यमायया ।।७२८।।

अथ ध्यानम्—

शूलं चक्रं पाञ्चजन्यमभीतिं दधतं करैः ।
स्वस्वभूषाच्छनीलार्धदेहं हरिहरं भजे ।।७२९।।

अथ पुरश्चरणम्—

लक्षमेकं जपेन्मन्त्रं तद्दशांशं घृतप्लुतैः ।
पायसैर्हवनं कुर्यात् संस्कृते हव्यवाहने ।।७३०।।

इति शिवप्रकरणम् ।

अथ गौरीमन्त्रः सिद्धान्तसंग्रहे—

ह्रीँ गौरि रुद्रदयिते योगेश्वरि पदं वदेत् ।
हुँ फट् स्वाहा षोडशार्णो गौरीमन्त्रः प्रकीर्त्तितः ।।७३१।।
अजो मुनिस्तथाऽनुष्टुप् छन्दो गौर्यस्य देवता ।
मायया तु षडङ्गानि कुर्यात् षड्दीर्घयुक्तया ।।७३२।।

ध्यानम्—

हेमाभां बिभ्रतीं दोर्भिर्दर्पणाञ्जनसाधने ।
पाशाङ्कुशौ दिव्यभूषां गौरीं देवीमुपास्महे ।।७३३।।

अथ पुरश्चरणम्—

लक्षमेकं जपेन्मन्त्रं दशांशं जुहुयाद् घृतैः ।
तर्पणाद्यं ततः कृत्वा काम्यकर्माणि साधयेत् ।।७३४।।
अथ मन्त्रान्तरं वक्ष्ये मायाबीजं समुद्धरेत् ।
ङेऽन्तां भवानीमुच्चार्य नमः शेषे प्रकीर्त्तयेत् ।।
न्यासजालं पुरा प्रोक्तं देवीं ध्यायेत् समाहितः ।।७३५।।

ध्यानं यथा —

बालार्काभां त्रिनयनां खड्गखेटवराभयान् ।
दोर्भिर्दधानां सिंहस्थां भवानीं भावयेत् सदा ।।७३६।।

अस्य पुरश्चरणं पूर्ववदेकलक्षजपः । इति भवनीप्रकरणम् ।

अथ गरुडमन्त्रो मेरुतन्त्रे—

वक्ष्येऽथ गारुडं मन्त्रं क्षिपतारोऽग्निगेहिनी ।
पञ्चाक्षरो मनुः पङ्क्तिश्छन्दोऽनन्तो मतो मुनिः ।।७३७।।
देवता गरुडस्तारो बीजं शक्तिर्दहाङ्गना ।
स्वाहान्तो हृदये न्यस्यो ज्वलज्वल महामते ।।७३८।।
रुद्रचूडानन स्वाहाऽङ्गस्यान्ते मस्तके न्यसेत् ।
गरुडान्ते शिखे स्वाहा शिखाया मनुरीरितः ।।७३९।।
वर्ममन्त्रस्तु गरुड प्रभञ्जययुगं वदेत् ।
द्विः प्रभेदय वित्रासय दुष्टपङ्क्तिं विमर्दय ।।७४०।।
स्वाहा सप्तत्रिंशदर्णो नेत्रमन्त्रोऽथ कथ्यते ।
उग्ररूपधरेत्युक्त्वा सर्वं विषहरेति च ।।७४१।।
भीषय द्वितयं सर्वं दहयुग्मं ततो वदेत् ।
भस्मीकुरु कुरु स्वाहा दन्तवर्णो मतो मनुः ।।७४२।।
अस्त्रमन्त्रोऽप्रतिहतबलाप्रतिहतेति च ।
शासनान्ते वदेद्धुं फट् स्वाहान्तोऽष्टादशाक्षरः ।।७४३।।

अथ ध्यानम्—

चञ्चवग्रप्रचलद्भोगी भोगं मुकुटमण्डितम् ।
पक्षोच्चारितसत्सामगानं विषहरं भजे ।।७४४।।

अस्य पुरश्चरणं पञ्चलक्षजपः ।

पञ्चलक्षं जपेन्मनुम् ... ... ... इति तत्रैवोक्तत्वात् ।

तथा—

तिलैर्हुनेत् तर्पणादि कृत्वा सिद्धो मनुर्भवेत् ।
दर्शनादुरगास्तस्य नष्टा नश्येद्विषद्वयम् ।।७४५।।
विष्णुभक्तिपरो भूयात् स्वयमेवारिनाशनः ।
इह लोके सुखी दीर्घजीवी भूपतिपूजितः ।।
परत्र याति वैकुण्ठम् ... ... ...।।७४६।। इत्यादि ।

अथ कार्त्तवीर्यमन्त्रस्तत्रैव—

अथातः संप्रवक्ष्यामि विंशन्मन्त्राँस्तु दक्षिणे ।
आम्नाये यत्साधकानामक्लेशादष्टसिद्धयः ।।७४७।।
द्वाविंशत्तुर्यौ ताराद्यौ दक्षे वामे सतुर्यकौ ।
चतुर्दशस्वरोपेतौ शेषाम्नायेषु तद्भवेत् ।।७४८।।
बिन्दुयुक्तं त्वाद्यबीजं चतुर्थस्वरसंयुतम् ।
षट्त्रिंशत्तुर्यौ बिन्द्वाढ्यौ द्वितीयं बीजमुच्यते ।।७४९।।
कामबीजं तृतीयं स्याद् द्वादशार्णं चतुर्थकौ ।
षष्ठस्वरेन्दुसंयुक्तौ चतुर्थं बीजमुच्यते ।।७५०।।
पाशो लज्जाऽङ्कुशो लक्ष्मीकवचास्त्रमिदं भवेत् ।
बीजानां दशकं ङेऽन्तः कार्त्तवीर्यार्जुनो नमः ।।७५१।।
एकोनविंशत्यर्णोऽयं दत्तात्रेयो मुनिः स्मृतः ।
छन्दोऽनुष्टुप् कार्त्तवीर्यार्जुनो देवः प्रकीर्तितः ।।७५२।।
फ्राँ ब्रामिति स्याद्धृदयं क्लीँ भ्रीमिति शिरः स्मृतम् ।।
ॐ हूँ शिखा समाख्याता केँ श्रेँ कवचमीरितम् ।
हुँ फडस्त्रं समाख्यातं शेषेण व्यापकं चरेत् ।।७५३।।

न्यासान्तराण्युक्त्वा ध्यानमाह—

प्रभाकररुचिःस्वर्णकण्ठमालाविराजितः ।
ध्येयो रक्तांशुकोष्णीषी नानाकल्पविभूषितः ।।७५४।।
सहस्रार्धभुजैर्बाणान् सहस्रार्धैर्धनूंषि च ।
दधट्टङ्कारशब्दैश्च त्रासिताखिलदुर्जनः ।।७५५।।

सम्यग्बाणासनारूढः सप्तद्वीपधरापतिः ।
भूपालमुकुटाघृष्टपादपद्मोब्जलोचनः ।।
स्थूलकायोऽतिभीमश्च रथस्थो भक्तवत्सलः ।।७५६।।

अथ पुरश्चरणम्—

चतुर्लक्षं जपेन्मन्त्रं होमः कार्यः पयोन्धसा ।
तिलाज्यतण्डुलैर्वाऽपि पुरश्चर्या सरित्तटे ।।
तर्पणादि ततः कुर्यान्मन्त्रसिद्धिः प्रजायते ।।७५७।।

अथ मन्त्रभेदाः—

अथातः संप्रवक्ष्यामि कार्त्तवीर्यमनोर्भिदः ।
एकोनविंशत्यर्णोऽयं तारादिर्नखवर्णकः ।।७५८।।
[1]छन्दर्षिन्यासपूजादि सर्वं पूर्ववदीरितम् ।
द्वितीयोऽयं भेद उक्तो भजतामिष्टदायकः ।।७५९।।
कार्त्तवीर्यार्जुनायेति नमो मूलं नवाक्षरम् ।
फ्रौँ पूर्वको दशार्णोऽयं विराट् छन्द उदीरितम् ।।७६०।।
सर्वार्थसिद्धये चास्य नियोगोऽन्यत् तु पूर्ववत् ।
न्यासपूजादिकं सर्वं भेदोऽयं तु तृतीयकः ।।७६१।।
फ्रौँ श्रीँ पूर्वो नवार्णस्तु भवेदेकादशाक्षरः ।
प्राग्वन्मुन्यादिकं सर्वं छन्दस्त्रैष्टुभमुच्यते ।।७६२।।
नियोगस्तम्भनायास्य चौराणां वसुहारिणाम् ।
प्राग्वत् पूजाप्रयोगादि तुर्यो भेदो निरूपितः ।।७६३।।
फ्रौँ क्लीँ पूर्वो नवार्णस्तु भवेदेकादशाक्षरः ।
नरनारीनृपाणां च मोहनाय नियोजनम् ।।७६४।।
मुनिश्छन्दोमुखं प्राग्वत् प्रयोगाँश्चापि साधयेत् ।
एवं तु पञ्चमो भेदो मन्त्रस्य परिकीर्त्तितः ।।७६५।।
फ्रौँ भ्रूँ पूर्वो नवार्णस्तु षष्ठो भेदश्च पूर्ववत् ।
मुन्यादि भ्रमणोच्चाटद्वेषमारणकर्मकृत् ।।७६६।।
फ्रौँ ह्लीमन्ते नवार्णस्तु भेदः सप्तमको भवेत् ।
वश्यं पापक्षयं मोहं शुभं च तनुते सदा ।।७६७।।

---

१. तान्त्रिकप्रयोगोऽयम् ।

फ्रौँ माँ नवाक्षरश्चेति ह्यष्टमोऽर्चादि पूर्ववत् ।
वक्स्तम्भे वा गतिस्तम्भे नियोगः परिकीर्त्तितः ।।७६८।।
फ्रौँ श्रीँ नवाक्षरश्चेति दशमो भेद उच्यते ।
त्रिष्टुप् छन्दोऽन्यदखिलमूनविंशतिवद्भवेत् ।।७६९।।
फ्राँ वाग्बीजं नवार्णश्च भेद एकादशः स्मृतः ।
हुँ फड्नवार्ण इति च द्वादशार्चादि पूर्ववत् ।।७७०।।
तृतीयभेदस्ताराद्यो मन्त्र एकादशाक्षरः ।
त्रयोदशस्तु भेदोऽयं सर्वं पूर्ववदीरितम् ।।७७१।।
एवं भेदाश्चतुर्थाद्याः सप्त प्रणवपूर्वकाः ।
द्वादशाद्याः सप्त मन्त्रा जगतीच्छन्दसो मताः ।।७७२।।
प्राग्वन्मुन्यादिकं सर्वं प्रयोगः पूर्ववन्मतः ।
दक्षिणाम्नायगाश्चैते विंशन्मन्त्राः प्रकीर्त्तिताः ।।७७३।।

अथोर्ध्वाम्नाये—

ॐ नमः कार्त्तवीर्यार्जुनाय वर्मास्त्रठद्वयम् ।
चतुर्दशार्णमन्त्रोऽयमष्टमः परिकीर्त्तितः ।।७७४।।
भूनेत्रसप्तनेत्राक्षिवर्णैरस्याङ्गपञ्चकम् ।
एकोनविंशदर्णस्य मुन्याद्यमखिलं मतम् ।।७७५।।

अथ मालामन्त्रः—

तारो नमो भगवते ततः श्रीपदमुच्चरेत् ।
कार्त्तवीर्यार्जुनायेति हैहयेति पदं ततः ।।७७६।।
नाथाय श्रीकार्त्तवीर्यार्जुनेति च सहस्रशः ।
करसदृशसर्वेति दुष्टान्तकपदात् पठेत् ।।७७७।।
सर्वशिष्टेष्टदपदं सर्वत उदधेः पदम् ।
आगन्तुकामान् प्रवदेदस्मद्वसुविलुम्पकान् ।।७७८।।
चौरसमूहान् स्वकरसहस्रैश्च निवारय ।
रुन्धस्व पाशसहस्रैर्बन्धयेति ततोऽङ्कुशः ।।७७९।।
सहस्रैराकर्षय स्वचापोद्धूतपदात् ततः ।
वदेद्बाणसहस्रैश्च भिन्दि भिन्दीति संवदेत् ।।७८०।।

स्वहस्तोद्भूतखड्गेति सहस्रैश्छिन्धियुग्मकम् ।
स्वहस्तोद्भूतमुखलसहस्रैर्मर्दयद्वयम् ।।७८१।।
स्वशङ्खोद्भूतनादेति सहस्रैर्भीषयद्वयम् ।
स्वहस्तोद्भूतचक्रेति सहस्रैर्द्विर्निकृन्तय ।।७८२।।
परकृत्यां त्रासय द्विस्ततश्चाकर्षयद्वयम् ।
भ्रामय द्विर्मोहय द्विरुद्वासययुगं वदेत् ।।७८३।।
उन्मादयद्वयं द्वेधा तापय द्विर्विनाशय ।
द्वेधा विदारय स्तम्भयद्वयं [१]जृम्भय द्वयम् ।।७८४।।
मारयद्वितयं प्रोच्य वशं कुरु वशं कुरु ।
उच्चाटयोच्चाटयेति विनाशय विनाशय ।।७८५।।
दत्तात्रेयश्रीपदान्ते पादप्रियतमेति च ।
श्रीकार्त्तवीर्योऽर्जुनेति सर्वगश्चोदधेर्वदेत् ।।७८६।।
आगन्तुकामान् प्रवदेदस्मद्वसुविलुम्पकान् ।
चौरसमूहान् सम्यक् च वदेदुन्मूलयद्वयम् ।।७८७।।
हुँ फट् स्वाहेति मन्त्रोऽयं बाणाब्ध्यनलवर्णवान् ।
प्रोक्तः पञ्चदशश्छन्दो गायत्र्यन्यच्च पूर्ववत् ।।७८८।।
दत्तात्रेयप्रियतमं ङेऽन्तं हृदि तु विन्यसेत् ।
माहिष्मतीति नाथाय शिरोमन्त्रो नगाक्षरः ।।७८९।।
रेवती च जलक्रीडासक्तायेति शिखा मता ।
हैहयाधिपतिर्ङेऽन्तः कवचः परिकीर्त्तितः ।।७९०।।
सहस्रबाहवेऽस्त्र स्यादेवं पञ्चाङ्गमीरितम् ।।७९१।।

अथ ध्यानम्—

उदग्रबाणाँश्चापानि दधतं सूर्यसन्निभम् ।
प्रपूरयन्तं ब्रह्माण्डं धनुर्ज्यानिःस्वनैस्तथा ।।७९२।।
कार्त्तवीर्यं नृपं ध्यायेद् गण्डशोभितकुण्डलम् ।
एवं ध्यात्वा समभ्यर्च्य सर्वकर्माणि साधयेत् ।।७९३।।

अथ पुरश्चरणम्—

त्रिसहस्रं जपः प्रोक्तः शेषं पूर्ववदाचरेत् ।।७९४।।

---

१.भञ्जयद्वयमिति २ पु. पा. ।

अथ प्रयोगः—

दक्षोत्तरैः प्रतिशतैरेतान्यस्त्राणि संदधत् ।
चक्रेषुखड्गमुशलकुठारान् पाशमेव च ।।७९५।।
प्रासचर्मधनुःशङ्खान् मध्यभास्करसन्निभम् ।
बलाढ्यमरुणं घोरं तालमातङ्गसंस्थितम् ।।७९६।।
रक्ताम्बरं रक्तनेत्रं ध्यात्वैवं प्रजपेन्मनुम् ।
निशीथेऽष्टोत्तरशतं नष्टद्रव्याप्तिसिद्धये ।।७९७।।
जपेन्निश्येकपादेन षण्मासानष्टयुक् छतम् ।
संप्रार्थ्य मन्त्रिणं चौराः प्रयच्छन्त्यखिलं धनम् ।।७९८।।
चौरैर्हृतपशून् मन्त्री यदा नेतुं समिच्छति ।
जपेदष्टोत्तरशतं ध्यायेद्देवं नृपाशितान् ।।७९९।।
कण्ठे समयक् सर्वपशून् गृहाभिमुखमागतान् ।
ध्यात्वैवं द्वादशाहेन ते चायान्ति विमोचिताः ।।८००।।
चौरैर्हृतं च व्रीह्यादि तच्छेषं होमयन्निशि ।
हृतं प्रकाश्यते भीतैश्चौरैर्झटिति नान्यथा ।।८०१।।
बाणान् प्रवेशयेद्रात्रौ धनुषा ध्यानतत्परः ।
दशदिक्षु जपेन्मन्त्रं राष्ट्रादे रक्षणं भवेत् ।।८०२।।
मन्त्रेण परिजप्तानि पार्थिवानि रजांसि च ।
क्षिप्तानि मन्त्रिणा यत्र तत्र राज्ञा भवेन्निशि ।।८०३।।

मन्त्रान्तरमाह—

फ्रोमित्येकाक्षरो मन्त्रः कार्त्तवीर्यस्य षोडशः ।
मुनिपूजादिकं प्राग्वल्लक्षमेकं पुरस्क्रिया ।।८०४।।
षड्दीर्घयुक्तेनानेन षडङ्गविधिरीरितः ।
प्राग्वत् प्रयोगा इत्येवमूर्ध्वाम्नायः प्रकीर्त्तितः ।।८०५।।
पश्चिमाम्नायमन्त्रास्तु प्रोक्ताश्चारब्बभाषया ।
अष्ठौ शतान्यशीतिश्च येषां संसाधनात् कलौ ।।८०६।।
पञ्च खानाः सप्त मीराः नव शाहा महाबलाः ।
हिन्दुधर्मप्रलोप्तारो जायन्ते चक्रवर्त्तिनः ।।८०७।।

पूर्वाम्नाये नवशतं षडशीतिः प्रकीर्त्तिताः ।
फिरङ्गभाषया मन्त्रास्तेषां संसाधनाद् भुवि ।।८०८।।
अधियो मन्दिराणां च संग्रामेष्वपराजिताः ।
अंग्रेजा नवषट्पञ्च लन्दजाश्चापि भाविताः ।।८०९।।
विद्या बौद्धनिदर्शिन्यां पञ्च प्रोक्तास्तु या मया ।
तद्बीजपूर्वाः सर्वेऽपि मनवो वामसिद्धिदाः ।।८१०।।
दक्षिणाचारफलदः कार्त्तवीर्यार्जुनो नृपः ।
वामचारेण शूद्राणामिह लोके फलप्रदः ।।८११।।
न वामिनां हितार्थं तु कार्त्तावीर्यं प्रयोजयेत् ।
सप्तजन्मसु दारिद्र्यं पैशाच्यं प्राप्नुयाद् द्विजः ।।८१२।।

इति कार्त्तवीर्यप्रकरणम् ।

अथ हनुमन्मन्त्रस्तत्रैव

अथान्यं संप्रवक्ष्यामि मन्त्रमष्टादशाक्षरम् ।
नमो भगवते प्रोच्य आञ्जनेयाय संवदेत् ।।८१३।।
महावलाय स्वाहेति मुनिरस्येश्वरः स्मृतः ।
छन्दोऽनुष्टुब्देवता तु हनुमान् हँ च बीजकम् ।।८१४।।
स्वाहा शक्तिश्चाञ्जनेयो रुद्रमूर्त्तिर्मरुत्सुतः ।
अग्निगर्भो रामदूतो ब्रह्मास्त्रविनिवारकः ।।
एतैर्ङेऽन्तैः षडङ्गानि तथाऽङ्गुष्ठादिषु न्यसेत् ।।८१५।।

अथ ध्यानम्—

तप्तकाञ्चनसंकाशं हृदये निहिताञ्जलिम् ।
किरीटिनं कुण्डलिनं ध्यायेद्वानरनायकम् ।।८१६।।

अथ पुरश्चरणम्—

अयुतं प्रजपेन्मन्त्रं तु प्रागवत् सिद्धो भवेन्मनुः ।
विप्रसन्तर्पणाद्यं तु प्राग्वत् सिद्धो भवेन्मनुः ।।८१७।।

अथ काम्यानि—

जितेन्द्रियो नक्तभोजी प्रत्येकं साष्टकं शतम् ।
जपित्वा क्षुद्ररोगेभ्यो मुच्यते दिवसत्रयात् ।।८१८।।

भूतप्रेतपिशाचादिनाशायैवं समाचरेत् ।
महारोगनिवृत्त्यै तु सहस्रं त्रिदिनं जपेत् ।।८१९।।
यताशनोऽयुतं नित्यं जपेद्ध्यायन् कपीश्वरम् ।
राक्षसौघं विनिघ्नन्तमचिराज्जयति द्विषः ।।८२०।।
सुग्रीवेण समं रामं संदधानं स्मरन् कपिम् ।
प्रजप्यायुतमात्रं तु सन्धिं कुर्याद्विरुद्धयोः ।।८२१।।
लङ्कादहन्तं तं ध्यायन्नयुतं प्रजपेन्मनुम् ।
शत्रूणां प्रदहेद् ग्रामानचिरादेव साधकः ।।८२२।।
प्रयाणसमये ध्यायन् हनुमन्तं मनुं जपेत् ।
यो याति सोऽचिरात् स्वेष्टं साधयित्वा गृहं व्रजेत् ।।८२३।।
यः कपीशं सदा गेहे पूजयेज्जपतत्परः ।
आयुर्लक्ष्म्यौ प्रवर्त्तेते तस्य नश्यन्त्युपद्रवाः ।।८२४।।
शार्दूलतस्करादिभ्यो रक्षेन्मनुरयं स्मृतः ।
प्रस्थानकाले चौरेभ्यो दुष्टसर्पादपि ध्रुवम् ।।८२५।।
पुच्छाकारे सुवसने लेखन्या कोकिलोत्थया ।
अष्टगन्धैर्लिखेद्रूपं कपिराजस्य सुन्दरम् ।।८२६।।
तन्मध्येऽष्टादशार्णं तु शत्रूणामयुतं लिखेत् ।
तेन मन्त्राभिजप्तेन शिरोबन्धेन भूमिपः ।।८२७।।
जयत्यरिगणं सर्वं दर्शनादेव निश्चितम् ।
यद्वा जिगीषुर्नृपतिः पूर्वोक्तं लेखयेद्ध्वजे ।।८२८।।
ध्वजमादायोपरागे संस्पर्शान्मोक्षणावधि ।
मान्त्रिकाज्जापयेत् पश्चाद्दशांशने हुतं चरेत् ।।८२९।।
सर्षपैस्तिलसंमिश्रैः संस्कृते हव्यवाहने ।
गजस्थं तं ध्वजं दृष्ट्वा पलायन्तेऽरयोऽचिरात् ।।८३०।।

अथ मन्त्रान्तरं तत्रैवोक्तम्—

अथान्यं संप्रवक्ष्यामि मन्त्रमष्टाक्षरं परम् ।
षड्दीर्घयुक्ता हल्लेखा प्रणवेन च संपुटा ।।८३१।।
अष्टार्णोऽयं हनुमतो मन्त्रराजः प्रकीर्त्तितः ।
षड्दीर्घयुक्तबीजेन षडङ्गविधिरीरितः ।।८३२।।

अस्य ऋषिः श्रीरामः जगती छन्दो हनुमान् देवता ।

अथ ध्यानम्—

बालार्काभं त्रिभुवनं क्षोभकान् सर्वराक्षसान् ।
नादेनैव त्रासयन्तं सुग्रीवादिकसेवितम् ।।
सुन्दरं रामचरणध्यानं ध्यायेत् समीरजम् ।।८३३।।

अस्य पुरश्चरणं द्वादशसहस्रजपः 'सर्वमस्य द्वादशार्णवदि' त्युक्तत्वात् ।

द्वादशार्णमन्त्रोऽपि तत्रैव—

अथास्यान्यं प्रवक्ष्यामि द्वादशार्णं महामनुम् ।
हैाँ बीजं सम्यगुच्चार्य पूर्वोक्तं कूटपञ्चकम् ।।८३४।।
हनुमते नमो मन्त्रो रामचन्द्रो मुनिर्मतः ।
जगती छन्द उद्दिष्टं हनुमान् देवता मतः ।।८३५।।
बीजं तु पञ्चमं कूटं शक्तिराद्यं तु कूटकम् ।
षड्बीजैः प्रथमैर्न्यासः षदङ्गोऽस्य प्रकीर्त्तितः ।।८३६।।

कूटपञ्चकं तु—

आद्यन्ताकृतिवेदार्णा बिन्दुरुद्रस्वरान्विताः ।
हनूमतस्त्वाद्यकूटमेतत् साधक उच्चरेत् ।।८३७।।
प्रकृत्याकृतिवेदार्णा बिन्दुरुद्रस्वरान्विताः ।
द्वितीयकूटमेतत् स्यादाद्यन्ताकृतिवर्णकाः ।।८३८।।
विसर्गेन्दुखरोपेतास्तृतीयं कूटमुच्यते ।
आद्यन्तसिद्धाकृत्त्यब्धिवर्णैरीशस्खरान्वितैः ।।
सानुस्वारैस्तुर्यकूटं साद्यः सौः पञ्चमं मतम् ।।८३९।।

अथ ध्यानपुरश्चरणे—

ध्यानं पूर्वोक्तमेवास्य जपेदर्कसहस्रकम् ।
दशांशं जुहुयाद् ब्रीहीन् पयोदध्याज्यसंयुतान् ।।८४०।।

अथ मालामन्त्रस्तत्रैव—

अथातः संप्रवक्ष्यामि मालामन्त्रं वदेद्ध्रुवम् ।
वज्रकाय वज्रतुण्ड वदेत् कपिलपिङ्गलः ।।८४१।।
ऊर्ध्वकेश महाबलेति रक्तमुख कीर्त्तयेत् ।
तडिज्जिह्व महारौद्र दंष्ट्रोत्कटक हद्वयम् ।।८४२।।

करालिने महा प्रोच्य एह्येहीति पदं वदेत् ।
हि लङ्केश्वर वेत्युत्त्वा धाय महा वदेत् परम् ।।८४३।।
शेतुबन्धमहाशैलप्रवाह गगनेचर ।
एह्येहि भगवन् प्रोच्य महाबलपराक्रम ।।८४४।।
भैरवाज्ञापय प्रोच्य दीर्घपुच्छेन वेष्टय ।
महारौद्रपदं प्रोच्य दीर्घपुच्छेन वेष्टय ।।८४५।।
वैरिणं भञ्जय द्वन्द्वं हुँ फड् बाणार्कवर्णवान् ।
मुन्याद्यर्चाप्रयोगादि सर्वं सूर्यार्णवन्मतम् ।।८४६।।

साधनसमुच्चये—अथ मन्त्रान्तरम्—

नमः सबिन्दुमुद्धृत्य हनुमन्तं च ङेऽन्तकम् ।
रुद्रात्मकाय कवचमस्त्रं चेत्येकवर्णकः ।।८४७।।
मन्त्रोऽयं हरिणा पूर्वं दत्तो गाण्डीवधन्विने ।
एतस्य साधनं कृत्वा रणे विजयमाप्तवान् ।।८४८।।

मन्त्रान्तरम्—

स्वबीजं पूर्वमुच्चार्य ङेऽन्तं पवननन्दनम् ।
वह्निजायावधिः प्रोक्तो मन्त्रोऽयं सुरपादपः ।।८४९।।
षड्दीर्घभाजा बीजेन मन्त्रार्णैरङ्गकल्पना ।
स्वरैः काद्यैश्च पाद्यैश्च प्राणायामत्रयं चरेत् ।।८५०।।
ध्यायेद्रणे हनूमन्तं कपिकोटिसमन्वितम् ।
धावन्तं रावणं जेतुं दृष्ट्वा सत्वरमुत्थितम् ।।८५१।।
लक्ष्मणं च महावीरं पतितं रणभूतले ।
गुरुक्रोधं समुत्पाद्य गृहीत्वा गुरुपर्वतम् ।।८५२।।
हाहाकारैः सदर्पैश्च कम्पयन्तं जगत्त्रयम् ।
आब्रह्म च समाव्याप्य कृत्वा भीमकलेवरम् ।।८५३।।
पूजा तु वैष्णवे पीठे लक्षमेकं जपं चरेत् ।
ततः सिद्धमनुर्मन्त्री साधयेत् सिद्धिमुत्तमाम् ।।८५४।।

तथा—

ब्राह्मे मुहूर्त्ते चोत्थाय कृतनित्यक्रियो द्विजः ।
गत्वा नदीं ततः स्नात्वा तीर्थमावाह्य चाष्टधा ।।८५५।।

मूलमन्त्रं ततो जप्त्वा सिञ्चेदादित्यसङ्ख्यया ।
संपूज्य हनुमन्तं षट्सहस्रं जपमाचरेत् ।।८५६।।
एवं सप्तदिनान्ते च समायाति कपीश्वरः ।
रात्रौ त्रिभागशेषां ददाति वरमीप्सितम् ।।८५७।।
विद्यां वाऽपि धनं चापि राज्यं वा शत्रुनिग्रहम् ।
ददाति साधकेन्द्राय सत्यं सत्यं सुनिश्चितम् ।।८५८।।

इति हनुमत्प्रकरणम् ।

अथ काममन्त्रः शारदायाम्—

ब्रह्मा भूम्या समासीनः शान्तिबिन्दुविभूषितः ।
बीजं मनोभुवः प्रोक्त जगत्त्रितयमोहनम् ।।८५९।।
ऋषिः संमोहनः प्रोक्तो गायत्रं छन्द इरितम् ।
सर्वसंमोहनः साक्षाद्देवता मकरध्वजः ।।
बीजेन दीर्घयुक्तेन षडङ्गविधिरीरितः ।।८६०।।

अथ ध्यानम्—

जपारुणं रत्नविभूषणाढ्यं
मीनध्वजं चारुकृताङ्गरागम् ।
कराम्बुजैरङ्कुशमिक्षुचापं
पुष्पास्त्रपाशौ दधतं भजामि ।।८६१।।

अथ पुरश्चरणम्—

लक्षत्रयं जपेन्मन्त्रं मधुरत्रयसंयुतैः ।
पुष्पैः किंशुकजैः फुल्लैर्जुहुयात् तद्दशांशतः ।।८६२।।

अथ मन्त्रान्तरं तन्त्रान्तरे—

मान्मथं बीजमुद्धृत्य ङेऽन्तं कामं समुच्चरेत् ।
हृदयान्तः षडर्णोऽयं जगत्संमोहनक्षमः ।।८६३।।

अस्य मन्त्रस्य ऋष्यादिध्यानपर्यन्तं पूर्ववत् कार्यम् । पुरश्चरणे विशेषो यथा—

वर्णलक्षं जपेन्मन्त्रं दशांशं मधुराप्लुतैः ।
पलाशकुसुमैर्होमं कुर्याद्वा चूतपल्लवैः ।।८६४।।

इति काममन्त्रपुरश्चरणम् ।

**विभ्रत्यद्भुतभूतिभूतपवचोवैचित्र्यचित्रामृत-**
**स्रोतःशालिनि सन्निबन्धनसरित्संभेदमभ्यर्हितम् ।**
**नेपालेन्द्रनरेन्द्रनिर्मितपुरश्चर्यार्णवेऽस्मिन्नगात्**
**सद्युक्तिस्फुटमौक्तिकोत्कररुचोत्तुङ्गस्तरङ्गोऽष्टमः ।।८६५।।**

इति श्रीमन्महाराजाधिराजश्रीप्रतापसिंहसाहविरचिते पुरश्चर्यार्णवे गणेशादिमन्त्रपुरश्चरणविवेचनं नामाष्टमस्तरङ्गः सम्पन्नः ।

******



